# मनुसहिता



तट्टीकाच

मन्वर्थमुक्तावलीनाम्नी श्रीकुल्लूकभट्टेन कृता।

प्रथमोभागः।

श्रीयुत कमिटि साहेवानुज्ञया कलिकाताराजधान्यां

एडुकेशन् मुद्रा यन्त्रालये मुद्रिता।

संवत् १८८६ शकाब्दा १७५२।

ई सन् १८३०।

## ॥ मनुसंहिता ॥

---

## ॥ नमोभगवते वासुदेवाय ॥

---

गौडे नन्दनवासिनाम्नि सुजनैर्वन्द्ये वरेन्द्र्यां कुले
श्रीमद्भट्टदिवाकरस्य तनयः कुल्लूकभट्टोऽभवत्।
काश्यामुत्तरवाहिजह्नुतनयातीरे समंपण्डितैस्ते
नेयं क्रियते हिताय विदुषां मन्वर्थमुक्तावली ॥ १ ॥

सर्व्वज्ञस्य मनोरसर्व्वविदपि व्याख्यामि यद्वाङ्मयं
युक्त्या तद्बहुभिर्य्यतोमुनिवरैरेतद्बहु व्याहृतम्।
तांव्याख्यामधुनातनैरपि कृतां न्याय्यां ब्रुवाणस्य मे
भक्त्यामानववाङ्मये भवभिदे भूयादशेषेश्वरः ॥२॥

मीमांसे बहुसेविनासि सुहृदस्तर्काः समस्ताः
स्थ मे वेदान्ताः परमात्मबोधगुरवो यूयं मयो
पासिताः। जाता व्याकरणानि वीलसखिता युष्माभि
रभ्यर्थये प्राप्तायं समयोमनन्तविवृतौ साहाय्यमाल
म्व्यताम् ॥ ३ ॥

द्वेषादिदोषरहितस्य सतां हिताय मन्वर्थतत्त्व कथनाय समोद्यतस्य। दैवाद्यदि क्वचिदिह स्खलनं तथापि निस्तारको भवतु मे जगदन्तरात्मा ॥ ४ ॥

मानववृत्तावस्यां ज्ञेया व्याख्या नवा मयोक्तिन्नाः। प्राचीना अपि रुचिरा व्याख्यातॄणाम शेषाणाम् ॥ ५ ॥

॥ नमोगणेशाय ॥

मनुमेकाग्रमासीनमभिगम्य महर्षयः। प्रतिपूज्य यथान्यायमिदं वचनमब्रुवन्॥ १ ॥

मनुमेकाग्रमासीनमित्यादि ॥ अत्र महर्षीणां धर्मविषयप्रश्ने मनोः श्रूयतामित्युत्तरदानपर्य्यन्तश्लोकचतुष्टयेनैतस्य शास्त्रस्य प्रेक्षावत्प्रवृत्त्युपयुक्तानि विषयसम्बन्धप्रयोजनान्युक्तानि॥ तत्र धर्म एव विषयस्तेन सह वचनसन्दर्भरूपस्य मानवशास्त्रस्य प्रतिपाद्यप्रतिपादकलक्षणः सम्बन्धः॥ प्रमाणान्तरासन्निकृष्टस्य स्वर्गापवर्गादिसाधनस्य धर्मस्य शास्त्रैकगम्यत्वात् प्रयोजनन्तु स्वर्गापवर्गादि तस्य धर्माधीनत्वात्। यद्यपि पत्न्युपगमनादिरूपः कामोप्यत्राभिहितस्तथापि। ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदेति ऋतुकालादिनियमेन सोपि धर्म एव। एवञ्चार्थार्जनमपि ऋताम्टता

भ्याञ्जीवेदित्यादिनियमेन धर्म एवेत्यवगन्तव्यम्॥ मोचो पायत्वेनाभिहितस्यात्मज्ञानस्यापि धर्मत्वाद्धर्मविषयत्वं मोचो पदेशकत्वञ्चास्य शास्त्रस्योपपन्नम्॥ पौरुषेयत्वेऽपि मनुवाक्या नामविगीतमहाजनपरिग्रहात् श्रुत्युपग्रहाच्च वेदमूल कतया प्रामाण्यन्तथा च छान्दोग्यब्राह्मणे श्रूयते। मनुर्वै यत्किञ्चिदवदत्तद्भेषजम्भेषजताया इति। बृहस्पतिरप्याह। वेदार्थोपनिबन्धृत्वात्प्राधान्यं हि मनोःस्मृतम्। मन्वर्थविपरी ता तु या स्मृतिः सा न शस्यते। तावच्छास्त्राणि शोभन्ते तर्क व्याकरणानि च। धर्मार्थमोचोपदेष्टा मनुर्यावन्न दृश्यते। महाभारतेप्युक्तम्। पुराणं मानवोधर्मः साङ्गोवेदश्चिकित्सि तम्। आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः। विरोधि बौद्धादितर्कैर्न हन्तव्यानि। अनुकूलस्तु मीमांसादितर्कः प्रवर्त्तनीय एव। अतएव वक्ष्यति। आर्षन्धर्मोपदेशञ्च वेद शास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्म्मम्वेद नेतर इति। सकलवेदार्थादिमननान्मनुम्महर्षय इदं द्वितीयश्लोकवाक्य रूपे उच्यते अनेनेति वचनमब्रुवन्। श्लोकस्यादौ मनुनिर्द्देशो मङ्गलार्थः परमात्मनएव संसारस्थितये सार्व्वज्ञ्यैश्वर्य्यादि सम्पन्नमनुरूपेण प्रादुर्भूतत्वात्। तदभिधानस्य मङ्गलाति शयत्वात्। वक्ष्यति हि। एनमेके वदन्त्यग्निं मनुमन्ये प्रजापति मिति। एकाग्रं विषयान्तराव्याचिप्तचित्तं आसीनं सुखो

प्रविष्टं इदृशस्यैव महर्षिप्रश्नोत्तरदानयोर्योग्यत्वात्। अभि गम्य अभिमुखं गत्वा महर्षयो महात्मस्य ते ऋषयश्चेति तथा प्रतिपूज्य पूजयित्वा। यदा मनुना पूर्व्वं स्वागतासनदानादिना पूजितास्तस्य पूजां कृत्वेति प्रतिशब्दादुन्नीयते। यथान्यायं येन न्यायेन विधानेन प्रश्नः कर्त्तुं युज्यते प्रणतिभक्तिश्रद्धाति शयादिना। वक्ष्यति च। नापृष्टः कस्यचिद्ब्रूयान्नचान्यायेन पृच्छत इति। अभिगम्य प्रतिपूज्य अब्रुवन्निति क्रियात्रयेपि मनुमित्येव कर्म्म अब्रुवन्नित्यत्राकथितकर्म्मता ब्रुविधाती र्द्विकर्म्मकत्वात्॥ १ ॥

भगवन्सर्व्ववर्णानां यथावदनुपूर्व्वशः। अन्तर प्रभवानाञ्च धर्म्मान्नोवक्तुमर्हसि ॥ २ ॥

किमब्रुवन्नित्यपेक्षायामाह। भगवन्नित्यादि। ऐश्वर्य्या दीनाम्भगशब्दोवाचकः। तदुक्तं विष्णुपुराणे। ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षणाम्भग इतीङ्गना। मतुवन्तेन सम्बोधनम्भगवन्निति। वर्णा ब्राह्मण क्षत्रियवैश्यशूद्राः सर्व्वे च ते वर्णाश्चेति सर्व्ववर्णाः। तेषा मन्तरप्रभवानाञ्च सङ्कीर्णजातीनाञ्चापि अनुलोमप्रतिलोम जातीनां अम्बष्ठक्षत्तृकरणप्रभृतीनान्तेषां विजातीयमैथुन

सम्भवत्वेन खरतुरगीयसम्पर्काज्जाताश्वतरवज्जात्यन्तरत्वादवर्णशब्देनाग्रहणात्पृथक्प्रश्नः एतेनास्य शास्त्रस्य सर्व्वोपकारकत्वं दर्शितम्। यथावत् योधर्म्मोयस्य वर्णस्य येन प्रकारेणानुष्ठेयस्तेनाश्रमधर्म्मादीनामपि प्रश्नः। अनुपूर्व्वशः क्रमेण जातकर्म्म तदनु नामधेयमित्यादिना धर्म्मान्नोऽस्मभ्यं वक्तुमर्हसि सर्व्वधर्म्माभिधाने योग्योभवसि तस्माद्ब्रूहीत्यध्येषणा अध्याहार्य्यम्। यत्तु ब्रह्महत्यादिरूपाधर्म्मकीर्त्तनमप्यत्र तत्प्रायश्चित्तविधिरूपधर्म्मविषयत्वेन न स्वतन्त्रतया॥ २॥

त्वमेकोह्यस्य सर्व्वस्य विधानस्य स्वयम्भुवः।
अचिन्त्यस्याप्रमेयस्य कार्य्यतत्त्वार्थवित्प्रभो॥ ३॥

उक्तधर्म्माभिधानयोग्यत्वे हेतुमाह। त्वमेक इत्यादि। हि यस्मात्त्वमेकोऽद्वितीयः अस्य सर्व्वस्य प्रत्यक्षश्रुतस्य स्मृत्याद्यनुमेयस्य च विधानस्य विधीयन्तेऽनेन कर्म्माण्यग्निहोत्रादीनीति विधानं वेदस्तस्य स्वयम्भुवोऽपौरुषेयस्याचिन्त्यस्य बहुशाखाविभिन्नत्वादियत्तया परिच्छेत्तुमयोग्यस्य। अप्रमेयस्य मीमांसादिन्यायनिरपेक्षतयाऽनवगम्यमानप्रमेयस्य कार्य्यमनुष्ठेयमग्निष्टोमादि तत्त्वं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवेदान्तवेद्यम्। तदेवार्थः प्रतिपाद्यभागस्तं वेत्तीति

पदेशमिव वर्णयन्ति। अतएव कर्माण्यपि जैमिनिः फलार्थत्वादिति जैमिनेरेव सूत्रं। अतएव तदुपर्य्यपि बादरायणः सम्भवादिति बादरायणस्यैव शारीरकसूत्रम्। अथवा मनूपदिष्टा धर्मास्तच्छिष्येण भृगुणा तदाज्ञयोपनिबद्धाः। अतएव वक्ष्यति एतदोयम्भृगुः शास्त्रं श्रावयिष्यत्यशेषतदृत्यतो युज्यतएव स पृष्टः प्रत्युवाच इति। मनूपदिष्टधर्मोपनिबद्धत्वाच्च मानवीयसंहितेति व्यपदेशः॥ ४॥

आसीदिदन्तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयम्प्रसुप्तमिव सर्व्वतः॥ ५॥

श्रूयतामिति उपक्षिप्तमर्थमाह। आसीदिदमिति। ननु मुनीनान्धर्मविषयप्रश्ने तत्रैवोत्तरन्दातुमुचितं तत्कोयमप्रस्तुतः प्रलयदशायां कारणलीनस्य जगतः सृष्टिप्रकरणावतारः। अत्र मेधातिथिः समादधे शास्त्रस्य महाप्रयोजनत्वमनेन सर्व्वेण प्रतिपाद्यते। ब्रह्माद्याः स्थावरपर्य्यन्ताः संसारगतयोधर्माधर्मनिमित्ता अत्र प्रतिपाद्यन्ते। तमसा बहुरूपेण वेष्टिताः कर्महेतुनेति वक्ष्यति च एतादृशस्य जीवस्य गतीः स्वेनैव चेतना। धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनइति। ततश्च निरतिशयैश्वर्य्यहेतुर्धर्मस्तद्विपरीतश्चाधर्मः

तद्रूपपरिज्ञानार्थमिदं शास्त्रं महाप्रयोजनमध्येतव्यमित्या
शास्त्रार्थतात्पर्य्यमित्यन्तेन। गोविन्दराजस्यापीदमेव समा
धानम्। तन्मनोहर। धर्म्मस्वरूपप्रश्ने यद्धर्मस्य फलकथनं
तदप्यप्रस्तुतम् धर्म्माश्रिमाचाद्धि शास्त्रमर्थवत्। किन्तु कर्म्म
णाम्फलनिर्वृत्तिं शंसेत्युक्ते महर्षिभिः। द्वादशे वक्ष्यमाणा
सावक्तुमादौ न युज्यते। इदन्तु वदामः। मुनीनान्धर्म्म
विषये प्रश्ने जगत्कारणतया ब्रह्मप्रतिपादनन्धर्म्मकथन
मेवेति नाप्रस्तुताभिधानम्। आत्मज्ञानस्यापि धर्म्मरूपत्वा
न्मनुनैव धृतिः क्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या
सत्यमक्रोधो दशकन्धर्म्मलक्षणमिति दशविधधर्म्माभिधाने
विद्याशब्दवाच्यमात्मज्ञानं धर्म्मत्वेनोक्तम्। महाभारतेपि।
आत्मज्ञानन्तितिक्षा च धर्म्मः साधारणो नृपेत्यात्मज्ञान
न्धर्म्मत्वेनोक्तम्। याज्ञवल्क्येन तु परमधर्म्मत्वेन यदाह।
इज्याचारदमाहिंसा दानं स्वाध्यायकर्म्म च। अयन्तु
परमोधर्म्मोयद्योगेनात्मदर्शनमिति। जगत्कारणत्वञ्च ब्रह्म
लक्षणं अतएव ब्रह्ममीमांसायां अथातो ब्रह्मजिज्ञासेति सूत्रा
नन्तरं ब्रह्मलक्षणकथनाय जन्माद्यस्य यत इति द्वितीयसूत्रम्भ
गवान् बादरायणः प्रणिनाय अस्य जगतो यतो जन्मादि सृष्टि
स्थितिप्रलयमिति सूत्रार्थः। तथा च श्रुतिः। यतोवा इमानि
भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति
तद्विजिज्ञासस्व तद्ब्रह्मेति। प्राधान्येन जगदुत्पत्तिस्थितिलयनि

मित्तोपादानब्रह्मप्रतिपादनं आत्मज्ञानरूपपरमधर्मावग
माय प्रथमाध्यायं कृत्वा संस्कारादिरूपन्धर्मन्तदङ्गतया द्विती
याध्यायादिक्रमेण वक्ष्यतीति न कश्चिद्विरोधः। किञ्च प्रश्नोत्तर
वाक्यानामिव स्वरसादयं मदुक्तोऽर्थो लभ्यते तथाहि। धर्मपृष्टे
मनुर्ब्रह्म जगतः कारणं ब्रुवन्। आत्मज्ञानम्परन्धर्मं वित्तेति
व्यक्तमुक्तवान्। प्राधान्यात्प्रथमाध्याये साधु तस्यैव कीर्त्तनम्।
धर्मोऽन्यस्तु तदङ्गत्वाद्युक्तोवक्तुमनन्तरम्। इदमित्यध्यक्षेण
सर्व्वस्य प्रतिभासमानत्वात् जगन्निर्द्दिश्यते। इदञ्जगत्तमोभूत
न्तमसि स्थितं लीनमासीत्तमःशब्देन गुणवृत्त्या प्रकृतिर्निर्द्दि
श्यते तमइव तमः। यथा तमसि लीनाः पदार्था अध्यक्षेण न
प्रकाश्यन्ते एवम्प्रकृतिलीना अपिभावा नावगम्यन्ते इति गुण
योगः। प्रलयकाले सूक्ष्मरूपतया प्रकृतौ लीनमासीदित्यर्थः।
तथा च श्रुतिः। तमआसीत्तमसागूढमग्रइति। प्रकृतिरपि
ब्रह्मात्मना अव्याकृतासीत् अतएव अप्रज्ञातमप्रत्यक्षं सकल
प्रमाणश्रेष्ठतया प्रत्यक्षगोचरः प्रज्ञातइत्युच्यते तन्न भवती
त्यप्रज्ञातं अलक्षणमननुमेयं लक्ष्यतेऽनेनेति लक्षणं लिङ्गन्त
दस्य नास्तीति अलक्षणं अप्रतर्क्यन्तर्कयितुमशक्यं तदानीं
वाचकस्थूलशब्दाभावात् शब्दतोप्यविज्ञेयं एतदेव च प्रमा
णत्रयं सतर्कं द्वादशाध्याये मनुनाभ्युपगतं अतएवाविज्ञेयमि
त्यर्थापत्त्याद्यगोचरमिति धरणीधरस्यापि व्याख्यानम्।
नच नासीदेवेति वाच्यं तदानीं श्रुतिसिद्धत्वात्। तथाच

श्रूयते। सदेदमसद्व्याकृतमासीत् छान्दोग्योपनिषच्च सदेव सोम्येदमग्र आसीत् इदञ्जगत्सदेवासीद्ब्रह्मात्मना आसी दित्यर्थः। सच्छब्दो ब्रह्मवाचकः अतएव प्रसुप्तमिव सर्वतः प्रथमार्थेतसिः स्वकार्याक्षममित्यर्थः॥ ५॥

ततः स्वयम्भूर्भगवानव्यक्तोव्यञ्जयन्निदम्। महा भूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः॥ ६॥

अथ किमभूदित्याह। ततः स्वयम्भूर्भगवानित्यादि। ततः प्रलयावसानानन्तरं स्वयम्भूः परमात्मा स्वयम्भवति स्वेच्छया शरीरपरिग्रहं करोति नलितरजीववत्कर्माधत्तदेहः। तथाच श्रुतिः। स एकधा भवति द्विधा भवतीति। भगवानै श्वर्यादिसम्पन्नः अव्यक्तोवाह्यकरणागोचरः योगाभ्यासावसेय इति यावत् इदं महाभूतादि आकाशादीनि महाभूतानि आदिग्रहणात् महदादीनि च व्यञ्जयन् अव्यक्तावस्थम्प्रथमं सूक्ष्मरूपेणततःस्थूलरूपेणप्रकाशयन्वृत्तौजाः वृत्तमप्रतिहत मुच्यते अतएव वृत्तिसर्गतायनेषु क्रम इत्यत्र वृत्तिरप्रतिघात इति व्याख्यातञ्जयादित्येन। वृत्तमप्रतिहतमोजः सृष्टिसा मर्थ्यं यस्य स तथा। तमोनुदः प्रकृतिप्रेरकः। तदुक्तम्भगव द्गीतायां। मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति। प्रादुरासीत्प्रकाशितोबभूव। तमोनुदः प्रलयावस्थाध्वंसक इति तु मेधातिथिगोविन्दराजौ॥ ६॥

योसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः।
सर्व्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥ ७॥

योसाविति। योसाविति सर्व्वनामद्वयेन सकललोकवेद पुराणेतिहासादिप्रसिद्धम्परमात्मानं निर्दिशति। अतीन्द्रिय ग्राह्यः इन्द्रियमतीत्य वर्त्ततइत्यतीन्द्रियं मनस्तद्ग्राह्य इत्यर्थः यदाह व्यासः। नैवासौ चक्षुषा ग्राह्योनच शिष्टैरपीन्द्रियैः। मनसातु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः॥ सूक्ष्मोवहिरिन्द्रियागोचरः अव्यक्तोव्यक्तिरवयवः तद्रहितः सनातनोनित्यः सर्व्वभूतमयः सर्व्वभूतात्मा अतएवाचिन्त्यः इयत्तया परिच्छेत्तुमशक्यः सएव स्वयं उद्बभौ महदादिकार्य्यरूपतया प्रादुर्बभूव उत्पुर्व्वोभातिः प्रादुर्भावे वर्त्तते धातूनामनेकार्थत्वात्॥ ७ ॥

सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।
अपएव ससर्ज्जादौ तासु वीजमवासृजत्॥ ८॥

सोभिध्यायेति। स परमात्मा नानाविधाः प्रजाः सिसृक्षुरभिध्याय आपोजायन्तामित्यभिध्यानमात्रेणअपएव ससर्ज। अभिध्यानपूर्व्विकां सृष्टिं वदतोमनोः प्रकृतिरेवाचेतनाऽस्य

तन्मा परिणमत इत्ययमर्थोन संमतः। किन्तु ब्रह्मैवाव्याकृत शक्यात्मना जगत्कारणमिति निदर्शनवेदान्तसिद्धान्त एवा भिमतः प्रतिभाति तथाच छान्दोग्योपनिषत्। तदैक्षत बहुस्यां प्रजायेयेति। अतएव शारीरकसूत्रकृता व्यासेन सिद्धान्तितं ईक्षतेर्नाशब्दमिति। ईक्षतेरीक्षणश्रवणात् न प्रधा नञ्जगत्कारणं अशब्दं न विद्यते शब्दः श्रुतिर्यस्य तदशब्दमिति सूत्रार्थः। स्वाच्छरीरात् अव्याकृतरूपात् अव्याकृतमेव भगवद्भास्करीयवेदान्तदर्शने प्रकृतिस्तदेव च तस्य शरीरं अव्याकृतशब्देन पञ्चभूतबुद्धीन्द्रियकर्मेन्द्रियप्राणमनःकर्मा विद्यावासना एव सूक्ष्मरूपतया शक्त्यात्मना स्थिता अभिधीयन्ते अव्याकृतस्यच ब्रह्मणा सह भेदाभेदस्वीकारात् ब्रह्माद्वैतं शक्त्यात्मना च ब्रह्म जगद्रूपतया परिणमत इत्युभयमप्युपपद्यते। आदौ स्वकार्य्यभूमिब्रह्माण्डसृष्टेः प्राक् अपां सृष्टिर्न्नैयं महद हङ्कारतन्मात्रक्रमेण बोद्धव्या महाभूतादिव्यञ्जयन्निति पूर्व्वाभिधानात् अनन्तरमपि महदादिसृष्टेर्व्वक्ष्यमाणत्वात्। तास्वपु वीजंशक्तिरूपं आरोपितवान्॥ ८ ॥

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयम्ब्रह्मा सर्व्वलोकपितामहः॥ ९ ॥

तदण्डमभवद्धैममिति। तदीश्वरपरमेश्वरेच्छया हैममण्ड मभवत् हैममिव हैमं शुद्धिगुणयोगात् नतु हैममेव तदीयैक शकलेन भूमिनिर्माणस्य वच्यमाणत्वात् भूमेश्चाहैमत्वस्य प्रत्यक्षत्वादुपचाराश्रयणं। सहस्रांशुरादित्यस्तत्तुल्यप्रभं तस्मिन्नण्डे हिरण्यगर्भोजातवान् येन पूर्व्वजन्मनि हिरण्यगर्भो ऽहमस्मीति भेदाभेदभावनया परमेश्वरोपासना कृता तदीयं लिङ्गशरीरावच्छिन्नजीवमनुप्रविश्य स्वयं परमात्मैव हिरण्य गर्भरूपतया प्रादुर्भूतः। सर्व्वलोकानां पितामहोजनकः सर्व्वलोकपितामहइति वा तस्य नाम ॥ ९ ॥

आपोनाराइति प्रोक्ता आपोवै नरसूनवः।
ता यदस्यायनं पूर्व्वं तेन नारायणः स्मृतः॥ १० ॥

इदानीमागमप्रसिद्धनारायणशब्दार्थनिर्व्वचनेन उक्तमे वार्थं द्रढयति आपोनाराइत्यादि। आपोनाराशब्देनोच्यन्ते अपां नाराशब्दस्याप्रसिद्धेस्तदर्थमाह यतस्ता नराख्यस्य पर मात्मनः सूनवोऽपत्यानि तस्येदमित्यण्प्रत्ययः। यद्यपि अणि कृते ङीप्प्रत्ययः प्राप्तस्तथापि छान्दसलक्षणैरपि स्मृतिषु व्यवहारात्सर्वे विधयश्छन्दसि विकल्प्यन्तइति पाक्षिकोङीप् प्रत्ययस्तस्याभावपक्षे सामान्यलक्षणप्राप्ते टापि कृते नारा

इति रूपसिद्धिः। आपोऽस्य परमात्मनो ब्रह्मरूपेणावस्थितस्य पूर्व्वमयनमाश्रय इत्यसौ नारायण इत्याम्नातः। गोविन्दराजेन तु आपोनरा इति पठितं व्याख्यातञ्च नरायण इतिप्राप्ते अन्येषामपि दृश्यत इति दीर्घत्वेन नारायण इति रूपम्। अन्ये त्वापोनारा इति पठन्ति ॥ १० ॥

यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥ ११ ॥

यत्तत्कारणमव्यक्तमित्यादि। यत्तदिति सर्व्वनामभ्यां लोकवेदादिसर्व्वप्रसिद्धम्परमात्मानं निर्दिशति कारणं सर्व्वोत्पत्तिमतां अव्यक्तं वहिरिन्द्रियागोचरं नित्यं उत्पत्तिविनाशरहितं। वेदान्तसिद्धत्वात् सत्स्वभावं प्रत्यक्षाद्यगोचरत्वात् असत्स्वभावमिव। अथवा सद्भावजातमसदभावः तयोरात्मभूतम्। तथाच श्रुतिः। ऐतदात्म्यमिदं सर्व्वमिति। तद्विसृष्टः तेनोत्पादितः स पुरुषः सर्व्वत्र ब्रह्मेति कीर्त्यते ॥ ११ ॥

तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम्।
स्वयमेवात्मनो ध्यानात्तदण्डमकरोद्द्विधा ॥ १२ ॥

तस्मिन्नण्डे स भगवानित्यादि । तस्मिन्पूर्व्वोक्तेऽण्डे स ब्रह्मा वक्ष्यमाणब्रह्ममानेन सम्वत्सरमुषित्वा स्थित्वा आत्मनैवाण्डं द्विधा भवत्विति आत्मगतध्यानमात्रेण तदण्डं द्विखण्डं कृतवान्॥ १२ ॥

ताभ्यां स शकलाभ्याञ्च दिवम्भूमिञ्च निर्ममे ।
मध्ये व्योमदिशश्चाष्टावपां स्थानञ्च शाश्वतम् ॥ १३ ॥

ताभ्यां स शकलाभ्याञ्चेत्यादि । शकलं खण्डं ताभ्यामण्डशकलाभ्यां उत्तरेण दिवं स्वर्लोकं अधरेण भूर्लोकं उभयो र्मध्ये आकाशन्दिशस्त्वन्तरालदिग्भिः सहाष्टौ समुद्राख्यं अपां स्थानं स्थिरं निर्मितवान् ॥ १३ ॥

उद्ववर्हात्मनश्चैव मनः सदसदात्मकम् । मन
सश्चाप्यहङ्कारमभिमन्तारमीश्वरम् ॥ १४ ॥

इदानीं महदादिक्रमेणैव जगन्निर्माणमिति दर्शयितुन्तत्सृष्टिमाह । उद्ववर्हात्मनश्चैवेत्यादि । ब्रह्मा आत्मनः परमात्मनः सकाशात्तेन रूपेण मनउद्धृतवान् परमात्मन एव ब्रह्मस्वरूपेणोत्पन्नत्वात्परमात्मन एव च मनःसृष्टि

वेदान्तदर्शनेन प्रधानात्। तथाच श्रुतिः। एतस्माज्जायते प्राणोमनः सर्व्वेन्द्रियाणिच। खंवायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। मनस्य श्रुतिसिद्धत्वात् युगपज्ज्ञानानुत्पत्तिलिङ्गाच्च सत् अप्रत्यक्षत्वादसदिति मनसः पूर्व्वमहङ्कारतत्त्वं अहमित्यभिमानाख्यकार्य्ययुक्तं ईश्वरं स्वकार्य्यकरणक्षमम्॥ १४॥

महान्तमेव चात्मानं सर्व्वाणि त्रिगुणानि च।
विषयाणां ग्रहीतॄणि शनैःपञ्चेन्द्रियाणि च॥ १५॥

महान्तमेव चात्मानमित्यादि। महान्तमिति महदाख्यतत्त्वं अहङ्कारात्पूर्व्वम्परमात्मन एवाध्याहतशक्तिरूपप्रकृतिसहितादुद्भूतवान् आत्मनउत्पन्नत्वात् आत्मानमात्मोपकारकत्वाद्वा यान्यभिहितानि अभिधास्यन्ते च तान्युत्पत्तिमन्ति सर्व्वाणि सत्त्वरजस्तमोगुणयुक्तानि। विषयाणां शब्दस्पर्शरूपरसगन्धानां ग्राहकाणि शनैः क्रमेण वेदान्तसिद्धेन श्रोत्रादीनि द्वितीयाध्यायवक्तव्यानि पञ्च बुद्धीन्द्रियाणि चशब्दात्पायु पाय्वादीनि कर्म्मेन्द्रियाणि शब्दतन्मात्रादीनि च पञ्चोत्पादितवान्। नन्वभिध्यानपूर्व्वकसृष्ट्यभिधानाद्वेदान्तसिद्धान्त एव मनोरभिमतइति प्रागुक्तन्तन्न सङ्गच्छते। इदानीं महदादिक्रमेण सृष्ट्यभिधानाद्वेदान्तदर्शनेन च परमात्मन एवाकाशादि

क्रमेण सृष्टिरुक्ता तथा च तैत्तिरीयोपनिषत्। तस्माद्वा एतस्मा दात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवीति। उच्यते। प्रकृतितोमहदादिक्रमेण सृष्टि रिति भगवद्भास्करीयदर्शनेप्युपपद्यतइति तद्विरोध्याचख्यते। अव्याकृतमेव प्रकृतिरिष्यते तस्य च सृष्ट्युन्मुखत्वं सृष्ट्याद्यकाल योगरूपन्तदेव महत्तत्त्वं ततोवक्ष्यामिति अभिमानात्मके क्षणकालयोगित्वमव्याकृतस्याहङ्कारतत्त्वम्। तत आकाशादि पञ्चभूतसूक्ष्माणि क्रमेणोत्पन्नानि पञ्चतन्मात्राणि ततस्तेभ्यएव स्थूलान्युत्पन्नानि पञ्च महाभूतानि सूक्ष्मस्थूलक्रमेणैव कार्य्यो दयदर्शनादिति न विरोधः। अव्याकृतगुणत्वेपि सत्त्वरजस्तमसां सर्व्वाणि त्रिगुणानीत्युपपद्यते। भवतु वा सत्त्वरजस्तमःसमता रूपैव मूलप्रकृतिः भवन्तु च तत्त्वान्तराण्येव महदहङ्कार तन्मात्राणि तथापि प्रकृतिर्ब्रह्मणोऽनन्येति मनोःस्वरसः। यतोवक्ष्यति। सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनीति। तथा एवं यः सर्व्वभूतेषु पश्यत्यात्मानमात्मना। स सर्व्वसमता मेत्य ब्रह्माभ्येति परम्पद मिति ॥ १५ ॥

तेषान्त्ववयवान्सूक्ष्मान् षण्णामप्यमितौजसाम्।
सन्निवेश्यात्ममात्रासु सर्व्वभूतानि निर्म्ममे ॥ १६ ॥

तेषाम्बयवान्सूक्ष्मानित्यादि। तेषां षण्णाम्पूर्व्वोक्ता हङ्कारस्य तन्मात्राणाञ्च ये सूक्ष्माअवयवास्तान् आत्ममात्रासु षण्णां स्वविकारेषु योजयित्वा मनुष्यतिर्य्यक्स्थावरादीनि सर्व्वभूतानि परमात्मा निर्म्मितवान् तच्च तन्मात्राणां विकारः पञ्च महाभूतानि अहङ्कारस्येन्द्रियाणि पृथिव्यादिभूतेषु शरीररूपतया परिणतेषु तन्मात्राहङ्कारयोजनां कृत्वा सकलस्य कार्य्यजातस्य निर्म्माणं अतएवामितौजसां अनन्तकार्य्यनिर्म्माणेनातिवीर्य्यशालिनाम् ॥ १६ ॥

यन्मूर्त्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट्।
तस्माच्छरीरमित्याहुस्तस्य मूर्त्तिं मनीषिणः ॥ १७ ॥

यन्मूर्त्त्यवयवाः सूक्ष्मा इत्यादि ॥ यस्मान्मूर्त्तिः शरीरन्तत्सम्पादकाअवयवाः सूक्ष्मास्तन्मात्राहङ्काररूपाः षट् तस्य ब्रह्मणः सप्रकृतिकस्य इमानि वक्ष्यमाणानि भूतानीन्द्रियाणि च पूर्व्वोक्तानि कार्य्यत्वेनाश्रयन्ति तन्मात्रेभ्योभूतोत्पत्तेः अहङ्काराच्च इन्द्रियोत्पत्तेः। तथाच पठन्ति प्रकृतेर्महांस्ततो हङ्कारस्तस्माद्गणश्च षोड़शकः। तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानि। तस्मात्तस्य ब्रह्मणोया मूर्त्तिः स्वभावस्तान्तथा परिणतामिन्द्रियादिशालिनीं लोकाः शरीरमिति वदन्ति

षड्भाश्रयणाच्छरीरं इति शरीरनिर्व्वचनेनानेन पर्व्वोक्तो व्युत्पत्तिक्रमएव दृढीकृतः ॥ १७ ॥

तदा विशन्ति भूतानि महान्ति सह कर्म्मभिः।
मनश्चावयवैः सूक्ष्मैः सर्व्वभूतकृदव्ययम् ॥ १८ ॥

तदा विशन्ति भूतानीत्यादि। पूर्व्वश्लोके तस्येति प्रकृतम्ब्रह्माच तदिति परामृश्यते तद्ब्रह्म शब्दादिपञ्चतन्मात्रात्मनावस्थितं महाभूतान्याकाशादीनि आविशन्ति तेभ्यउत्पद्यन्ते सह कर्म्मभिः स्वकार्य्यैस्तत्राकाशस्यावकाशदानं कर्म्म वायोर्व्यूहनं विन्यासरूपं तेजसः पाकोऽपांसंग्रहणम्पिण्डीकरणरूपम्पृथिव्याधारणं। अहङ्कारात्मनावस्थितम्ब्रह्म मन आविशत्यहङ्कारादुत्पद्यत इत्यर्थः। अवयवैः स्वकार्य्यैः शुभाशुभसङ्कल्पसुखदुःखादिरूपैः सूक्ष्मैर्बहिरिन्द्रियागोचरैः सर्व्वभूतकृत्सर्व्वोत्पत्तिनिमित्तं सर्व्वोजन्यशुभाशुभकर्म्मप्रभवत्वाज्जगतः अव्ययमविनाशि ॥ १८

तेषामिदन्तु सप्तानाम्पुरुषाणां महौजसाम्।
सूक्ष्माभ्योमर्त्तिमात्राभ्यः सम्भवत्यव्ययाद्व्ययम् ॥ १९ ॥

तथासिद्धन्तु सप्तानामित्यादि। तेषां पूर्व्वप्रकृतीनां महदहङ्कारतन्मात्राणां सप्तसङ्ख्यानाम्पुरुषादात्मनउत्पन्नत्वात् तद्वृत्तियाच्छलाच्च पुरुषाणां महौजसां स्वकार्य्यसम्पादनेन वीर्य्यवतां सूक्ष्मा या मूर्त्तिमात्राः शरीरसम्पादकभागास्ताभ्य इदं जगत् नश्वरं सम्भवत्यनश्वरात् यत्कार्य्यं तद्विनाशि स्वकारणे लीयते कारणन्तु कार्य्यापेक्षया स्थिरम्परमकारणन्तु ब्रह्म नित्यमुपासनीयमित्येतद्दर्शयितुमयमनुवादः ॥१९॥

आद्याद्यस्य गुणन्त्वेषामवाप्नोति परःपरः। योयो यावतिथस्त्वेषां स स तावद्गुणः स्मृतः ॥ २० ॥

आद्याद्यस्य गुणं तेषामित्यादि। एषामिति पूर्व्वतरश्लोके तदाविशन्ति भूतानीत्यत्र भूतानाम्परामर्षः। तेषाञ्चाकाशादिक्रमेणोत्पत्तिक्रमः। शब्दादिगुणवत्त्वाच्च वक्ष्यते। तत्राद्याद्यस्याकाशादेर्गुणं शब्दादिकं वाय्वादिः परःपरःप्राप्नोति। एतदेव स्पष्टयति योयदिति येषां मध्ये योयोयावताम्पूरणा यावतिथः वतोरियुक् स स द्वितीयादिः द्वितीयोद्विगुणः तृतीयस्त्रिगुण इत्येवमादिर्मन्वादिभिःस्मृतः। एतेनैतदुक्तं भवति आकाशस्य शब्दोगुणः वायोः शब्दस्पर्शौ तेजसःशब्दस्पर्शरूपाणि अपां शब्दस्पर्शरूपरसाः भूमेः शब्दस्पर्शरूपरसगन्धाः। अत्र यद्यपि

नित्यवीप्सयोरिति द्विर्वचनेनाद्यस्याद्यस्येति प्राप्तन्तथापि स्मृतीनां छन्दःसमानविषयत्वात् सुपां सुलुगिति प्रथमाद्यस्य सुप् लुक् तेनाद्याद्यस्येति रूपसिद्धिः ॥ २० ॥

सर्व्वेषान्तु स नामानि कर्म्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्म्ममे ॥ २१ ॥

सर्व्वेषान्तु स नामानीत्यादि। स परमात्मा हिरण्यगर्भ रूपेणावस्थितः सर्व्वेषां नामानि गोजातेर्गौरिति अश्वजाते रश्व इति। कर्म्माणि ब्राह्मणस्याध्ययनादीनि क्षत्रियस्य प्रजार चादीनि पृथक् पृथक् यस्य पूर्व्वकल्पे यान्यभूवन् आदौ सृष्ट्यादौ वेदशब्देभ्य एवावगम्य निर्मितवान्। भगवता व्यासेनापि वेद मीमांसायां वेदपूर्व्विकैव जगत्सृष्टिर्व्युत्पादिता। तथाच शारीरकसूत्रं। शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्यां। अस्यार्थः। देवतानां विग्रहवत्त्वे वैदिके वस्वादिशब्दे देवता वाचिनि विरोधः स्यात् वेदस्यादिमत्त्वप्रसङ्गादिति चेन्नास्ति विरोधः। कस्मादतः शब्दादेव जगतः प्रभवादुत्पत्तेः प्रलय कालेऽपि सूक्ष्मरूपेण परमात्मनि वेदराशिः स्थितः स इह कल्पादौ हिरण्यगर्भस्य परमात्मन एव प्रथमदेहिमूर्त्तेर्मन स्यवस्थान्तरमनापन्नः सुप्तप्रबुद्धस्येव प्रादुर्भवति तेन प्रकी

पयानीयेन सुरनरतिर्य्यगादिप्रविभक्तं जगत् अभिधेय भूतं निर्म्मिमीते कथमिदङ्गम्यते प्रत्यचानुमानाभ्यां श्रुतिस्मृति भ्यामित्यर्थः प्रत्यचं श्रुतिरनपेचत्वात्। अनुमानं स्मृतिरनु मीयमानश्रुतिसापेचत्वात्। तथाच श्रुतिः। एत इतिं वै प्रजा पतिर्द्देवानसृजतासृजदयमिति मनुष्यानिन्दव इति पितॄन् तिरःपवित्रमिति ग्रहानाव सव इति स्तोत्रं विश्वानीति शस्त्र मितिसौभगेत्यन्याः प्रजाः। स्मृतिस्तु सर्व्वेषान्तु सनामानी त्यादिका मन्वादिप्रणीता एव। पृथक्संस्थाश्चेति लौकिकीश्च व्यवस्थाः कुलालस्य घटनिर्माणं कुविन्दस्य पटनिर्माण मित्यादिकाविभागेन निर्मितवान्॥ २१॥

कर्म्मात्मनाञ्च देवानां सोऽसृजत्प्राणिनाम्प्रभुः।
साध्यानाञ्च गणं सूक्ष्मं यज्ञञ्चैव सनातनं॥ २२॥

कर्म्मात्मनाञ्च देवानामित्यादि। स ब्रह्मा देवानां गणम सृजत्। प्राणिनामिन्द्रादीनां कर्म्माणि आत्मा स्वभावो येषान्ते षामप्राणिनाञ्च ग्रावादीनान्देवानां साध्यानाञ्च देवविशेषाणां समूहं यज्ञञ्च ज्योतिष्टोमादिकं कल्पान्तरेप्यनुमीयमानत्वा न्नित्यं साध्यानाञ्च गणस्य पृथग्वचनं सूक्ष्मत्वात्॥ २२॥

अग्निवायुरविभ्यस्तु त्रयम्ब्रह्म सनातनम्। दुदोह यज्ञसिद्ध्यर्थमृग्यजुः सामलक्षणम् ॥ २३ ॥

अग्निवायुरविभ्यस्त्वित्यादि। ब्रह्मा ऋग्यजुःसामसंज्ञं वेदत्रयं अग्निवायुरविभ्य आकृष्टवान् सनातनं नित्यं वेदापौरुषेयत्वपक्ष एवं मनोरभिमतः पूर्व्वकल्पे ये वेदास्त एव परमात्ममूर्त्तेर्ब्रह्मणः सर्व्वज्ञस्य स्मृत्यारूढाः। तानेव कल्पादौ अग्निवायुरविभ्य आचकर्ष श्रौतस्त्वायमर्थो न शङ्कनीयः। तथा च श्रुतिः अग्नेरृग्वेदो वायोर्यजुर्वेदः आदित्यात्सामवेद इति आकर्षणार्थत्वाद्दुहिधातोर्नाग्निवायुरवीणामकथितकर्म्मता किन्त्वपादानतैव यज्ञसिद्ध्यर्थन्त्रयीसम्पाद्यत्वात् यज्ञानां। आपीनस्थक्षीरवत् विद्यमानानामेव वेदानामभिव्यक्तिप्रदर्शनार्थं आकर्षणवाचको गौणो दुहिः प्रयुक्तः ॥ २३ ॥

कालङ्कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा। सरितः सागरान् शैलान् समानि विषमाणि च ॥ २४ ॥

कालं कालविभक्तीश्चेत्यादि। अत्र ससर्जेत्युत्तरश्लोकवर्त्तिनी क्रिया सम्बध्यते आदित्यादिक्रियाप्रचयरूपं कालङ्कालविभक्तीर्मासर्त्त्वयनाद्याः नक्षत्राणि कृत्तिकादीनि ग्रहान् सूर्य्यादीन्

सरितोनदीः सागरान् समुद्रान् शैलान् पर्व्वतान् समानि सम स्थानानि विषमाणि उच्चनीचरूपाणि ॥ २४ ॥

तपोवाचं रतिञ्चैव कामञ्च क्रोधमेव च। सृष्टिं
ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः ॥ २५ ॥

तपोवाचमित्यादि। तपः प्राजापत्यादि वाचं वाणीं रतिञ्चेतः परितोषं काममिच्छां क्रोधञ्चेतोविकारं इमां एतल्लोको काम्यूर्व्वलोकोक्ताञ्च सृष्टिञ्चकार सृज्यतइति सृष्टिः कर्म्मणि क्तिन् इमाः प्रजावच्यमाणदैवादिकाः कर्त्तुमिच्छन् ॥ २५ ॥

कर्म्मणाञ्च विवेकार्थं धर्म्माधर्म्मौ व्यवेचयत्।
द्वन्द्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः ॥ २६ ॥

कर्म्मणाञ्चेति। धर्म्मोयज्ञादिः स कर्त्तव्यः अधर्म्मोब्रह्म वधादिः स न कर्त्तव्यः इति कर्म्मणां विभागाय धर्म्माधर्म्मौ व्यवे चयत् पृथक्त्वेनाभ्यधात् धर्म्मस्य फलं सुखं अधर्म्मस्य फलं दुःखं धर्म्माधर्म्मफलभूतैर्द्वन्द्वैः परस्परविरुद्धैः सुखदुःखादिभिरिमाः प्रजाःयोजितवान् आदिग्रहणात् कामक्रोधरागद्वेषक्षुत्पिपासा शोकमोहादिभिः ॥ २६ ॥

अण्व्यो मात्रा विनाशिन्यो दशार्द्धानान्तु याः स्मृताः।
ताभिः सार्द्धमिदं सर्व्वं सम्भवत्यनुपूर्व्वशः ॥ २७ ॥

अण्व्यो मात्रेति। दशार्द्धानाम्पञ्चानां महाभूतानां याः सूक्ष्माः पञ्चतन्मात्ररूपा विनाशिन्यः पञ्चमहाभूतरूपतया विपरिणामिन्यः ताभिः सह उक्तं वक्ष्यमाणञ्चेदं सर्व्वमुत्पद्यते अनुपूर्व्वशः क्रमेण सूक्ष्मात् स्थूलं स्थूलात् स्थूलतरमित्यनेन। सर्व्वशक्तेर्ब्रह्मणो मानससृष्टिः कदाचित्तत्त्वनिरपेक्षा स्यादितीमां शङ्कामपनिनीषन् तद्वारेणैवेयं सृष्टिरिति मध्ये पुनः पूर्व्वोक्तं स्मारितवान् ॥ २७ ॥

यन्तु कर्म्मणि यस्मिन्स न्ययुङ्क्त प्रथमम्प्रभुः। स तदेव स्वयम्भेजे सृज्यमानः पुनः पुनः ॥ २८ ॥

यन्तु कर्म्मणीति। स प्रजापतिर्य्यं जातिविशेषं व्याघ्रादिं यस्यां क्रियायां हरिणमारणादिकायां सृष्ट्यादौ नियुक्तवान् स जातिविशेषः पुनः पुनरपि सृज्यमानः स्वकर्म्मवशेन तदेवाचरितवान्। एतेन प्राणिकर्म्मसापेक्षप्रजापतेरुत्तमाधमक्रियासम्बन्धमाणां न रागद्वेषाधीनमिति दर्शितम्। अतएव वक्ष्यति कर्म्मणां सर्व्वयनाम्बियोगात् सृष्टं स्थावरजङ्गममिति ॥ २८ ॥

हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते। यद्यस्य सोऽदधात्सर्गे तत्तस्य स्वयमाविशत् ॥ २९ ॥

एतदेव प्रपञ्चयति। हिंस्राहिंस्रेइत्यादि। हिंस्रं कर्म्म सिंहादेः करिमारणादिकं अहिंस्रं हरिणादेः मृदु दयाप्रधानं विप्रादेः क्रूरं क्षत्रियादेः धर्म्मोयथा ब्रह्मचार्य्यादेः गुरुशुश्रूषादिः अधर्म्मोयथा तस्यैव मांसमैथुनसेवादिः। ऋतं सत्यं तच्च [illegible] देवानां अनृतमसत्यं तदपि प्रायेण मनुष्याणां तथाच [illegible]। सत्यवाचोदेवा अनृतवाचोमनुष्याइति तेषां मध्ये [illegible] स प्रजापतिः सर्गादौ यस्याधारयत् स्वश्युत्तरकालमपि [illegible] प्राक्तनादृष्टवशात् स्वयमेव भेजे ॥ २९ ॥

[illegible]लिङ्गान्यृतवः स्वयमेवर्त्तुपर्य्यये। स्वानि [illegible]पद्यन्ते तथा कर्म्माणि देहिनः ॥ ३० ॥

अत्र दृष्टान्तमाह। यथर्त्त्विति। यथा वसन्तादि ऋतवऋतुचिह्नानि चूतमञ्जर्य्यादीनि ऋतुपर्य्यये स्वकार्य्यावसरं स्वयमेवमाप्नुवन्ति। तथा देहिनोपि हिंस्रादीनि कर्म्माणि ॥ ३० ॥

लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत् ॥ ३१ ॥

लोकानां स्विति। भूर्लोकादीनां वाद्धप्र्थं मुखबाहूरुपादेभ्यो ब्राह्मणक्षत्रियवैश्यशूद्रान् यथाक्रमं निर्मितवान्। ब्राह्मणादिभिः सायंप्रातरग्नावाहुतिः प्रक्षिप्ता सूर्य्यमुपतिष्ठते सूर्य्याद्वृष्टिः वृष्टेरन्नमन्नात् प्रजा वाह्वर्थं। वक्ष्यति च अग्नौ प्रास्ताहुतिः सम्यगादित्यमित्यादि। दैव्या च शक्त्या मुखादिभ्यो ब्राह्मणादिनिर्म्माणं ब्रह्मणोन विशङ्कनीयं श्रुतिसिद्धत्वात्। तथा च श्रुतिः। ब्राह्मणोऽस्य मुखमासीदित्यादिः ॥ ३१ ॥

द्विधा कृत्वात्मनोदेहमर्द्धेन पुरुषोभवत्।
अर्द्धेन नारी तस्यां स विराजमसृजत्प्रभुः ॥ ३२ ॥

द्विधाकृत्वेति। स ब्रह्मा निजदेहं द्विखण्डं कृत्वा अर्द्धेन पुरुषोजातः अर्द्धेन स्त्री तस्यां मैथुनधर्म्मेण विराट्संज्ञं पुरुषं निर्म्मितवान्। श्रुतिश्च ततोविराड़जायतेति ॥ ३२ ॥

तपस्तप्त्वासृजद्यन्तु स स्वयं पुरुषोविराट्। तं मां वित्तास्य सर्व्वस्य स्रष्टारं द्विजसत्तमाः ॥ ३३ ॥

तपस्तप्त्वेति। स विराट् तपोविधाय यं निर्मितवान् तं मां मनुं जानीत अस्य सर्व्वस्य जगतः स्रष्टारं भोद्विजसत्तमाः एतेन स्वजन्मोत्कर्षसामर्थ्यातिशयावभिहितवान् लोकानां प्रत्ययितप्रत्ययार्थम् ॥ ३३ ॥

अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्। पतीन्प्रजानामसृजं महर्षीनादितोदश ॥ ३४ ॥

अहमिति। अहं प्रजाः स्रष्टुमिच्छन् सुदुश्चरन्तपस्तप्त्वा दशप्रजापतीन् प्रथमं सृष्टवान् तैरपि प्रजानां सृज्यमानत्वात् ॥ ३४ ॥

मरीचिमत्र्यङ्गिरसौ पुलस्त्यम्पुलहं क्रतुम्। प्रचेतसं वशिष्ठञ्च भृगुन्नारदमेवच ॥ ३५ ॥

मरीचिमित्यादि। तएते दश प्रजापतयोनामतोनिर्दिष्टाः ॥ ३५ ॥

एते मनूंस्तु सप्तान्यानसृजन् भूरितेजसः। देवान् देवनिकायांश्च महर्षींश्चामितौजसः॥३६॥

एते मनूंस्त्विति। एते मरिच्यादयोदश भूरितेजसोबहुतेजसोऽन्यान् सप्तापरिमिततेजस्कान् मनून् देवान् ब्रह्मणाऽसृष्टान् देवनिवासस्थानानि स्वर्गादीन्महर्षींश्च सृष्टवन्तः मनुशब्दोयमधिकारवाची चतुर्दशसु मन्वन्तरेषु यस्य यत्र सर्गाद्यधिकारः स एव तस्मिन्मन्वन्तरे स्वायम्भुवस्वारोचिषादिनामभिर्मनुरिति व्यपदिश्यते ॥ ३६ ॥

यक्षरक्षः पिशाचांश्च गन्धर्व्वाप्सरसोऽसुरान्।
नागान्सर्पान् सुपर्णांश्च पितॄणाञ्च पृथग्गणान्॥३७॥

यक्षरक्षरति। एतेऽसृजन्निति पूर्व्वश्लोकाच्चानुषङ्गः उत्तरत्र श्लोकद्वये च। यक्षोवैश्रवणस्तदनुचराश्च रक्षांसि रावणादीनि पिशाचास्तेभ्योऽपकृष्टाः अशुचिमरुद्देशनिवासिनः गन्धर्व्वाश्चित्ररथादयः अप्सरसः उर्व्वश्यादयः असुरा विरोचनादयः नागावासुक्यादयः सर्पास्ततोपकृष्टाः अलगर्द्दादयः। सुपर्णाः गरुडादयः पितॄणामाज्यपादीनां गणः समूहः। एषाञ्च भेदइतिहासादिप्रसिद्धोनाध्यक्षादिगोचरः ॥ ३७ ॥

विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च। उल्का-
निर्घातकेतूंश्च ज्योतींष्युच्चावचानि च॥३८॥

विद्युत इति। मेघेषु दृश्यं दीर्घाकारं ज्योतिर्विद्युत् मेघादेव यज्ज्योतिर्वृक्षादिविनाशकन्तदशनिः मेघाः प्रसिद्धाः रोहितन्दण्डाकारं नानावर्णं दिवि दृश्यते यज्ज्योतिस्तदेव वक्रमिन्द्रधनुः। उल्का रेखाकारमन्तरीक्षात्पतज्ज्योतिर्निर्घातो भूम्यन्तरीक्षगतउत्पातध्वनिः केतवः शिखावन्तिज्योतींषि उत्पातरूपाणि अन्यानि ज्योतींषि ध्रुवागस्त्यादीनि नानाप्रकाराणि॥ ३८ ॥

किन्नरान्वानरान्मत्स्यान् विविधांश्च विहङ्गमान्।
पशून्मृगान् मनुष्यांश्च व्यालांश्चोभयतोदतः ॥ ३९॥

किन्नरानिति। किन्नराः अश्वमुखाः देवयोनयो नरवि
ग्रहाः वानराः प्रसिद्धाः मत्स्या रोहिताद्यः विहङ्गमाः पक्षिणः
पशवो गवाद्या मृगा हरिणाद्या व्यालाः सिंहाद्याः। उभयतो
दतः द्वे दन्तपंक्ती येषां उत्तराधरे भवतः ॥ ३९ ॥

कृमिकीटपतङ्गांश्च यूकामक्षिकमत्कुणम्। सर्वञ्च
दंशमशकं स्थावरञ्च पृथग्विधम् ॥ ४० ॥

कृमिकीट इति। कीटाः कृमिभ्यः किञ्चित्स्थूलाः पतङ्गाः
शलभाः। यूकादयः प्रसिद्धाः क्षुद्रजन्तव इत्यनेन एकवद्भावः
स्थावरं वृक्षलतादिभेदेन विविधप्रकारम् ॥ ४० ॥

एवमेतैरिदं सर्व्वं मन्नियोगान्महात्मभिः। यथा
कर्म्म तपोयोगात् सृष्टं स्थावरजङ्गमम् ॥ ४१ ॥

एवमेतैरिति। एवमित्युक्तप्रकारेण एतैर्मरीच्यादिभि
रिदं सर्वं स्थावरजङ्गमं सृष्टम्। यथाकर्म्म यस्य जन्तोर्यादृश

कर्म्म तदनुरूपन्तस्य देवमनुष्यतिर्य्यगादियोनिषूत्पादनं मन्नि योगात् महात्मया तपोयोगात्मव्स्तपःकृत्वा सर्व्वमैश्वर्य्यं तपोऽधीनमिति दर्शितम् ॥ ४१ ॥

येषान्तु यादृशङ्कर्म्म भूतानामिह कीर्त्तितम्।
तत्तथा वोऽभिधास्यामि क्रमयोगञ्च जन्मनि ॥४२॥

येषामित्यादि। येषां पुनर्यादृशङ्कर्म्म इह संसारे पूर्व्वाचार्य्यैः कथितं यथोपथ्यः फलपाकान्ता बहुपुष्पफलोपगाः ब्राह्मणादीनाञ्चाध्ययनादि कर्म्म तत्तथैव वोयुष्माकं वक्ष्यामि जन्मादिक्रमयोगञ्च ॥ ४२ ॥

पशवश्च मृगाश्चैव व्यालाश्चोभयतादतः।
रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥ ४३ ॥

पशवश्चेति। जरायुर्गर्भावरणं चर्म्म तत्र मनुष्यादयः प्रादुर्भवन्ति पश्चान्मुक्ता आयन्ते एषामेव जन्मक्रमः प्रागुक्तोविवृतः। दन्तशब्दसमानार्थाद्दच्छब्दः प्रकृत्यन्तरमस्ति तस्येदं प्रथमाबहुवचने रूपं उभयतोदतइति ॥ ४३ ॥

अण्डजाः पक्षिणः सर्पा नक्रा मत्स्याश्च कच्छपाः। यानि चैवंप्रकाराणि स्थलजान्यौदकानि च ॥ ४४ ॥

अण्डजाः पक्षिणइति। अण्डआदौ भवति ततोजायन्त इति एषां जन्मक्रमः। नक्रः कुम्भीरः स्थलजानि कृकलासा दीनि औदकानि शंखादीनि ॥ ४४ ॥

स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम्। उष्मणश्चोपजायन्ते यच्चान्यत्किञ्चिदीदृशम् ॥ ४५ ॥

स्वेदजमिति। स्वेदः पार्थिवद्रव्याणान्तापेन क्लेदः। ततोदंश मशकादिर्जायते। उष्मणश्च स्वेदहेतुतापादपि अन्यत् दंशा दिसदृशं पक्षिकापिपीलिकादि जायते ॥ ४५ ॥

उद्भिज्जाः स्थावराः सर्व्वे वीजकाण्डप्ररोहिणः। ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः ॥ ४६ ॥

उद्भिज्जा इति। उद्भेदनमुद्भित् भावे क्विप् ततोजायन्ते ऊर्द्धं वीजं भूमिञ्च भित्त्वोद्भिज्जा वृक्षाः। ते च द्विधाः केचिद्वी जादेव जायन्ते केचित्काण्डात् शाखाएव रोपिता वृक्षतां यान्ति। इदानीं येषां यादृशं कर्म्म तदुच्यते। ओषध्यइति। ओषध्योव्रीहियवादयः फलपाकेनैव नश्यन्ता बहुपुष्पफल

युक्ताश्च भवन्ति। ओषधिशब्दादेव कृदिकारादक्तिन् इति ङीपा दीर्घत्वे ओषध्य इति रूपम् ॥ ४६ ॥

अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः।
पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः ॥ ४७ ॥

अपुष्पा इति। नास्य शाकस्याभिधानकोषवत् संज्ञार्थं... सम्बन्धिपरत्वमप्रकृतत्वात्। किन्तु क्रमयोगञ्च जन्मनीति ... तत्तदर्थमिदमुच्यते। ये वनस्पतयस्तेषां पुष्पमन्तरेणैव फल जन्म इतरेभ्यस्तु पुष्पाणि जायन्ते तेभ्यः फलानीति ... उभयरूपाः प्रथमान्तात्तसिः ॥ ४७ ॥

गुच्छगुल्मन्तु विविधन्तथैव तृणजातयः। वीज काण्डरुहाण्येव प्रताना वल्ल्य एव च ॥ ४८ ॥

गुच्छगुल्मन्त्विति। मूलत एव यत्र लतासमूहो भवति न च प्रकाण्डानि ते गुच्छा मल्लिकादयः गुल्मा एकमूलाः संघात जाताः शरेक्षुप्रभृतयः। तृणजातयः उलपाद्याः। प्रतानास्तन्तु युक्तास्त्रपुषालावूप्रभृतयः। वल्ल्यो गुडुच्यादयः याभूमेर्वृक्ष मारोहन्ति एतान्यपि वीजकाण्डरुहाणि नपुंसकमनपुंसकेनै कवच्चास्यान्यतरस्यामिति नपुंसकत्वम् ॥ ४८ ॥

तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना। अन्तः संज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥ ४९ ॥

तमसेति। एते वृक्षादयस्तमोगुणेन विचित्रदुःखफलेन धर्म्मकर्म्महेतुकेन व्याप्ताः अन्तश्चैतन्या भवन्ति यद्यपि सर्व्वे चात्मान्वं चेतयन्ते तथापि बहिर्व्यापारादिकार्य्यविरहात्तथा व्यपदिश्यन्ते। त्रिगुणारब्धत्वेपि चैषान्तमोगुणबाहुल्यात्तथा व्यपदेशः अतएव सुखदुःखसमन्विताः सत्त्वस्यापि भावात्। कदाचित्तत्वेऽपि जलधरजनितजलसम्पर्कादेषां जायते सुखं।

एतदन्तास्तु गतयोब्रह्माद्याः समुदाहृताः। घोरे स्मिन् भूतसंसारे नित्यं सततयायिनि ॥ ५० ॥

एतदन्ता इति। स्थावरपर्य्यन्ताब्रह्मोपक्रमागतयउत्पत्तयः कथिताः भूतानां क्षेत्रज्ञानां जन्ममरणप्रबन्धे दुःखबहुलतया भीषणे सदा विनश्वरे ॥ ५० ॥

एवं सर्व्वं स सृष्ट्वेदं माञ्चाचिन्त्यपराक्रमः। आत्मन्यन्तर्दधे भूयः कालं कालेन पीडयन् ॥ ५१ ॥

इत्थं सर्गमभिधाय प्रलयदशायामाह। एवं सर्व्वमिति। एवं उक्तप्रकारेण इदं सर्व्वं स्थावरजङ्गमञ्जगत् सृष्ट्वा स

प्रजापतिरचिन्त्यशक्तिरात्मनि शरीरत्यागरूपं अन्तर्द्धानं कृतवान्। सृष्टिकालं प्रलयकालेन नाशयन् प्राणिनां कर्म्मव शेन पुनः पुनः सर्गप्रलयान् करोतीत्यर्थः ॥ ५१ ॥

यदा स देवोजागर्त्ति तदेदञ्चेष्टते जगत्।
यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति ॥५२॥

अत्रहेतुमाह। यदेति यदा स प्रजापतिर्जागर्त्ति सृष्टि स्थितो इच्छति तदेदं जगत् श्वासप्रश्वासाहारादिचेष्टां लभते यदा स्वपिति निवृत्तेच्छोभवति शान्तात्मा उपसंहारमनाः तदेदं जगत्प्रलीयते ॥ ५२ ॥

तस्मिन् स्वपति तु स्वस्थे कर्म्मात्मानः शरीरिणः।
स्वकर्म्मभ्योनिवर्त्तन्ते मनश्च ग्लानिमृच्छति ॥५३॥

पूर्व्वोक्तमेव स्पष्टयति। तस्मिन् स्वपतीति। तस्मिन् प्रजापतौ निवृत्तेच्छे स्वस्थे उपसंहृतदेहमनोव्यापारे कर्म्मलब्ध देहाः क्षेत्रज्ञाः स्वकर्म्मभ्योदेहग्रहणादिभ्योनिवर्त्तन्ते मनः सर्व्वेन्द्रियसहितं वृत्तिरहितम्भवति ॥ ५३ ॥

युगपत्तु प्रलीयन्ते यदा तस्मिन्महात्मनि।
तदायं सर्व्वभूतात्मा सुखं स्वपिति निर्वृतः॥ ५४॥

इदानीं महाप्रलयमाह। युगपत्त्विति। एकस्मिन्नेव काले यदा तस्मिन्परमात्मनि सर्व्वभूतानि प्रलयं यान्ति तदायं सर्व्वभूतानामात्मा निर्वृतः निवृत्तजाग्रत्स्वप्नव्यापारः सुखं स्वपिति सुषुप्त इव भवति। यद्यपि नित्यज्ञानानन्दस्वरूपे परमात्मनि न सुष्वाप तथापि जीवधर्मोऽयमुपचर्य्यते॥ ५४॥

तमोऽयन्तु समाश्रित्य चिरन्तिष्ठति सेन्द्रियः।
न च स्वं कुरुते कर्म्म तदोत्क्रामति मूर्त्तितः॥ ५५॥

इदानीम्प्रलयप्रसङ्गेन जीवस्योत्क्रमणमपि श्लोकद्वयेनाह। तमोऽयमिति। अयं जीवस्तमोज्ञाननिवृत्तिं प्राप्य बहुकालमिन्द्रियादिसहितस्तिष्ठति न चात्मीयं कर्म्म श्वासप्रश्वासादिकं करोति तदामूर्त्तितः पूर्व्वदेहादुत्क्रामति अन्यत्र गच्छति लिङ्गशरीरावच्छिन्नस्य जीवस्य उत्क्रमोत्क्रमनमप्युपपद्यते। तथा चोक्तं बृहदारण्यके। तमुत्क्रामन्तम्प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्व्वप्राणा अनूत्क्रामन्ति। प्राणा इन्द्रियाणि ॥ ५५॥

यदाणुमात्रिकोभूत्वा वीजं स्थास्नुचरिष्णु च।
समाविशति संसृष्टस्तदा मूर्त्तिं विमुञ्चति ॥ ५६ ॥

कदा देहान्तरं गृह्णातीत्यतआह। यदाणुमात्रिकइति। अणवो मात्राः पुर्य्यष्टकरूपा यस्य सोऽणुमात्रिकः। पुर्य्यष्टक शब्देन भूतादीन्यष्टावुच्यन्ते। तदुक्तं सनन्देन। भूतेन्द्रियमनो बुद्धिवासनाकर्म्मवायवः। अविद्या चाष्टकम्प्रोक्तं पुर्य्यष्टमृषिसत्तमैः। ब्रह्मपुराणेप्युक्तम्। पुर्य्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते। तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन तु। यदाणुमात्रिको भूत्वा सम्पद्य स्थास्नु वृक्षादिहेतुभूतञ्चरिष्णु मानुषादिकारणं वीजम्प्रविशत्यधितिष्ठति तदा संसृष्टः पुर्य्यष्टकयुक्तो मूर्त्तिं स्थूलदेहान्तरङ्कर्म्मानुरूपं विमुञ्चति गृह्णाति ॥ ५६ ॥

एवं स जाग्रत्स्वप्नाभ्यामिदं सर्व्वञ्चराचरम्।
संजीवयति चाजस्रम्प्रमापयति चाव्ययः ॥ ५७ ॥

प्रासङ्गिकञ्जीवस्योत्क्रमणमभिधाय प्रकृतमुपसंहरति। एवं स जाग्रत्स्वप्नाभ्यामिति। स ब्रह्मा अनेन प्रकारेण स्वीय जाग्रत्स्वप्नाभ्यामिदं स्थावरजङ्गमं संजीवयति मारयति चाजस्रं सततं अविनाशी अव्ययः ॥ ५७ ॥

इदं शास्त्रन्तु कृत्वासौ मामेव स्वयमादितः।
विधिवद्ग्राहयामास मरीच्यादींस्त्वहं मुनीन्॥ ५८॥

इदं शास्त्रमिति। असौ ब्रह्मा इदं शास्त्रं कृत्वा सृष्ट्यादौ मामेव विधिवच्छास्त्रोक्ताङ्गजातानुष्ठानेनाध्यापितवान्। अहन्तु मरीच्यादीनध्यापितवान् ननु ब्रह्मकृतत्वेऽस्य शास्त्रस्य कथं मानवव्यपदेशः। अत्र मेधातिथिः। शास्त्रशब्देन शास्त्रार्थोविधिनिषेधसमूह उच्यते। तम्ब्रह्मा मनुं ग्राहयामास मनुस्तु तत्प्रतिपादकं ग्रन्थं कृतवानिति न विरोधः। अन्येतु ब्रह्मकृतत्वेप्यस्य मनुना प्रथमं मरीच्यादिभ्यः स्वरूपतोऽर्थतश्च प्रकाशितत्वान्मानवव्यपदेशः वेदापौरुषेयत्वेपि काठकादिव्यपदेशवत्। इदं तूच्यते। ब्रह्मणा शतसाहस्रमिदन्धर्मशास्त्रं कृत्वा मनुरध्यापित आसीत् ततस्तेन च स्ववचनेन संक्षिप्य शिष्येभ्यः प्रतिपादितमित्यविरोधः। तथाच नारदः। शतसाहस्रोयं ग्रन्थइति स्मरतिस्म॥ ५८॥

एतद्वोयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः।
एतद्धि मत्तोऽधिजगे सर्व्वमेषोऽखिलं मुनिः॥ ५९॥

एतद्वोयमित्यादि। एतच्छास्त्रमयं भृगुः युष्माकमखिलं कथयिष्यति यस्मादेषोऽशेषमेतन्मत्तोधीतवान्॥ ५९॥

ततस्तथा स तेनोक्तो महर्षिर्मनुना भृगुः। तान
ब्रवीदृषीन्सर्व्वान् प्रीतात्मा श्रूयतामिति ॥ ६० ॥

ततस्तथेति। स भृगुर्मनुना तथोक्तोऽयं श्रावयिष्यतीति
यस्मादेषोऽधिजगदित्युक्तः ततोऽनन्तरमनेकमुनिसन्निधौ गुरु
सम्भावनया प्रीतिमनास्तानृषीन् प्रत्युवाच श्रूयतामिति ॥ ६० ॥

स्वायम्भुवस्यास्य मनोः षड्वंश्यामनवोऽपरे। सृष्ट
वन्तः प्रजाः स्वाः स्वा महात्मानो महौजसः ॥ ६१ ॥

स्वायम्भुवस्येति। ब्रह्मपौत्रस्यास्य मनोः षड्वंशप्रभवा अन्ये
मनवः एवं कार्य्यकारिणः स्वस्वकाले सृष्टिपालनादावधि
कृताः स्वाः स्वाः प्रजा उत्पादितवन्तः ॥ ६१ ॥

स्वारोचिषश्चोत्तमिश्च तामसो रैवतस्तथा। चाक्षु
षश्च महातेजा विवस्वत्सुत एव च ॥ ६२ ॥

स्वारोचिषश्चेति। एते भेदेन मनवः षट् नामतो निर्दिष्टाः
॥ ६२ ॥

स्वायम्भुवाद्याः सप्तैते मनवो भूरितेजसः। स्वे स्वे ऽन्तरे सर्व्वमिदमुत्पाद्यापुश्चराचरम् ॥ ६३ ॥

स्वायम्भुवेति। स्वायम्भुवमुखाः सप्तामी मनवः स्वीयस्वीयाधिकारकाले इदं स्थावरजङ्गममुत्पाद्य पालितवन्तः ॥ ६३ ॥

निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कला। त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रन्तु तावतः ॥ ६४॥

इदानीमुक्तमन्वन्तरसृष्टिप्रलयादिकालपरिमाणपरिज्ञानायाह। निमेषादश चाष्टाविति। अक्षिपक्ष्मणोः स्वाभाविकः उन्मेषसङ्कोचो निमेषः तेऽष्टादश काष्ठा नामकालः। त्रिंशच्च काष्ठाः कलासंज्ञकः त्रिंशत्कलाः मुहूर्त्ताख्यः कालः तावत्त्रिंशन्मुहूर्त्तान् अहोरात्रकालम्विद्यात्। तावतइति द्वितीयानिर्द्देशात् विद्यादित्यध्याहारः ॥ ६४ ॥

अहोरात्रे विभजते सूर्य्यो मानुषदैविके। रात्रिः स्वप्नाय भूतानाञ्चेष्टायै कर्म्मणामहः ॥ ६५ ॥

अहोरात्रे इति। मानुषदैवसम्बन्धिनौ दिनरात्रिकालावादित्यः पृथक्करोति। तयोर्मध्ये भूतानां स्वप्नार्थं रात्रिर्भवति कर्म्मानुष्ठानार्थञ्च दिनम् ॥ ६५ ॥

पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः।
कर्म्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्व्वरी ॥ ६६ ॥

पित्र्य इति। मानुषाणां मासः पितॄणामहोरात्रे भवतः। तत्र पक्षद्वयेन विभागः कर्म्मानुष्ठानाय कृष्णपक्षोऽहः स्वापार्थं शुक्लपक्षो रात्रिः ॥ ६६ ॥

दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः। अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ ६७ ॥

दैवे रात्र्यहनी वर्षमिति। मानुषाणां वर्षो देवानां रात्रिदिने भवतः। तयोरप्ययं विभागः नराणामुदगयनं देवानामहः तत्र प्रायेण दैवकर्म्मणामनुष्ठानं दक्षिणायनन्तु रात्रिः ॥ ६७ ॥

ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासतः। एकैकशो युगानान्तु क्रमशस्तन्निबोधत ॥ ६८ ॥

ब्राह्मस्येति। ब्रह्मणोऽहोरात्रस्य यत्परिमाणम्प्रत्येकं युगानाञ्च कृतादीनान्तत्क्रमेण समासतः संक्षेपतः शृणुत प्रकृतेऽपि कालविभागे यद्ब्रह्मणोऽहोरात्रस्य पृथक्प्रतिज्ञानन्तत्तदीयज्ञानस्य पुण्यफलज्ञानार्थं वक्ष्यति च। ब्राह्मं पुण्यमहर्विदुरिति तद्वेदनात्पुण्यम्भवतीत्यर्थः ॥ ६८ ॥

चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥६९॥

चत्वार्य्याहुरिति। चत्वारि वर्षसहस्राणि कृतयुगकालं मन्वादयोवदन्ति तस्य तावद्वर्षशतानि सन्ध्या सन्ध्यांशश्च भवति युगस्य पूर्व्वा सन्ध्या उत्तरश्च सन्ध्यांशः। तदुक्तं विष्णुपुराणे। तत्प्रमाणैः शतैः सन्ध्या पूर्व्वा तत्राभिधीयते। सन्ध्यांशकश्च तत्तुल्योयुगस्यानन्तराहि यः।सन्ध्यासन्ध्यांशयोरन्तर्यः कालो मुनिसत्तम। युगाख्यः सतु विज्ञेयः कृतत्रेतादिसंज्ञकः। वर्षसङ्ख्याचेयन्दिव्यमानेन तस्यैवानन्तरप्रकृतत्वात्। दिव्यैर्वर्ष सहस्रैस्तु कृतत्रेतादिसंज्ञितम्। चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे इति विष्णुपुराणवचनाच्च ॥ ६९ ॥

इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु। एकापायेन वर्त्तन्ते सहस्राणि शतानि च ॥ ७० ॥

इतरेष्विति। अन्येषु त्रेताद्वापरकलियुगेषु सन्ध्यासन्ध्यांश सहितेषु एकहान्या सहस्राणि शतानि च भवन्ति। तेनेदं सम्पद्यते त्रीणि वर्षसहस्राणि त्रेतायुगन्तस्य त्रीणि वर्षशतानि सन्ध्यासन्ध्यांशश्च। एवं द्वेवर्षसहस्रे द्वापरः तस्य द्वे वर्षशते सन्ध्यासन्ध्यांशश्च। एवं वर्षसहस्रं कलिः तस्यैकवर्षशतं सन्ध्या सन्ध्यांशश्च ॥ ७० ॥

यदेतत्परिसङ्ख्यातमादावेव चतुर्युगम्। एतद्द्वादशसाहस्रन्देवानां युगमुच्यते ॥ ७१ ॥

यदेतदिति। एतस्य श्लोकस्यादौ यदेतन्मानुषं चतुर्युगम्परिगणितं एतद्देवानां युगमुच्यते। चतुर्युगशब्देन सन्ध्यासन्ध्यांशयोरप्राप्तिशङ्कायामाह। एतद्द्वादशसाहस्रमिति स्वार्थेऽण्। चतुर्युगैरेव द्वादशसहस्रसङ्ख्यैर्दिव्यं युगमिति तु मेधातिथेर्भ्रमोनादर्त्तव्यः मनुनानन्तरं दिव्ययुगसहस्रेण ब्रह्माहस्याप्यभिधानात्। विष्णुपुराणे च मानुषचतुर्युगसहस्रेण ब्रह्माहकीर्त्तनान्मानुषचतुर्युगेनैव दिव्ययुगानुगमनात्। तथाच विष्णुपुराणम्। कृतं त्रेता द्वापरञ्च कलिश्चैति चतुर्युगम्। प्रोच्यते तत्सहस्रन्तु ब्रह्मणो दिवसो मुने ॥ ७१ ॥

दैविकानां युगानान्तु सहस्रम्परिसङ्ख्यया। ब्राह्ममेकमहर्ज्ञेयन्तावती रात्रिरेव च ॥ ७२ ॥

दैविकानामिति। देवयुगानां सहस्रम्ब्राह्मदिनं ज्ञातव्यं। सहस्रमेव रात्रिः। परिसङ्ख्येति श्लोकपूरणार्थोनुवादः॥ ७२॥

तद्वै युगसहस्रान्तम्ब्राह्मम्पुण्यमहर्विदुः। रात्रिञ्च तावतीमेव तेऽहोरात्रविदो जनाः ॥ ७३ ॥

तद्वै युगेति। युगसहस्रेणान्तःसमाप्तिर्यस्य तद्ब्राह्ममहस्तत्परिमाणञ्च रात्रिं ये जानन्ति तेऽहोरात्रज्ञा इति स्तुतिरियं

स्त्याश ब्राह्ममहोरात्रं ज्ञातव्यमिति विधिः परिकल्प्यते।
अतएव पुण्यहेतुत्वात्पुण्यमिति विशेषणं कृतम्॥ ७३॥

तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते। प्रति
बुद्धश्च सृजति मनः सदसदात्मकम्॥ ७४॥

तस्येति। स ब्रह्मा तस्य पूर्व्वोक्तस्य स्वीयाहोरात्रस्य समाप्तौ प्रतिबुद्धो भवति प्रतिबुद्धश्च स्वीयं मनः सृजति भूर्लोकादित्रय सृष्टये नियुङ्क्ते नतु जनयति तस्य महाप्रलयानन्तरं जात त्वात् अनष्टत्वाच्च अवान्तरप्रलये भूर्लोकादित्रयमात्रनाशात्। सृष्ट्यर्थं मनोनियुक्तिरेव मनःसृष्टिः। तथाच पुराणे श्रूयते। मनःसिसृक्षया युक्तं सर्गाय निदधे पुनरिति। अथवा मनः शब्दोऽयं महत्तत्त्वपरएव यद्यपि तन्महाप्रलयानन्तरमुत्पन्नं महान्तमेव चेत्यादिना सृष्टिरपि तस्योक्ता तथाप्यनुक्तभूता नामुत्पत्तिक्रमं तद्गुणांश्च कथयितुम्महाप्रलयानन्तरितामेव महदादिसृष्टिंभूतसृष्टिञ्च हिरण्यगर्भस्यापि परमात्मत्वात् तत्कर्तृतामनुवदति। एतेनेदमुक्तम्भवति ब्रह्मा महाप्रलयानन्त रितसृष्ट्यादौ परमात्मरूपेण महदादितत्त्वानि जगत्सृष्ट्यर्थं सृजति अतएव शेषे वक्ष्यति इत्येषा सृष्टिरादितइति अवान्त रप्रलयानन्तरन्तु मनःप्रभृतिसृष्टावभिधानक्रमेणैव शास्त्रस्य प्राप्तिरित्येषा सृष्टिरादितइति निष्प्रयोजनोऽनुवादःस्यात्॥ ७४॥

मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया।
आकाशं जायते तस्मात्तस्य शब्दं गुणं विदुः॥ ७५॥

मनःसृष्टिमिति। मनोमहान्सृष्टिं करोति परमात्मनः स्रष्टुमिच्छया प्रेर्य्यमाणस्तस्मादाकाशमुत्पद्यते तच्च पूर्व्वोक्तानुसारादहङ्कारतन्मात्रक्रमेणाकाशस्य शब्दं गुणं विदुर्मन्वादयः॥ ७५॥

आकाशात्तु विकुर्व्वाणात्सर्व्वगन्धवहः शुचिः।
बलवान् जायते वायुः स वै स्पर्शगुणो मतः॥ ७६॥

आकाशादिति। आकाशात्तु विकारजनकात्सुरभ्यसुरभिगन्धवहः पवित्रो बलवांश्च वायुरुत्पद्यते स च स्पर्शाख्यगुणवान् मन्वादीनां सम्मतः॥ ७६॥

वायोरपि विकुर्व्वाणाद्विरोचिष्णु तमोनुदम्।
ज्योतिरुत्पद्यते भास्वत्तद्रूपगुणमुच्यते॥ ७७॥

वायोरपीति। वायोरपि तेज उत्पद्यते विरोचिष्णु परप्रकाशकं तमोनाशनं भास्वत्प्रकाशकं तच्च रूपगुणमभिधीयते॥ ७७॥

ज्योतिषश्च विकुर्व्वाणादापो रसगुणाः स्मृताः।
अद्भ्यो गन्धगुणा भूमिरित्येषा सृष्टिरादितः॥ ७८॥

ज्योतिषश्चेति। तेजसश्चापउत्पद्यन्ते। ताश्च रसगुणयुक्ता अद्भ्यो गन्धगुणयुक्ता भूमिरित्येषा महाप्रलयानन्तरसृष्ट्यादौ भूतसृष्टिः। तैरेव भूतैरवान्तरप्रलयानन्तरमपि भूरादि लोकत्रयनिर्म्माणम्॥ ७८॥

यत्प्राक् द्वादशसाहस्रमुदितन्दैविकं युगम्।
तदेकसप्ततिगुणम्मन्वन्तरमिहोच्यते॥ ७९॥

यत्प्रागिति। यत्पूर्व्वं द्वादशवर्षसहस्रपरिमाणं सन्ध्या सन्ध्यांशसहितं मनुष्याणां चतुर्युगं देवानामेकं युगमुक्तन्तदे-कसप्ततिगुणितं मन्वन्तराख्यः कालइह शास्त्रेऽभिधीयते। तत्रैकस्य मनोः सर्गाद्यधिकारः॥ ७९॥

मन्वन्तराण्यसङ्ख्यानि सर्गः संहार एव च। क्रीडं न्निवैतत्कुरुते परमेष्ठी पुनःपुनः॥ ८०॥

मन्वन्तराणीति। यद्यपि चतुर्दशमन्वन्तराणि पुराणेषु परिगण्यन्ते तथापि सर्गप्रलयानामानन्त्यात् असङ्ख्यानि

आवृत्त्या सर्ग:-संहाराख्यमसङ्ख्यः एतत्सर्व्वं क्रीड़न्निव प्रजापतिः पुनःपुनः कुरुते। सुखार्थाहि प्रवृत्तिः क्रीड़ा तस्य चाप्तकामत्वात् न सुखार्थितेति इवशब्दः प्रयुक्तः परमे स्थानेऽनावृत्त लक्षणे तिष्ठतीति परमेष्ठी प्रयोजनं विना परमात्मनः सृष्ट्यादौ कथं प्रवृत्तिरिति चेत् लीलयैव एवं स्वभावत्वादित्यर्थः व्याख्यातुरिव करचालनादौ तथाच शारीरकसूत्रं। लोकवत्तु लीलाकैवल्यम् ॥ ८० ॥

चतुष्पात्सकलोधर्म्मः सत्यञ्चैव कृते युगे।
नाधर्म्मेणागमः कश्चिन्मनुष्यान्प्रतिवर्त्तते ॥ ८१ ॥

चतुष्पात्सकलोधर्म्मइति। सत्ययुगे सकलोधर्म्मश्चतुष्पात्सर्व्वाङ्गसम्पूर्णआसीत् धर्म्मे मुख्यपादासम्भवात् वृषोहि भगवान् धर्म्मइत्यागमे वृषत्वेन कीर्त्तनात् तस्य पादचतुष्टयेन सम्पूर्णत्वात्सत्ययुगेपि यज्ञादिधर्म्माणां सर्व्वाङ्गः सम्पन्नत्वात् सम्पूर्णत्वपरोयं चतुष्पाच्छब्दः अथवा तपःपरमित्यत्र मनुनैव तपोज्ञानयज्ञदानानाञ्चतुर्णां कीर्त्तनात्। तस्य पादचतुष्टयेन सम्पूर्णत्वात्पादत्वेन निरूपिताः सत्ययुगे समग्रा इत्यर्थः। तथा सत्यञ्च कृतयुगमासीत्सकलधर्म्मश्रेष्ठत्वात् सत्यस्य पृथक् ग्रहणं तथा न शास्त्रातिक्रमेण धनविद्यादेरागमउत्पत्तिर्म्मनुष्यान्प्रति सम्पद्यते ॥ ८१ ॥

इतरेष्वागमाद्धर्म्मः पादशस्त्ववरोपितः। चौरिकानृतमायाभिर्धर्म्मश्चापैति पादशः॥ ८२॥

इतरेष्विति। सत्ययुगादन्येषु त्रेतादिषु आगमात् अधर्म्मेण धनविद्यादेरर्जनात् तस्यैव पूर्व्वश्लोके प्रकृतत्वात्। आगमाद्वेदादिति तु गोविन्दराजोमेधातिथिश्च। धर्म्मोयागादिः यथाक्रमम्प्रतियुगम्पादम्पादमवरोपितोहीनः कृतः। तथा धनविद्यार्जितोपि योधर्म्मः प्रचरति सोपि चौर्य्यासत्यच्छद्मभिः प्रतियुगं पादशोह्रासाद्व्यपगच्छति। त्रेतादियुगैः सह चौरिकानृतच्छद्मनां न यथासङ्ख्यं सर्व्वत्र सर्व्वेषां दर्शनात्॥८२॥

अरोगाः सर्व्वसिद्धार्थाश्चतुर्व्वर्षशतायुषः। कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः॥ ८३॥

अरोगाइति। रोगनिमित्ताधर्म्माभावादरोगाः सर्व्वसिद्धकाम्यफलाः प्रतिबन्धकाधर्म्माभावात् चतुर्व्वर्षशतायुषश्च स्वाभाविकं अधिकायुःप्रापकधर्म्मवशादधिकायुषोपि भवन्ति तेन दशवर्षसहस्राणि रामोराज्यमकारयदित्याद्यविरोधः। शतायुर्वैपुरुषइत्यादिश्रुतौ तु शतशब्दोबहुत्वपरः कलिपरोवा। एवं रूपामनुष्याः कृतेभवन्ति त्रेतादिषु पुनःपादम्पादमायुरल्पीभवतीति॥ ८३॥

वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्म्मणाम्।
फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम् ॥ ८४ ॥

वेदोक्तमायुरिति। शतायुर्वै पुरुष इत्यादिवेदोक्तमायुः कर्म्मणाञ्च काम्यानां फलविषयाः प्रार्थना ब्राह्मणादीनाञ्च शापानुग्रहक्षमलादिप्रभावा युगानुरूपेण फलन्ति ॥ ८४ ॥

अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरे परे। अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥ ८५ ॥

अन्य इति। कृतयुगेऽन्ये धर्म्मा भवन्ति त्रेतादिष्वपि युगापचयानुरूपेण धर्म्मवैलक्षण्यम् ॥ ८५ ॥

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते। द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ ८६ ॥

तपः परमिति। यद्यपि तपः प्रभृतीनि सर्व्वाणि सर्व्वयुगे अनुष्ठेयानि तथापि सत्ययुगे तपःप्रधानं महाफलमिति ज्ञाप्यते एवमात्मज्ञानन्त्रेतायुगे द्वापरे यज्ञः दानं कलौ ॥ ८६ ॥

सर्व्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः।
मुखबाहूरुपज्जानाम्पृथक् कर्म्माण्यकल्पयत्॥ ८७।

सर्व्वस्यास्येति। स ब्रह्मा महातेजा अस्य सर्गस्य सम्यगस्याग्नौ प्राप्ताहुतिरिति न्यायेन रक्षार्थं मुखादिजातानाम्ब्राह्मणादीनां विभागेन कर्म्माणि दृष्टादृष्टार्थानि निर्मितवान्॥ ८७।

अध्यापनमध्ययनं यजनं याजनन्तथा। दान
म्प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत्॥ ८८ ॥

अध्यापनमिति। अध्यापनादीनामिह सृष्टिप्रकरणे सृष्टिविशेषतयाभिधानं विधिस्तेषामुत्तरत्र भविष्यति। अध्यापनादीनि षट्कर्म्माणि ब्राह्मणानां कल्पितवान्॥ ८८ ॥

प्रजानां रक्षणन्दानमिज्याध्ययनमेव च।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः॥ ८९ ॥

प्रजानामिति। प्रजारक्षणादीनि क्षत्रियस्य कर्म्माणि कल्पितवान्। विषयेषु गीतनृत्यवनितोपभोगादिष्वप्रसक्तिस्तेषाम्पुनःपुनर्रसेवनं। समासतः संक्षेपेण॥ ८९ ॥

पशूनां रक्षणन्दानमिज्याध्ययनमेव च। वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च ॥ ९० ॥

पशूनामिति। पशूनाम्पालनादीनि वैश्यस्य कल्पितवान्। वणिक्पथं स्थलजलादिनावाणिज्यं कुसीदं वृद्ध्या धनप्रयोगः ॥ ९० ॥

एकमेव तु शूद्रस्य प्रभुः कर्म्म समादिशत्। एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ ९१ ॥

एकमेवत्विति। प्रभुर्ब्रह्मा शूद्रस्य ब्राह्मणादिवर्णत्रयपरिचर्य्यात्मकङ्कर्म्म निर्मितवान् एकमेवेति प्राधान्यप्रदर्शनार्थं दानादेरपि तस्य विहितत्वात् अनसूयया गुणानिन्दया ॥ ९१॥

ऊर्द्ध्वं नाभेर्मेध्यतरः पुरुषः परिकीर्त्तितः। तस्मान्मेध्यतमन्त्वस्य मुखमुक्तं स्वयम्भुवा ॥ ९२ ॥

इदानीम्प्राधान्येन सर्गरक्षार्थत्वाद्ब्राह्मणस्य तदुपक्रमधर्म्माभिधानत्वाच्चास्य शास्त्रस्य ब्राह्मणस्य स्तुतिमाह। ऊर्द्ध्वमिति। सर्व्वतएव पुरुषोमेध्यः नाभेरूर्द्ध्वमतिशयेन मेध्यः तत्रापि मुखमस्य मेध्यतमम्ब्रह्मणोक्तम् ॥ ९२ ॥

उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात्।
सर्व्वस्यैवास्य सर्गस्य धर्म्मतो ब्राह्मणः प्रभुः ॥ ९३ ॥

ततः किमतआह। उत्तमाङ्गोद्भवादिति। उत्तमाङ्गं मुखन्तदुद्भवत्वात् क्षत्रियादिभ्यः पूर्व्वोत्पन्नत्वादध्यापनव्याख्यानादिना युक्तस्यातिशयेन वेदधारणात् सर्व्वस्यास्य जगतो धर्म्मानुशासनेन ब्राह्मणः प्रभुः। संस्कारस्य विशेषात्तु वर्णानां ब्राह्मणः प्रभुः ॥ ९३ ॥

तं हि स्वयम्भूः स्वादास्यात्तपस्तप्त्वादितोऽसृजत्।
हव्यकव्याभिवाह्याय सर्व्वस्यास्य च गुप्तये ॥ ९४ ॥

कस्मोत्तमाङ्गादयमुद्भूत इत्यतआह। तं हि स्वयम्भूरिति। तं ब्राह्मणं ब्रह्मा आत्मीयमुखात् दैवपित्र्यहव्यकव्यवहनाय तपःकृत्वा सर्व्वस्य जगतोरक्षायैव क्षत्रियादिभ्यः प्रथमं सृष्टवान् ॥ ९४ ॥

यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः।
कव्यानि चैव पितरः किम्भूतमधिकन्ततः ॥ ९५ ॥

पूर्व्वोक्तहव्यकव्यवहनं स्पष्टयति। यस्यास्येनेति। यस्य

विप्रस्य मुखेन श्राद्धादौ सर्व्वदा देवा हव्यानि पितरश्च कव्यानि भुञ्जते ततोन्यत् प्रकृष्टतमभूतं किं भवेत्॥ ६५ ॥

भूतानाम्प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः॥ ९६॥

भूतानामिति। भूतानाम्नां स्थावरजङ्गमानाम्मध्ये प्राणिनः कीटादयः श्रेष्ठाः कदाचित्सुखलेशात् तेषामपि बुद्धिजीविनः स्वार्थनिरर्थदेशोपसर्पणापसर्पणकारिणः पश्वादयः तेभ्योपि मनुष्याः प्रकृष्टज्ञानसम्बन्धात् तेभ्योपि ब्राह्मणाः सर्व्वपूज्यत्वात् अपवर्गाधिकारयोग्यत्वाच्च ॥ ९६ ॥

ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः। कृतबुद्धिषु कर्त्तारः कर्तृषु ब्रह्मवेदिनः॥ ९७॥

ब्राह्मणेष्विति। ब्राह्मणेषु तु मध्ये विद्वांसो महाफलज्योतिष्टोमादिकर्म्माधिकारित्वात् तेभ्योपि कृतबुद्धयः अनागतेपि कृतं मयेति बुद्धिर्येषां शास्त्रोक्तानुष्ठानेषूत्पन्नकर्त्तव्यताबुद्धय इत्यर्थः। तेभ्योपि अनुष्ठातारः हिताहितप्राप्तिपरिहारभागित्वात् तेभ्योपि ब्रह्मविदः मोक्षलाभात्॥ ९७॥

उत्पत्तिरेव विप्रस्य मूर्त्तिर्धर्मस्य शाश्वती। सहि
धर्मार्थमुत्पन्नोब्रह्मभूयाय कल्पते ॥ ९८ ॥

उत्पत्तिरेवेति। ब्राह्मणदेहजन्ममात्रमेव धर्मस्य शरीर
मविनाशि यस्मादसौ धर्मार्थं जातः धर्मानुगृहीतात्मज्ञानेन
मोक्षाय सम्पद्यते ॥ ९८ ॥

ब्राह्मणोजायमानोहि पृथिव्यामधिजायते।
ईश्वरः सर्व्वभूतानान्धर्मकोषस्य गुप्तये ॥ ९९ ॥

ब्राह्मणइति। यस्माद्ब्राह्मणोजायमानः पृथिव्यामधि
उपरि भवति श्रेष्ठ इत्यर्थः सर्व्वभूतानान्धर्मसमूहरक्षायै
प्रभुः ब्राह्मणोपदिष्टत्वात् सर्व्वधर्माणाम् ॥ ९९ ॥

सर्व्वं स्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम्।
श्रैष्ठ्येनाभिजनेनेदं सर्व्वं वै ब्राह्मणोर्हति ॥ १०० ॥

सर्व्वं स्वमिति। यत्किञ्चिज्जगदर्त्तिधनं तद्ब्राह्मणस्य
स्वमिति स्तुत्योच्यते। स्वमिव स्वं नतु स्वमेव ब्राह्मणस्यापि मनुना
स्तेयस्य वक्ष्यमाणत्वात्। तस्माद्ब्रह्ममुखोद्भवत्वेनाभिजनेन श्रेष्ठ
तया सर्व्वं ब्राह्मणोर्हति सर्व्वग्रहणयोग्योभवत्येव वै अवधारणे
॥ १०० ॥

स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च।
आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः ॥ १०१॥

स्वमेवेति। यत्परस्यापि अन्नं ब्राह्मणो भुङ्क्ते परस्यैव वस्त्र
मपरिधत्ते परस्य गृहीत्वान्यस्मै ददाति तदपि ब्राह्मणस्य
स्वमिव पूर्व्ववत् स्तुतिः एवं सति ब्राह्मणस्य कारुण्यादन्ये भोज
नादि कुर्व्वन्ति ॥ १०१ ॥

तस्य कर्म्मविवेकार्थं शेषाणामनुपूर्व्वशः। स्वाय
म्भुवो मनुर्द्धीमानिदं शास्त्रमकल्पयत् ॥ १०२ ॥

इदानीं प्रकृष्टब्राह्मणकर्म्माभिधायकतया शास्त्रप्रशंसां
प्रक्रमते तस्य कर्म्मविवेकार्थमिति। ब्राह्मणस्य कर्म्मज्ञानार्थं
शेषाणां क्षत्रियादीनाञ्च स्वायम्भुवो ब्रह्मपौत्रो धीमान् सर्व्व
विषयज्ञानवान् मनुरिदं शास्त्रं विरचितवान् ॥ १०२ ॥

विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः। शिष्ये
भ्यश्च प्रवक्तव्यं सम्यक् नान्येन केनचित् ॥ १०३ ॥

विदुषेति। एतच्छास्त्राध्ययनफलज्ञेन ब्राह्मणेन एतस्य शास्त्रस्य
व्याख्यानाध्यापनोचितमप्रयत्नतोऽध्ययनङ्कर्त्तव्यं। शिष्येभ्यश्चेदं

व्याख्यातव्यमान्येन क्षत्रियादिना अध्ययनमात्रन्तु व्याख्याना ध्यापनरहितं क्षत्रियवैश्ययोरपि निषेकादि श्मशानान्तइत्या दिना विधास्यते। अनुवादमात्रमेतदिति मेधातिथिमतं तन्न मनोहरं द्विजैरध्ययनम्ब्राह्मणेनैवाध्यापनव्याख्याने इत्यस्याला भात्। यत्तु अधीयीरंस्त्रयोवर्णा इत्यादि तद्वेदविषयमिति वक्ष्यति। विप्रेणैवाध्याप्यमिति विधाने सम्भवत्यपि। अनुवाद त्वमस्येति वृथा मेधातिथेर्ग्रहः॥ १०३॥

इदं शास्त्रमधीयानो ब्राह्मणः शंसितव्रतः।
मनोवाग्देहजैर्नित्यं कर्मदोषैर्न लिप्यते॥ १०४॥

इदं शास्त्रमिति। इदं शास्त्रम्पठंस्तदीयमर्थं ज्ञात्वा शंसितव्रतोऽनुष्ठितव्रतः मनोवाक्कायसम्भवैः पापैर्न सम्बध्यते ॥ १०४॥

पुनाति पङ्क्तिं वंश्यांश्च सप्तसप्तपरावरान्।
पृथिवीमपि चैवेमां कृत्स्नामेकोपि सोर्हति॥ १०५॥

पुनातीति। इदं शास्त्रमधीयान इत्यनुवर्त्तते। अपंक्त्या पहतां पङ्क्तिमानुपूर्व्यानिविष्टजनसमूहम्पवित्रीकरोति वंश भवांश्च सप्त परान्पित्रादीन् अवरांश्च सप्त पुत्रादीन् पृथिवीमपि सर्व्वां सकलधर्म्मज्ञतया पात्रत्वेन ग्रहीतुं योग्योभवति॥ १०५॥

इदं स्वस्त्ययनं श्रेष्ठमिदम्बुद्धिविवर्द्धनम्। इदं यशस्यमायुष्यमिदं निःश्रेयसम्परम् ॥ १०६ ॥

इदमिति। अभिप्रेतार्थस्याविनाशः स्वस्ति तस्यायनं प्रापकं एतच्छास्त्रस्याध्ययनं स्वस्त्ययनजपहोमादिबोधकत्वाच्च श्रेष्ठं स्वस्त्ययनान्तरात्प्रकृष्टं बुद्धिविवर्द्धनमेतच्छास्त्राभ्यासेनाशेष विधिनिषेधपरिज्ञानात्। यशसे हितं यशस्यं विद्वत्तया ख्यातिलाभात् परम्प्रकृष्टं निःश्रेयसं निःश्रेयसस्य मोक्षस्योपायो पदेशकत्वात् ॥ १०६ ॥

अस्मिन् धर्म्मोऽखिलेनोक्तोगुणदोषौ च कर्म्मणाम्। चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः ॥ १०७ ॥

अस्मिन्धर्मइति। अस्मिन् कात्स्न्र्येन धर्म्मोऽभिहितइति शास्त्रप्रशंसा कर्म्मणाञ्च विहितनिषिद्धानामिष्टानिष्टफले वर्ण चतुष्टयस्यैव पुरुषधर्म्मरूपआचारः शाश्वतः पारम्पर्य्यागतः धर्म्मत्वेप्याचारस्य प्राधान्यख्यापनाय पृथक्निर्द्देशः ॥ १०७ ॥

आचारः परमोधर्म्मः श्रुत्युक्तः स्मार्त्तएव च। तस्मादस्मिन्सदा युक्तोनित्यं स्यादात्मवान् द्विजः ॥ १०८ ॥

प्राधान्यमेव स्पष्टयति। आचारइति। युक्तोयत्नवान् आत्महितेच्छुः सर्व्वस्यात्मास्तीति आत्मशब्देन आत्महितेच्छा लक्ष्यते ॥ १०८ ॥

आचाराद्विच्युतोविप्रोन वेदफलमश्नुते।
आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत् ॥१०९॥

आचारादिति। आचाराद्विच्युतोविप्रोन वैदिकफलं लभेत्। आचारयुक्तः पुनः समग्रफलभाग्भवति ॥१०९॥

एवमाचारतोदृष्ट्वा धर्म्मस्य मुनयोगतिम्।
सर्व्वस्य तपसोमूलमाचारं जगृहुः परम् ॥११०॥

एवमिति। उक्तप्रकारेणाचाराद्धर्म्मप्राप्तिम्मुषयोबुद्ध्वा तपसश्चान्द्रायणादेः समग्रस्य कारणमाचारमनुष्ठेयतया गृहीतवन्तः। उत्तरत्र वक्ष्यमाणस्याचारस्य इह स्तुतिः शास्त्रस्तुत्यर्था ॥११०॥

जगतश्च समुत्पत्तिं संस्कारविधिमेव च। व्रतचर्य्योपचारञ्च स्नानस्य च परं विधिम् ॥१११॥

इदानीं शिष्यस्य सुखप्रतिपत्तये वक्ष्यमाणार्थानुक्रमणिकामाह जगतश्च समुत्पत्तिमिति पाषण्डगणधर्म्मांश्चेत्यन्तेन जगदुत्पत्तिर्यथोक्ता ब्राह्मणस्तुतिश्च सर्गरक्षार्थत्वेन ब्राह्मणस्य शास्त्रस्तुत्यादिकञ्च सृष्टावेवान्तर्भवति। एतत्प्रथमाध्याय

प्रमेयं। संस्काराणां जातकर्मादीनां विधिमनुष्ठानं ब्रह्मचारिणां व्रताचरणं उपचारश्च गुर्वादीनामभिवादनोपासनादि सर्वादन्द्वोविभाषयैकवद्भवति इत्येकवद्भावः। एतद्द्वितीया ध्यायप्रमेयम्। स्नानं गुरुकुलान्निवर्त्तमानस्य संस्कारविशेष स्तस्य प्रकृष्टं विधानम्॥ १११ ॥

दाराधिगमनञ्चैव विवाहानाञ्च लक्षणम्।
महायज्ञविधानञ्च श्राद्धकल्पञ्च शाश्वतं॥ ११२ ॥

दाराधिगमनमिति। दाराधिगमनं विवाहः तद्विशेषाणां ब्राह्मादीनाञ्च लक्षणं महायज्ञाः पञ्च वैश्वदेवादयः श्राद्धस्य विधिः शाश्वतः प्रतिसर्गमनादिप्रवाहप्रवृत्त्या नित्यः एष तृतीया ध्यायार्थः॥ ११२ ॥

वृत्तीनां लक्षणञ्चैव स्नातकस्य व्रतानि च। भक्ष्या भक्ष्यञ्च शौचञ्च द्रव्याणां शुद्धिमेवच॥ ११३॥

वृत्तीनामिति। वृत्तीनाञ्जीवनोपायानां ऋतादीनां लक्षणं। स्नातकस्य गृहस्थस्य व्रतानि नियमाः एतच्चतुर्थाध्यायप्रमेयं। भक्ष्यन्दध्यादि अभक्ष्यं लशुनादि शौचं मरणादौ ब्राह्मणा दर्दशाहादिना द्रव्याणां शुद्धिमुदकादिना॥ ११३॥

स्त्रीधर्म्मयोगं तापस्यं मोक्षं सन्न्यासमेव च। राज्ञश्च धर्म्ममखिलं कार्य्याणाञ्च विनिर्णयम् ॥ ११४ ॥

स्त्रीधर्म्मयोगमिति। स्त्रीणां धर्म्मयोगं धर्म्मोपायं एतत्पाश्चमिकम्। तापस्यं तपस्वी वानप्रस्थः तस्य हितं तस्य धर्म्मं। मोक्षहेतुत्वान्मोक्षं यतिधर्म्मं। यतिधर्म्मत्वेपि सन्न्यासस्य पृथगुपदेशः प्राधान्यज्ञापनार्थः। एष षष्ठाध्यायार्थः॥ राज्ञोभिषिक्तस्य सर्व्वोदृष्टादृष्टार्थो धर्म्मः। एष सप्तमाध्यायार्थः॥ कार्य्याणामृणादीनामर्थिप्रत्यर्थिसमर्पितानां विनिर्णयो विचार्य्य तत्त्वनिर्णयः॥ ११४॥

साक्षिप्रश्नविधानञ्च धर्म्मं स्त्रीपुंसयोरपि। विभागधर्म्मं द्यूतञ्च कण्टकानाञ्च शोधनम् ॥ ११५ ॥

साक्षीति। साक्षिणाञ्च प्रश्ने यद्विधानं व्यवहाराङ्गत्वेपि साक्षिप्रश्नस्य प्रधाननिर्णयोपायत्वात् पृथक्निर्देशः। एतदाष्टमिकम्॥ स्त्रीपुंसयोर्भार्य्यापत्योः सन्निधावसन्निधौ च धर्म्मानुष्ठानं ऋक्थभागस्य च धर्म्मं यद्यपि ऋक्थभागोपि कार्य्याणां विनिर्णय इत्यनेनैव प्राप्तस्तथाप्यध्यायभेदात् पृथक्निर्देशः। द्यूतविषयो विधिर्द्यूतशब्देनोच्यते कण्टकानाञ्चौरादीनां शोधनं निरसनम्॥ ११५॥

वैश्यशूद्रोपचारञ्च सङ्कीर्णानाञ्च सम्भवम्।
आपद्धर्म्मञ्च वर्णानाम्प्रायश्चित्तविधिन्तथा ॥ ११६ ॥

वैश्यशूद्रोपचारञ्चेति। वैश्यशूद्रोपचारं स्वधर्म्मानुष्ठानं एतन्नवमे। एवं सङ्कीर्णानां अनुलोमप्रतिलोमजानामुत्पत्तिं आपदि च जीविकोपदेशं आपद्धर्मं एतद्दशमे। प्रायश्चित्त विधिमेकादशे ॥ ११६ ॥

संसारगमनञ्चैव त्रिविधङ्कर्म्मसम्भवम्। निश्श्रेय सङ्कर्म्मणाञ्च गुणदोषपरीक्षणम् ॥ ११७ ॥

संसारगमनमिति। संसारगमनन्देहान्तरप्राप्तिरूपं उत्तम मध्यमाधमभेदेन त्रिविधं शुभाशुभकर्म्महेतुकम्। निःश्रेय समात्मज्ञानं सर्व्वोत्कृष्टमोक्षलक्षणश्रेयोहेतुत्वात् कर्म्मणाञ्च विहितनिषिद्धानां गुणदोषपरीक्षणम् ॥ ११७ ॥

देशधर्म्मान् जातिधर्म्मान् कुलधर्म्मांश्च शाश्वतान्।
पाषण्डगणधर्म्मांश्च शास्त्रेऽस्मिन्नुक्तवान्मनुः ॥ ११८ ॥

देशधर्म्मानिति। प्रतिनियतदेशेऽनुष्ठीयमाना देशधर्म्माः ब्राह्मणादिजातिनियताजातिधर्म्माः कुलविशेषाश्रयाः कुल

धर्माः वेदबाह्यागमसमाश्रया प्रतिषिद्धव्रतचर्या पाषण्डं तद्योगात्पुरुषोपि पाषण्डः तन्निमित्ता ये धर्माः पाषण्डिनोवि कर्मस्थानित्यादयः तेषां पृथग्धर्मानभिधानात्। गणः समूहो वणिगादीनाम्॥ ११८॥

यथेदमुक्तवान् शास्त्रम्पुरा पृष्टोमनुर्मया। तथेदं यूयमप्यद्य मत्सकाशान्निबोधत॥ ११९॥

इतिमानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां प्रथमोऽध्यायः॥

यथेदमिति। पूर्वं मया पृष्टोमनुर्यथेदं शास्त्रमभिहितवान्। तथैवान्यूनानतिरिक्तं मत्सकाशाच्छृणुतेति ऋषीणां श्रद्धातिशयार्थं पुनरभिधानम्॥ ११९॥

इति श्रीकुल्लूकभट्टकृतायां मन्वर्थमुक्तावल्यां मनुवृत्तौ प्रथमोऽध्यायः॥

## ॥ २ अध्यायः ॥

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातोयोधर्मस्तन्निबोधत ॥ १ ॥

प्रकृष्टपरमात्मज्ञानरूपधर्मज्ञानाय जगत्कारणमुक्तं प्रतिपाद्याधुना ब्रह्मज्ञानाङ्गभूतं संस्कारादिरूपन्धर्मं प्रतिपिपादयिषुर्धर्मसामान्यलक्षणं प्रथममाह। विद्वद्भिरिति। विद्वद्भिर्वेदविद्भिः सद्भिर्धार्मिकैरागद्वेषशून्यैरनुष्ठितो हृदयेनाभिमुख्येन ज्ञातइत्यनेन श्रेयःसाधनमभिमतम्। तत्र हि स्वरसान्मनोभिमुखोभवति। वेदविद्भिर्ज्ञातइतिविशेषणोपादानसामर्थ्यात् ज्ञातस्य वेदस्यैव श्रेयःसाधनज्ञाने कारणत्वं विवक्षितं खड्गधारिणा हतइत्युक्ते धृतखड्गस्यैव हनने प्राधान्यं अतोवेदप्रमाणकः श्रेयःसाधनन्धर्मइत्युक्तं एवं विधोयोधर्मस्तन्निबोधत। उक्तार्थसंग्रहश्लोकाः। वेदविद्भिर्ज्ञात इति प्रभुर्ज्ञानोविशेषणं। वेदादेव परिज्ञातोधर्मइत्युक्तवान्मनुः। हृदयेनाभिमुख्येन ज्ञातइत्यपि निर्दिशन्। श्रेयःसाधनमित्याह तत्रह्यभिमुखमनः। वेदप्रमाणकः श्रेयः साधनं

धर्म्म इत्यतः। मनूक्तमेव मुनयः प्रणिन्युर्धर्म्मलक्षणम्। अत एव हारीतः। अथातो धर्म्मं व्याख्यास्यामः श्रुतिप्रमाणको धर्म्मः श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च। भविष्यपुराणे। धर्म्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणं। सतु पञ्चविधः प्रोक्तो वेदमूलः सनातनः। अस्य सम्यगनुष्ठानात्स्वर्गो मोक्षश्च जायते। इहलोके सुखैश्वर्य्यमतुलञ्च खगाधिप। श्रेयः श्रेयःसाधनमित्यर्थः जैमिनिरपि इदमपि धर्म्मलक्षणमसूत्रयत्। चोदनालक्षणोऽर्थो धर्म्म इति उभयचोदनया लक्ष्यतेऽर्थः श्रेयःसाधनं ज्योतिष्टोमादिः अनर्थः प्रत्यवायसाधनं श्येनादिः तत्र वेदप्रमाणकं श्रेयःसाधनं ज्योतिष्टोमादिधर्म्म इति सूत्रार्थः। स्मृत्यादयोऽपि वेदमूलत्वेनैव धर्म्मे प्रमाणमिति दर्शयिष्यामः। गोविन्दराजस्तु हृदयेनाभ्यनुज्ञात इत्यन्तःकरणविचिकित्साशून्य इति व्याख्यातवान् तन्मते वेदविद्भिरनुष्ठितः संशयरहितश्च धर्म्म इति धर्म्मलक्षणं स्यात् एतच्च द्यूतार्थग्रामगमनादिसाधारणं धर्म्मलक्षणं विचक्षणा न श्रद्दधते। मेधातिथिस्तु हृदयेनाभ्यनुज्ञात इति यत्र चित्तं प्रवर्त्तयतीति व्याख्याय अथवा हृदयं वेदः सह्यधीतो भावनादिरूपेण स्थितः हृदयस्थितिर्हृदयमित्युच्यते इत्युक्तवान्॥ १॥

कामात्मता न प्रशस्ता न चैवेहास्त्यकामता।
काम्योहि वेदाधिगमः कर्म्मयोगश्च वैदिकः॥ २॥

कामात्मतेति। फलाभिलाषशीलत्वं पुरुषस्य कामात्मता सा न प्रशस्ता बन्धहेतुत्वात्स्वर्गादिफलाभिलाषेण काम्यानि कर्म्माण्यनुष्ठीयमानानि पुनर्जन्मने कारणम्भवन्ति नित्यनैमित्तिकानि तु आत्मज्ञानसहकारितया मोक्षाय कल्पन्ते न पुनरिच्छामात्रमनेन निषिध्यते। तदाह नचैवेहास्त्यकामतेति। यतोवेदस्वीकरणं वैदिकसकलधर्म्मसम्बन्धश्चेच्छाविषयएव॥२॥

सङ्कल्पमूलः कामोवै यज्ञाः संकल्पसम्भवाः।
व्रता नियमधर्म्माश्च सर्व्वे सङ्कल्पजाः स्मृताः॥ ३॥

अत्रोपपत्तिमाह। सङ्कल्पमूलइति। अनेन कर्म्मणा इदमिष्टं फलं साध्यतइत्येवं विषया बुद्धिः संकल्पः तदनन्तरमिष्टसाधनतयावगते तस्मिन्निच्छा जायते तदर्थम्प्रयत्नं कुरुते च इत्येवं यज्ञाः सङ्कल्पप्रभवा व्रता नियमरूपाश्च धर्म्माश्चतुर्थाध्याये वक्ष्यमाणाः सर्व्वइत्यनेन पदेन अन्येपि शास्त्रार्थाः सङ्कल्पादेव जायन्ते इच्छामन्तरेण तान्यपि न सम्भवन्तीत्यर्थः। गोविन्दराजस्तु व्रतान्यनुष्ठेयरूपाणि यमधर्म्माःप्रतिषेधार्थका इत्याह॥ ३॥

अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित्।
यद्यद्धि कुरुते किञ्चित्तत्तत्कामस्य चेष्टितम् ॥ ४ ॥

अत्रैव लौकिकं नियमं दर्शयति। अकामस्येति। लोके या काचिद्भोजनगमनादिक्रिया साप्यनिच्छतोन कदाचिद्दृश्यते ततश्च सर्व्वं कर्म्म लौकिकं वैदिकञ्च यद्यत्पुरुषः कुरुते तत्त दिच्छाकार्य्यम् ॥ ४ ॥

तेषु सम्यग्वर्त्तमानो गच्छत्यमरलोकताम्। यथा सङ्कल्पितांश्चेह सर्व्वान्कामान्समश्नुते ॥ ५ ॥

सम्प्रति पूर्व्वोक्तफलाभिलाषनिषेधन्नियमयति। तेषु सम्य ग्वर्त्तमान इति। नात्रेच्छा निषिध्यते किन्तु शास्त्रोक्तकर्मासु सम्यग्वृत्तिर्विधीयते बन्धहेतुफलाभिलाषं विना शास्त्रीयकर्म्म णामनुष्ठानं तेषु सम्यग्वृत्तिः सम्यग्वर्त्तमानोऽमरलोकतां अमरधर्म्मकं ब्रह्मभावङ्गच्छति मोक्षंप्राप्नोतीत्यर्थः तथा भूतश्च सर्वेश्वरत्वादिहापि लोके सर्व्वानभिलषितान् प्राप्नोति। तथाच छान्दोग्ये। स यदा पितृलोककामोभवति सङ्कल्पादे वास्य पितरः समुत्तिष्ठन्तीत्यादि ॥ ५ ॥

वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ ६ ॥

इदानीं धर्म्मप्रमाणान्याह। वेदोऽखिलो धर्म्ममूलमिति। वेद ऋग्यजुःसामाथर्व्वलक्षणः स सर्व्वो विध्यर्थवादमन्त्रात्मा धर्म्मे मूलम्प्रमाणं अर्थवादानामपि विध्येकवाक्यतया स्तावकत्वेन धर्म्मे प्रामाण्यात्। यदाह जैमिनिः। विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः। मन्त्रार्थवादानामपि विधिवाक्यैकवाक्यतयैव धर्म्मे प्रामाण्यं प्रयोगकाले चानुष्ठेयस्मारकत्वं वेदस्य च धर्म्मे प्रामाण्यं यथानुभवकरणत्वरूपं न्यायसिद्धं स्मृत्यादीनामपि तन्मूलत्वेनैव प्रामाण्यप्रतिपादनार्थमनूद्यते मन्वादीनाञ्च वेदविदां स्मृतिर्धर्म्मे प्रमाणं वेदविदामिति विशेषणोपादानाद्वेदमूलत्वेनैव स्मृत्यादीनाम्प्रामाण्यमभिमतं शीलं ब्रह्मण्यतादिरूपम्। तदाह हारीतः। ब्रह्मण्यता देवपितृभक्तता सौम्यता अपरोपतापिता अनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलम्। गोविन्दराजस्तु शीलं रागद्वेषपरित्याग इत्याह। आचारः कम्बलवल्कलाद्याचरणरूपः साधूनान्धार्मिकाणां आत्मतुष्टिश्च वैकल्पिकपदार्थविषया धर्म्मे प्रमाणम्। तदाह गर्गव्यासः। वैकल्पिके आत्मतुष्टिः प्रमाणम् ॥ ६ ॥

यः कश्चित्कस्य चिद्धर्मो मनुना परिकीर्त्तितः।
स सर्व्वोऽभिहितो वेदे सर्व्वज्ञानमयो हि सः ॥ ७ ॥

वेदादन्येषां वेदमूलत्वेन प्रामाण्येऽभिहितेपि मनुस्मृतेः सर्व्वोत्कर्षज्ञापनाय विशेषेण वेदमूलतामाह। यः कश्चिदिति। यः कश्चित्कस्यचिद्ब्राह्मणादेर्मनुना धर्म्मउक्तः स सर्व्वो वेदे प्रतिपादितः। यस्मात्सर्व्वज्ञोऽसौ मनुः सर्व्वज्ञतया चात्मन्न विप्रकीर्णपठ्यमानवेदार्थं सम्यग्ज्ञात्वा लोकहितायोपनिबद्धवान्। गोविन्दराजस्तु सर्व्वज्ञानमयइत्यस्य सर्व्वज्ञानारब्ध इव वेदइति वेदविशेषणतामाह ॥ ७ ॥

सर्व्वन्तु समवेक्ष्येदन्निखिलं ज्ञानचक्षुषा। श्रुतिप्रामाण्यतोविद्वान् स्वधर्म्मे निविशेत वै ॥ ८ ॥

सर्व्वन्त्विति। सर्व्वं शास्त्रजातं वेदार्थावगमोचितं मीमांसाव्याकरणादिकं ज्ञानमेव चक्षुस्तेन निखिलं तद्विशेषेण पर्य्यालोच्य वेदप्रामाण्येनानुष्ठेयमवगम्य स्वधर्म्मेऽवतिष्ठेत ॥ ८ ॥

श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठन् हि मानवः।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ ९ ॥

श्रुतिस्मृत्युदितमिति। श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठन् मानव इह लोके धार्म्मिकत्वेनानपङ्क्तिकीं कीर्त्तिं परलोके च धर्म्म

फलमुत्कृष्टं स्वर्गापवर्गादिसुखरूपमाप्नोति। अनेन वास्तवगुणकथनेन श्रुतिस्मृत्युदितं धर्ममनुतिष्ठेदिति विधिः कल्प्यते ॥ ९ ॥

श्रुतिस्तु वेदोविज्ञेयोधर्मशास्त्रन्तु वै स्मृतिः।
ते सर्व्वार्थेष्वमीमांस्ये ताभ्यान्धर्मोहि निर्व्वभौ ॥१०॥

श्रुतिस्त्विति। लोकप्रसिद्धसंज्ञासंज्ञिसम्बन्धानुवादोयं श्रुतिस्मृत्योः प्रतिकूलतर्केणामीमांस्यत्वविधानार्थं स्मृतेः श्रुतितुल्यत्वबोधनेनाचारादिभ्योबलवत्त्वप्रतिपादनार्थञ्च तेन स्मृतिविरुद्धाचारोहेयइत्यस्य फलं श्रुतिर्वेदोमन्वादिशास्त्रं स्मृतिः ते उभे प्रतिकूलतर्केन विचारयितव्ये यतस्ताभ्यां निःशेषेण धर्मोवभौ प्रकाशताङ्गतः ॥ १० ॥

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः। ससाधुभिर्वहिष्कार्य्योनास्तिकोवेदनिन्दकः ॥ ११ ॥

योवमन्येतेति। यः पुनस्ते द्वे श्रुतिस्मृती द्विजोऽवमन्येत स शिष्टैर्द्विजानुष्ठेयाध्ययनादिकर्म्मणोनिःसार्य्यः पूर्व्वश्लोके सामान्येनामीमांस्ये इति मीमांसानिषेधादनुकूलमीमांसापि न प्रवर्त्तनीयेति भ्रमोमाभूदिति विशेषयति हेतुशास्त्राश्रयात्

वेदवाक्यमप्रमाणं ,वाक्यत्वात् विप्रलम्भकवाक्यवदित्यादिप्रतिकूलतर्कावष्टम्भेन चार्व्वाकादिनास्तिकइव नास्तिकोयतोवेदनिन्दकः ॥ ११ ॥

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्व्विधम्प्राहुः साक्षाद्धर्म्मस्य लक्षणम्॥ १२ ॥

इदानीं शीलस्याचारएवान्तर्भावसम्भवात् वेदमूलता एव तत्त्वं न स्मृतिशीलादिप्रकारनियमइति दर्शयितुञ्चतुर्द्धा धर्म्मप्रमाणमाह। वेदइति। वेदोधर्म्मे प्रमाणं स क्वचित्प्रत्यक्षः क्वचित्स्मृत्यानुमितः इत्येतत्तात्पर्य्यं नतु प्रमाणपरिगणने अतएव श्रुतिस्मृत्युदितं धर्म्ममित्यत्र द्वयमेवाभिहितवान् सदाचारः शिष्टाचारः स्वस्य चात्मनः प्रियमात्मतुष्टिः॥ १२ ॥

अर्थकामेष्वसक्तानान्धर्म्मज्ञानं विधीयते।
धर्म्मञ्जिज्ञासमानानाम्प्रमाणम्परमं श्रुतिः॥ १३ ॥

अर्थकामेष्विति। अर्थकामेष्वसक्तानां अर्थकामलिप्साशून्यानान्धर्म्मोपदेशोयं येत्वर्थकामसमीहया लोकप्रतिपत्त्यर्थन्धर्म्ममनुतिष्ठन्ति न तेषाङ्कर्म्मफलमित्यर्थः धर्म्मञ्च ज्ञातुमिच्छतामुत्कृष्टम्प्रमाणं श्रुतिः। प्रकर्षबोधनेन च श्रुतिस्मृतिविरोधे

स्मृत्यर्थोनादरणीयइति भावः। अतएव जावालः। श्रुति स्मृतिविरोधेतु श्रुतिरेव गरीयसी। अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत्सता। भविष्यपुराणेप्युक्तम्। श्रुत्या सह विरोधे तु बाध्यते विषयं विना। जैमिनिरप्याह। विरोधे त्वनपेक्षं स्यादसति ह्यनुमानं। श्रुतिविरोधे स्मृतिवाक्यमन पेक्ष्यं अप्रमाणं अनादरणीयं। असति विरोधे मूलवेदानु मानमित्यर्थः॥१३॥

श्रुतिद्वैधन्तु यत्र स्यात्तत्र धर्म्मावुभौ स्मृतौ।
उभावपि हि तौ धर्म्मौ सम्यगुक्तौ मनीषिभिः॥१४॥

श्रुतिद्वैधन्त्विति। यत्र पुनः श्रुत्योरेव द्वैधम्परस्परविरु द्धार्थप्रतिपादनन्तत्र द्वावपि धर्म्मौ मनुना स्मृतौ तुल्यबल तया विकल्पानुष्ठानविधानेन च विरोधाभावः। यस्मान्मन्वा दिभ्यः पूर्व्वतरैरपि विद्वद्भिः सम्यक्समीचीनौ द्वावपि तौ धर्म्मा वुक्तौ समानन्यायतया स्मृत्योरपि विरोधे विकल्पइति प्रकृतो पयोगः तुल्यबलत्वाविशेषात् तदाह गौतमः। तुल्यबलविरोधे विकल्पः॥१४॥

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्व्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः॥१५॥

अत्र दृष्टान्तमाह। उदितेऽनुदिते चैवेति। सूर्य्यनक्षत्र वर्जितः कालः समयाध्युषितशब्देन उच्यते। उदयात्पूर्व्वं

मरुणकिरणवान् प्रविरलतारकोऽनुदितकालः परस्परविह्रकालश्रवणेपि सर्व्वथा विकल्पेनाग्निहोत्रहोमः प्रवर्त्तते। देवतोद्देशेन द्रव्यत्यागगुणयोगात् यज्ञशब्दोत्र गौणः उदिते होतव्यमित्यादिका वैदिकी श्रुतिः ॥ १५ ॥

निषेकादिश्मशानान्तोमन्त्रैर्यस्योदितोविधिः। तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयोनान्यस्य कस्यचित्॥१६॥

निषेकादीति। गर्भाधानादिरन्त्येष्टिपर्य्यन्तोयस्य वर्णस्य मन्त्रैरनुष्ठानकलापउक्तोद्विजातेरित्यर्थः। तस्यास्मिन्मानवधर्मशास्त्रेऽध्ययनेश्रवणेऽधिकारः। नत्वन्यस्य कस्यचिच्छूद्रादेः। एतच्छास्त्रानुष्ठानञ्च यथाधिकारं सर्व्वैरेव कर्त्तव्यस्य वचनन्त्वस्याध्यापनं व्याख्यानरूपं ब्राह्मणकर्तृकमेवेति विदुषा ब्राह्मणेन इत्यत्र व्याख्यातम् ॥ १६ ॥

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तन्देवनिर्म्मितन्देशम्ब्रह्मावर्त्तम्प्रचक्षते ॥ १७ ॥

सरस्वतीति। धर्म्मस्य स्वरूपम्प्रमाणम्परिभाषाञ्चोक्त्वा इदानीं धर्म्मानुष्ठानयोग्यदेशानाह। सरस्वतीदृषद्वत्योर्नद्योरुभयोर्मध्यम्ब्रह्मावर्त्तन्देशमाहुः। देवनदीदेवनिर्मितशब्दौ नदीदेशप्राशस्त्यार्थौ ॥ १७ ॥

तस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः।
वर्णानां सान्तरालानां स सदाचारउच्यते ॥ १८ ॥

तस्मिन्देशइति। तस्मिन् देशे प्रायेण शिष्टानां सम्भवात् तेषां ब्राह्मणादिवर्णानां सङ्कीर्णजातिपर्य्यन्तानां य आचारः पारम्पर्य्यक्रमागतोनत्विदानीन्तनः स सदाचारोऽभिधीयते ॥ १८ ॥

कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशोवै ब्रह्मावर्त्तादनन्तरः ॥ १९ ॥

कुरुक्षेत्रमिति। मत्स्यादिशब्दा वज्रवचनान्ताएव, देशविशेषवाचकाः पञ्चालाः कान्यकुब्जदेशाः शूरसेनका मथुरादेशाः एष ब्रह्मर्षिदेशोब्रह्मावर्त्तात्किञ्चिदूनः ॥ १९ ॥

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वञ्चरित्रं शिक्षेरन् पृथिव्यां सर्व्वमानवाः ॥ २० ॥

एतद्देशइति। कुरुक्षेत्रादिदेशजातस्य ब्राह्मणस्य सकाशात्सर्व्वमनुष्या आत्मीयमात्मीयमाचारं शिक्षेरन् ॥ २० ॥

हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥ २१ ॥

हिमवद्दिति। उत्तरदक्षिणदिगवस्थितौ हिमवद्विन्ध्यौ पर्व्वतौ तयोर्यन्मध्यं विनशनात्सरस्वत्यन्तर्धानदेशात् यत्पूर्व्वं प्रयागाच्च यत्पश्चिमं स मध्यदेशनामा देशः कथितः ॥ २१ ॥

आसमुद्रात्तु वै पूर्व्वादासमुद्रात्तु पश्चिमात्।
तयोरेवान्तरङ्गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः ॥ २२ ॥

आसमुद्रात्त्विति। आपूर्व्वसमुद्रात् आपश्चिमसमुद्रात् हिमवद्विन्ध्ययोश्च यन्मध्यन्तमार्य्यावर्त्तदेशम्पण्डिताजानन्ति। मर्य्यादायामयमाङ् नाभिविधौ तेन समुद्रमध्यद्वीपानां नार्य्यावर्त्तता आर्य्या अत्रावर्त्तन्ते पुनः पुनरुद्भवन्तीत्यार्य्यावर्त्तः॥२२॥

कृष्णसारस्तु चरति मृगोयत्र स्वभावतः। स ज्ञेयोयज्ञियोदेशोम्लेच्छदेशस्त्वतः परः ॥ २३ ॥

कृष्णसारस्त्विति। कृष्णसारोमृगोयत्र स्वभावतोवसति नतु बलादानीतः स यज्ञार्होदेशोज्ञातव्यः। अन्योम्लेच्छदेशोन यज्ञार्ह इत्यर्थः ॥ २३ ॥

एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः ।
शूद्रस्तु यस्मिन् कस्मिन्वा निवसेद्वृत्तिकर्षितः ॥ २४॥

एतानिति । अन्यदेशोद्भवा अपि द्विजातयो यज्ञार्थत्वाद दृष्टार्थत्वाच्च एतान् देशान् प्रयत्नादाश्रयेरन् शूद्रस्तु वृत्ति पीडितो वृत्त्यर्थमन्यदेशमप्याश्रयेत् ॥ २४ ॥

एषा धर्मस्य वो योनिः समासेन प्रकीर्त्तिता ।
सम्भवश्चास्य सर्व्वस्य वर्णधर्मान्निबोधत ॥ २५ ॥

एषाधर्मस्येति । एषा युष्माकन्धर्मस्य योनिः संक्षेपेणोक्ता योनिर्ज्ञप्तिकारणं वेदोऽखिलोधर्ममूलमित्यादिना उक्त मित्यर्थः । गोविन्दराजस्त्विह धर्मशब्दोऽपूर्व्वाख्यात्मकधर्मे वर्त्तत इति विद्वद्भिः सेवितइत्यत्र तत्कारणेऽष्टकादौ चाऽपूर्व्वा ख्यस्य धर्मस्य योनिरिति व्याख्यातवान् । सम्भवश्चोत्पत्तिर्जगत इत्युक्ता इदानीं वर्णधर्मान् शृणुत । वर्णधर्मशब्दस्तु वर्णधर्मा श्रमधर्मवर्णाश्रमधर्मगुणधर्मनैमित्तिकधर्माणामुपलक्षकः। ते च भविष्यपुराणोक्ताः । वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम् । वर्णाश्रमस्तृतीयस्तु गौणोनैमित्तिकस्तथा । वर्णत्वमे कमाश्रित्य योधर्मः सम्प्रवर्त्तते । वर्णधर्मः स उक्तस्तु यथोपन

यनं नृप। यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्त्तते। स खल्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा। वर्णत्वमाश्रमत्वञ्च योऽधिकृत्य प्रवर्त्तते। स वर्णाश्रमधर्मस्तु मौञ्जीया मेखला यथा। यो गुणेन प्रवर्त्तेत गुणधर्मः स उच्यते। यथा मूर्द्धाभिषिक्तस्य प्रजानाम्परिपालनम्। निमित्तमेकमाश्रित्य यो धर्मः सम्प्रवर्त्तते। नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥ २५ ॥

वैदिकैः कर्म्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ २६ ॥

वैदिकैरिति। वेदमूलत्वाद्वैदिकैः पुण्यैः शुभैर्मन्त्रयोगादिकर्म्मभिः द्विजातीनाङ्गर्भाधानादिशरीरसंस्कारः कर्त्तव्यः पावनः पापक्षयहेतुः प्रेत्य परलोके संस्कृतस्य यागादिफलसम्बन्धात् इहलोके च वेदाध्ययनाद्यधिकारात् ॥ २६ ॥

गार्भैर्होमैर्जातकर्म्मचौडमौञ्जीनिबन्धनैः। बैजिकं
गार्भिकञ्चैनो द्विजानामपमृज्यते ॥ २७ ॥

कुतः पापसम्भवो येनैषाम्पापक्षयहेतुत्वमत आह। गार्भैरिति। ये गर्भशुद्धये क्रियन्ते ते गार्भाः होमग्रहणमुपलक्षणं

गर्भाधानादेर्होमरूपत्वात् जातस्य यत्कर्म मन्त्रवत्सर्पिःप्राश नादिरूपं तज्जातकर्म चौडं चूडाकरणकर्म मौञ्जीनिबन्धनमुप नयनं एतैर्वैजिकमतिषिद्धमैथुनसंकल्पादिना च पैतृकरेतोदो षात् यदेनत्पापं गार्भिकञ्चाशुचिमातृगर्भवासजं तत् द्विजातीनां मपमृज्यते ॥ २७ ॥

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः। महा यज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ २८ ॥

स्वाध्यायेनेति। वेदाध्ययनेन व्रतैर्मधुमांसवर्जनादिनियमै र्होमैः सावित्रचरुहोमादिभिः सायम्प्रातर्होमैश्च त्रैविद्या ख्येन च व्रतेन प्राधान्यादस्य पृथगुपन्यासः। इज्यया ब्रह्म चर्य्यावस्थायान्देवर्षिपितृतर्पणरूपया गृहस्थावस्थायाम्पुत्रोत्पा दनेन महायज्ञैः पञ्चभिर्ब्रह्मयज्ञादिभिः। यज्ञैर्ज्योतिष्टोमा दिभिः ब्राह्मी ब्रह्मप्राप्तियोग्येयं तनुः तदवच्छिन्न आत्मा क्रियते कर्मसहकृतब्रह्मज्ञानेन मोक्षावाप्तेः ॥ २८ ॥

प्राङ्नाभिवर्द्धनात्पुंसो जातकर्म विधीयते। मन्त्र वत्प्राशनञ्चास्य हिरण्यमधुसर्पिषाम् ॥ २९ ॥

प्रागिति। नाभिच्छेदनात्प्राक् पुरुषस्य जातकर्माख्यः संस्कारः क्रियते। तदा चास्य स्वगृह्योक्तमन्त्रैः स्वर्णमधुघृताना म्प्राशनम् ॥ २९ ॥

नामधेयन्दशम्यान्तु द्वादश्यां वास्य कारयेत्।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥ ३० ॥

नामधेयमिति। जातकर्मेति पूर्व्वश्लोके जन्मनः प्रस्तुतत्वात् जन्मापेक्षयैव दशमेद्वादशे वाहनि अस्य शिशोर्नामधेयं स्वयम सम्भवे कारयेत्। अथवा। अशौचे तु व्यतिक्रान्ते नामकर्म्म विधीयतइति शङ्खवचनाद्दशमेऽहन्यतीते एकादशाहइति व्याख्येयं तत्राप्यकरणे प्रशस्ततिथौ प्रशस्तएवमुहूर्त्तेनक्षत्रे च गणवत्येव ज्योतिषावगते कर्त्तव्यं वाशब्दोऽवधारणे॥ ३० ॥

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ ३१ ॥

मङ्गल्यमिति। ब्राह्मणादीनां यथाक्रमं मङ्गलबलधन निन्दावाचकानि शुभबलवसुदीनादीनि नामानि कर्त्तव्यानि ॥ ३१ ॥

शर्म्मवद्ब्राह्मणस्य स्याद्राज्ञोरक्षासमन्वितम्।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्य संयुतम् ॥ ३२ ॥

इदानीमुपपदनियमार्थमाह। शर्म्मवद्ब्राह्मणस्येति। एषां यथाक्रमं शर्म्मरक्षापुष्टिप्रैष्यवाचकानि कर्त्तव्यानि शर्म्मवद्

भूतिदासादीनि उपपदानि कार्य्याणि उदाहरणानि तु शुभशर्म्मा बलवर्म्मा वसुभूतिः दीनदास इति। तथा च यमः। शर्म्मा देवश्च विप्रस्य वर्म्मा त्राता च भूभुजः। भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्। विष्णुपुराणेप्युक्तं। शर्म्मवद्ब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंयुतम्। गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ ३२ ॥

स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्।
मङ्गल्यं दीर्घवर्णान्तमाशीर्व्वादाभिधानवत् ॥ ३३ ॥

स्त्रीणामिति। सुखोच्चार्य्यमक्रूरार्थवाचि व्यक्ताभिधेयं मनःप्रीतिजननं मङ्गलवाचि दीर्घस्वरान्तं आशीर्व्वाचकेना भिधानेन शब्देनोपेतं स्त्रीणान्नाम कर्त्तव्यं यथा यशोदादेवीति ॥ ३३ ॥

चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्।
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥ ३४ ॥

चतुर्थेमासीति। चतुर्थे मासे बालस्य जन्मगृहान्निष्क्रमण मादित्यदर्शनार्थं कार्य्यम। अन्नप्राशनञ्च षष्ठे मासे अथवा

कुलधर्म्मत्वेन यन्मङ्गलमिष्टं तत्कर्त्तव्यस्तेनोक्तकालादन्यकालेपि निष्क्रमणम्। तथा च यमः। ततस्तृतीये कर्त्तव्यं मासि सूर्य्यस्य दर्शनम्। सकलसंस्कारविषयस्वायं तेन नाम्नां धर्मादिक्रमणुपपदं कुलाचारेण कर्त्तव्यम्॥ ३४॥

चूड़ाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥ ३५॥

चूड़ाकर्म्मेति। चूड़ाकरणम्प्रथमे वर्षे तृतीये वा द्विजातीनान्धर्म्मतोधर्म्मार्थं कार्य्यं श्रुतिचोदनात्। यत्र वाणाः सम्पतन्ति कुमाराविशिखाद्द्रवंति मन्त्रलिङ्गात्कुलधर्म्मानुसारेणायं व्यवस्थितविकल्पः। अतएवाश्वलायनगृह्यम्। तृतीये वर्षे चूड़ाकरणं यथाकुलधर्म्मं वा॥ ३५॥

गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम्। गर्भादेकादशे राज्ञोगर्भात्तुद्वादशे विशः॥ ३६॥

गर्भाष्टमइति। गर्भवर्षादष्टमे वर्षे ब्राह्मणस्योपनायनं कर्त्तव्यं उपनयनमेवोपनायनं अन्येषामपि दृश्यतइति दीर्घः। गर्भैकादशे चत्रियस्य गर्भद्वादशे वैश्यस्य॥ ३६॥

ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे। राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे॥ ३७॥

ब्रह्मवर्चसकामस्येति। वेदाध्ययनतदर्थज्ञानादिप्रकर्षकृतन्तेजो ब्रह्मवर्चसन्तत्कामस्य ब्राह्मणस्य गर्भपञ्चमे वर्षे उपनयनं कार्य्यं क्षत्रियस्य हस्त्यश्वादिराज्यबलार्थिनो गर्भषष्ठे वैश्यस्य बहुकृष्यादिचेष्टार्थिनो गर्भाष्टमे गर्भवर्षाणामेव प्रकृतत्वात्। यद्यपि बालस्य कामना न सम्भवति तथापि तत्पितुरेव तद्गतफलकामना तस्मिन्नुपचर्य्यते॥ ३७॥

आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्त्तते। आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः॥ ३८॥

आषोडशादिति। अभिविधावाङ् ब्राह्मणक्षत्रियविशामुक्ताष्टमैकादशद्वादशवर्षद्वैगुण्यस्य विवक्षितत्वात् षोडशवर्षपर्य्यन्तं ब्राह्मणस्य सावित्र्यनुवचनमुपनयनन्नातिक्रान्तकालम्भवति। क्षत्रियस्य द्वाविंशतिवर्षपर्य्यन्तं वैश्यस्य चतुर्विंशतिवर्षपर्य्यन्तम्। अत्र मर्य्यादायामाङ् केचिद्व्याख्यापयन्ति यमवचनदर्शनात्। तथाच यमः। पतिता यस्य सावित्री दश वर्षाणि पञ्च च। ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः। प्राय

श्चित्तमवेदेषां प्रोवाच वदतांवरः। विवस्वतः सुतः श्रीमान् यमोधर्म्मार्थतत्त्ववित्। अग्निस्थं वपनं कृत्वा व्रतं कुर्य्यात्समाहितः। हविष्यं भोजयेदन्नं ब्राह्मणान्सप्त पञ्च वा॥ ३८॥

अत ऊर्द्धं त्रयोप्येते यथाकालमसंस्कृताः।
पतिता व्रात्या भवन्त्यार्य्यविगर्हिताः॥ ३९ ॥

अत ऊर्द्धमिति। एते ब्राह्मणादयोयथाकालं योयस्यानुकल्पिकोप्युपनयनकाल उक्तः षोडशवर्षादिपर्य्यन्तं तत्रासंस्कृतास्तदूर्द्धं सावित्रो पतिता उपनयनहीनाः शिष्टगर्हिता व्रात्यसंज्ञा भवन्ति संज्ञाप्रयोजनञ्च व्रात्यानां याजनं कृत्वेत्यादिना व्यवहारसिद्धिः॥ ३९॥

नैतैरपूतैर्व्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान् यौनांश्च सम्बन्धान्नाचरेद्ब्राह्मणः सह॥४०॥

नैतैरिति। एतैरपूतैर्व्रात्यैर्यथाविधि प्रायश्चित्तमकृतवद्भिः सह आपत्कालेपि कदाचिदध्यापनकन्यादानादोन्सम्बन्धान् ब्राह्मणोनानुतिष्ठेत्॥ ४०॥

कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिणः।
वसीरन्नानुपूर्व्वेण शाणचौमाविकानि च ॥ ४१ ॥

कार्ष्णरौरववास्तानीति। कार्ष्णइति विशेषानभिधानेपि मृगविशेषः रुरुसाहचर्य्यात् हारिणमैणेयं वा कार्ष्णं वा ब्राह्मणस्येत्यापस्तम्बवचनाच्च कृष्णमृगो गृह्यते। कृष्णमृगरुरुच्छागचर्म्माणि ब्रह्मचारिणउत्तरीयाणि वसीरन् चर्म्माण्युत्तरीयाणीति गृह्यवचनात्। तथा शणचुमामेषलोमभवान्यधोवसनानि ब्राह्मणादयः क्रमेण परिदधीरन् ॥ ४१ ॥

मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥ ४२ ॥

मौञ्जीति। मुञ्जमयी त्रिगुणा समगुणत्रयनिर्मिता सुखस्पर्शा ब्राह्मणस्य मेखला कर्त्तव्या क्षत्रियस्य मुर्व्वामयी ज्या धनुर्गुणरूपा मेखला अतोज्यात्वविनाशापत्तेस्त्रिवृत्त्वं नास्तीति मेधातिथिगोविन्दराजौ। वैश्यस्य शणसूत्रमयी अत्र त्रैगुण्यं अनुवर्त्तत एव त्रिगुणा प्रदक्षिणा मेखला इति सामान्येन प्रचेतसा त्रैगुण्याभिधानात् ॥ ४२ ॥

मुञ्जालाभे तु कर्त्तव्याः कुशाश्मान्तकवल्वजैः।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥ ४३॥

मुञ्जालाभेत्विति। कर्त्तव्यादति बहुवचननिर्देशाद्ब्रह्मचारित्रयस्य प्रकृतत्वात् मुख्यालाभे त्रिष्वप्यपेक्षायाः समत्वात् कौशादीनाञ्च तिसृणां विधानात् मुञ्जाद्यलाभइति बोद्धव्यं। कर्त्तव्यादति बहुवचनमुपपन्नतरं भिन्नजातिसम्बन्धितयेति ब्रुवाणस्य मेधातिथेरपि बहुवचनपाठः सम्मतः। मुञ्जाद्यलाभे ब्राह्मणादीनान्त्रयाणां यथाक्रमं कुशादिभिस्त्रिभिस्तृणविशेषैर्मेखलाः कार्य्याः। त्रिगुणैकग्रन्थिना युक्तास्त्रिभिर्वा पञ्चभिर्वा अत्र च वाशब्दनिर्देशात् ग्रन्थीनां न विप्रादिभिः क्रमेण सम्बन्धः किन्तु सर्व्वत्र यथाकुलाचारं विकल्पः। ग्रन्थिभेदश्चायं मुख्यामुख्यापेक्षासम्भवाद्गृहीतव्यः ॥ ४३ ॥

कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतन्त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥ ४४ ॥

कार्पासमिति। यदीयविन्यासविशेषस्योपवीतसंज्ञां वक्ष्यति तद्धर्मिब्राह्मणस्य कार्पासं क्षत्रियस्य शणसूत्रमयं वैश्यस्य मेषलोमनिर्मितं त्रिवृदिति त्रिगुणं कृत्वा ऊर्द्ध्ववृतन्दक्षिणावर्त्तितं

एतच्च सर्व्वत्र सम्बध्यते यद्यपि गुणत्रयमेवोर्द्धं वृतं मनुना क्तन्तथापि तन्त्रिगुणीकृत्य त्रिगुणं कार्य्यम्। तदुक्तं छन्दोगपरिशिष्टे ऊर्द्धन्तु त्रिवृतं कार्य्यन्तन्तुत्रयमधोवृतम्। त्रिवृतञ्चोपवीतं स्यात्तस्यैकोग्रन्थिरिष्यते। देवलोप्याह। यज्ञोपवीतं कुर्वीत सूत्राणि नवतन्तवः ॥ ४४ ॥

ब्राह्मणोवैल्वपालाशौ क्षत्रियोवाटखादिरौ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्म्मतः ॥ ४५ ॥

ब्राह्मणइति। यद्यपि द्वन्द्वनिर्द्देशेन समुच्चयावगमात् धारणमपि समुच्चितस्यैव प्राप्तं तथापि केशान्तिकोब्राह्मणस्य दण्डः कार्य्य इति तथा प्रतिगृह्मेप्सितन्दण्डमिति विधावेकत्वस्य विवक्षितत्वात्। वैल्वः पालाशोवा दण्डइति वाशिष्ठे विकल्पदर्शनात् एकस्यैव दण्डस्य धारणं विकल्पितयारेवैकब्राह्मणसम्बन्धात् समुच्चयोद्वन्द्वेनानूद्यते ब्राह्मणादयोविकल्पेन द्वादौ दण्डौ वक्ष्यमाणकार्य्ये कर्त्तमर्हन्ति ॥ ४५ ॥

केशान्तिकोब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः।
ललाटसंमितोराज्ञः स्यात्तु नासान्तिकोविशः ॥ ४६ ॥

केशान्तिकइति। केशललाटनासिकापर्य्यन्तपरिमाणक्रमेण ब्राह्मणादीनां दण्डाः कर्त्तव्याः ॥ ४६ ॥

ऋजवस्तेतु सर्वेस्युरव्रणाः सौम्यदर्शनाः। अनुद्वेगकरा नृणां सत्वचोनाग्निदूषिताः ॥ ४७॥

ऋजवइति। ते दण्डा अव्रणा अचताः शोभनदर्शनाः सवल्कलाः। अग्निदाहरहिता भवेयुः ॥ ४७ ॥

प्रतिगृह्येप्सितन्दण्डमुपस्थाय च भास्करम्। प्रदक्षिणम्परीत्याग्निञ्चरेद्भैक्षं यथाविधि ॥ ४८ ॥

नच तैः प्राणिजातमुद्वेजनीयमित्याह। प्रतिगृह्येप्सितमिति। उक्तलक्षणं प्राप्तुमिष्टन्दण्डं गृहीत्वा आदित्याभिमुखं स्थित्वाग्निम्प्रदक्षिणीकृत्य यथाविधि भैक्षं याचेत् ॥ ४८ ॥

भवत्पूर्व्वञ्चरेद्भैक्षमुपनीतोद्विजोत्तमः। भवन्मध्यन्तु राजन्योवैश्यस्तु भवदुत्तरम् ॥ ४९ ॥

भवदिति। ब्राह्मणोभवति भिक्षां देहीति भवच्छब्दपूर्व्वं भिक्षां याचन् वाक्यमुच्चारयेत्। क्षत्रियोभिक्षां भवति देहीति भवन्मध्यं वैश्योभिक्षां देहि भवतीति भवदुत्तरम् ॥ ४९ ॥

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥ ५० ॥

मातरंवेति। उपनयनाङ्गभूतां भिक्षां प्रथमं मातरं भगिनीं मातुर्वा भगिनीं सहोदरां याचेत् या चैनं ब्रह्मचारिणं प्रत्याख्यानेन नावमन्येत पूर्वासम्भवे उत्तरापरिग्रहः ॥ ५० ॥

समाहृत्य तु तद्भैक्षं यावदन्नममायया। निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥ ५१ ॥

समाहृत्येति। तद्भैक्षं बहुभ्य आहृत्य यावदन्नं तृप्तिमात्रोचितं गुरवे निवेद्य निवेदनं कृत्वा अमायया न कदन्नेन सदन्नं प्रच्छाद्य एवमेतद्गुरुर्ग्रहीष्यतीत्यादिमायाव्यतिरेकेण तदनुज्ञात आचमनं कृत्वा शुचिः सन् भुञ्जीत प्राङ्मुखः ॥ ५१ ॥

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥ ५२ ॥

इदानीं काम्यभोजनमाह। आयुष्यमिति। आयुषे हितमन्नं प्राङ्मुखो भुङ्क्ते आयुःकामः प्राङ्मुखो भुञ्जीतेत्यर्थः। यशसे हितं दक्षिणामुखः। श्रियमिच्छन् प्रत्यङ्मुखः। ऋतं सत्यं तत्फलमिच्छन् उदङ्मुखो भुञ्जीत ॥ ५२ ॥

उपस्पृश्य द्विजो नित्यमन्नमद्यात्समाहितः। भुक्त्वा चोपस्पृशेत्सम्यगद्भिः खानि च संस्पृशेत्॥ ५३॥

उपस्पृश्येति। निवेद्य गुरवेऽश्नीयादाचम्येति यद्यपि भोजनात्प्रागाचमनं विहितन्तथाप्यद्भिः खानि च संस्पृशेदिति गुणविधानार्थोऽनुवादः नित्यम्ब्रह्मचर्य्यानन्तरमपि द्विजश्चाचम्यान्नं भुञ्जीत समाहितोऽनन्यमनाः भुक्त्वा चाचामेत् सम्यग्यथाशास्त्रं तेन प्रक्षाल्य हस्तौ पादौ च त्रिःपिबेदम्बुवीक्षितं इत्यादिदक्षाद्युक्तमपि संगृह्णाति जलेन खानीन्द्रियाणि षट्छिद्राणि च स्पृशेत् तानि च शिरःस्थानि घ्राणचक्षुःश्रोत्रादीनि ग्रहीतव्यानि। खानि चोपस्पृशेत् शीर्षण्यानीति गोतमवचनात्। उपस्पर्शनं कृत्वा खानि च संस्पृशेदिति पृथग्विधानात् शिरःश्रवणमात्रमाचमनं खस्पर्शनादिकमिति कर्त्तव्यतादृति दर्शितम्॥ ५३॥

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्। दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्व्वशः॥ ५४॥

पूजयेदशनमिति। सर्व्वदा अन्नं पूजयेत् प्राणार्थत्वेनार्चेत्। तदुक्तमादिपुराणे। अन्नं विष्णुः स्वयंप्राह इत्यनु

वृत्तौ प्राणार्थं मां सदाध्यायेत्स मां सम्पूजयेत्सदा। अनिन्दं स्वैतदद्यात् दृष्ट्वा हृष्येत् प्रसीदेच्चेति हेत्वन्तरमपि खेदमद्य दर्शनेन त्यजेत्। प्रतिनन्देत् नित्यमस्माकमेतदस्त्विति अभि धाय वन्दनप्रतिनन्दनम्। तदुक्तमादिपुराणे। अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः। अस्माकं नित्यमस्त्वेतदिति भक्त्या स्तुवन्नमेत्। सर्व्वशः सर्व्वमन्नम् ॥ ५४ ॥

पूजितं ह्यशनं नित्यं बलमूर्जञ्च यच्छति।
अपूजितन्तु तद्भुक्तमुभयं नाशयेदिदम् ॥ ५५ ॥

पूजितमिति। यस्मात्पूजितमन्नं सामर्थ्यं वीर्य्यञ्च ददाति अपूजितम्पुनरेतदुभयं नाशयति तस्मात्सर्व्वदाऽन्नं पूजयेदिति पूर्व्वेणैकवाक्यतापन्नमिदम्। फलश्रवणं सन्ध्यावन्दनादावुपात्तदुरितक्षयवन्नित्यं कामनाविषयत्वेनापि नित्यश्रुतिरविहता। नित्यश्रुतिविरोधात् फलश्रवणं स्तुत्यर्थमिति तु मेधातिथिगोविन्दराजौ ॥ ५५ ॥

नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथान्तरा। नचैवात्यशनं कुर्य्यान्न चोच्छिष्टः क्वचिद्व्रजेत् ॥ ५६ ॥

नोच्छिष्टमिति। भुक्तावशेषं कस्यचिन्न दद्यात् चतुर्थ्यां प्राप्तायां सम्बन्धमात्रविवक्षया षष्ठी। अनेनैव सामान्यनिषेधेन

शूद्रस्याप्युच्छिष्टदाननिषेधे सिद्धे नोच्छिष्टं न हविष्कृतमिति, शूद्रगोचरनिषेधश्चातुर्थः स्नातकव्रतत्वार्थः। दिवासायंभोजन योस्तु मध्ये न भुञ्जीत वारद्वयेप्यतिभोजनं न कुर्य्यात्। नातिसौहित्यमाचरेदिति चातुर्थं स्नातकव्रतार्थं उच्छिष्टः सन् क्वचिन्न गच्छेत्॥ ५६॥

अनारोग्यमनायुष्यमस्वर्ग्यञ्चातिभोजनम्।
अपुण्यं लोकविद्विष्टन्तस्मात्तत्परिवर्जयेत्॥ ५७॥

अतिभोजनेदोषमाह। अनारोग्यमिति। अरोगोरोगाभावः तस्मै हितमारोग्यं आयुषे हितमायुष्यं यस्मादति भोजनमनारोग्यमनायुष्यञ्च भवति अजीर्णजनकत्वेन रोग मरणहेतुत्वात्। अस्वर्ग्यञ्च स्वर्गहेतुयागादिविरोधित्वात् अपुण्यमितरपुण्यप्रतिपक्षत्वात् लोकविद्विष्टम्बहुभोजितया लोकैर्निन्दनात् तस्मात्तन्न कुर्य्यात्॥ ५७॥

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्।
कायत्रैदशिकाभ्यांवा न पित्र्येण कदाचन॥ ५८॥

ब्राह्मेणेति। ब्राह्मादिसंज्ञेयं शास्त्रे संव्यवहारार्था स्तुत्यर्थाच न तु मुख्यब्रह्मदेवताकत्वं सम्भवति अयोगरूपत्वात्

तीर्थशब्दोऽपि। पावनगुणयोगात् ब्राह्मेण तीर्थेन सर्व्वदा विप्रादि राचामेत्। कः प्रजापतिस्तदीयः कायः तस्येदमित्यण् इकार श्चान्तादेशः। वेदश्चिभ्यो दैवः ताभ्याम्वा पित्र्येण तु तीर्थेन न कदाचिदाचामेत् अप्रसिद्धत्वात्॥ ५८॥

अङ्गुष्ठमूलस्य तले ब्राह्मन्तीर्थम्प्रचक्षते। काय मङ्गुलिमूलेऽग्रे दैवम्पित्र्यन्तयोरधः॥ ५९॥

ब्राह्मादितीर्थान्याह। अङ्गुष्ठमूलस्येति। अङ्गुष्ठमूलस्या धोभागे ब्राह्मं कनिष्ठाङ्गुलिमूले कायं अङ्गुलीनामग्रे दैवं अङ्गुष्ठप्रदेशिन्योर्मध्ये पित्र्यं तीर्थं मन्वादय आहुः। यद्यपि कायमङ्गुलिमूले तयोरधइत्यत्र चाङ्गुलिमात्रं श्रुतन्तथापि स्मृत्यन्तरादिशेषपरिग्रहः। तथा च याज्ञवल्क्यः। कनिष्ठा देशिन्यङ्गुष्ठमूलान्यग्रङ्करस्य च। प्रजापतिपितृब्रह्मदेवतीर्था न्यनुक्रमात्॥ ५९॥

त्रिराचामेदपः पूर्व्वं द्विःप्रमृज्यात्ततोमुखम्। खानि चैव स्पृशेदद्भिरात्मानं शिरएव च॥ ६०॥

सामान्येनोपदिष्टस्याचमनस्यानुष्ठानक्रममाह। त्रिराचामेदिति। पूर्व्वं ब्राह्मादितीर्थेन जलगण्डूषत्रयम्पिबेत्

अनन्तरं कनिष्ठाङ्गुष्ठयोर्मूलं प्राजापत्यं तीर्थं कायाख्यं बोध्यम्, अङ्गुलीनामग्रं दैवं तीर्थम् । कनिष्ठामूलेन त्रिराचामेत् ... द्विःप्रमृज्यात्ततो मुखं ... इतिश्रुतेः विशेषाभिधानात् । खानि चेन्द्रियाणि जलेन स्पृशेत् मुखस्य सन्निधानात् मुखस्थान्येव । गोतमोप्याह । खानि चोपस्पृशेत् शीर्षण्यानि । इह आत्मा पुरुषः इति उपनिषत्सु हृदयदेशत्वेनात्मनः श्रवणात् आत्मानं हृदयं शिरस्त्वाद्भिरेव स्पृशेत् ॥ ६० ॥

अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मवित् ।
शौचेप्सुः सर्व्वदाचामेदेकान्ते प्रागुदङ्मुखः ॥ ६१ ॥

अनुष्णाभिरिति । अनुष्णीकृताभिः फेनवर्जिताभिर्ब्राह्मादितीर्थेन शौचमिच्छन् एकान्ते जनैरनाकीर्णे शुचिदेश इत्यर्थः प्राङ्मुख उदङ्मुखो वा सर्व्वदाचामेत् । आपस्तम्बेन तप्ताभिश्च कारणादित्यभिधानात् । व्याध्यादिकारणव्यतिरेकेण नाचामेत् । व्याध्यादौ तु उष्णीकृताभिरप्याचमने दोषाभावः । तीर्थव्यतिरेकेणाचमने शौचाभावइति दर्शयितुमुक्तस्यापि तीर्थस्य पुनर्वचनम् ॥ ६१ ॥

हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः ।
वैश्योद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः ॥ ६२ ॥

हृद्गाभिरिति । आचमनजलपरिमाणमाह । ब्राह्मणो हृदयगामिनीभिः क्षत्रियः कण्ठगामिनीभिः वैश्योन्तरास्य

प्रविष्टाभिः कण्ठमप्राप्ताभिरपि शूद्रोजिह्वौष्ठान्तेनापि स्पृष्टाभिरद्भिः पूतोभवति अन्ततइति तृतीयार्थे तसिः॥ ६२ ॥

उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः। सव्ये प्राचीनं आवीती निवीती कण्ठसज्जने ॥ ६३ ॥

उद्धृते इति। आचमनाङ्गतामुपवीतस्य दर्शयितुमुपवीतलक्षणं तत्प्रसङ्गेन प्राचीनावीतीत्यादिलक्षणमाह। दक्षिणे पाणावुद्धृते वामस्कन्धस्थिते दक्षिणकक्षावलम्बे यज्ञसूत्रे वस्त्रे वा उपवीती द्विजः कथ्यते वामपाणावुद्धृते दक्षिणस्कन्धस्थिते वामकक्षावलम्बे प्राचीनावीती भण्यते सव्ये प्राचीनआवीतीति छन्दोनुरोधादुक्तम्। तथाच गोभिलः। दक्षिणं बाहुमुद्धृत्य शिरोवधाय सव्येंसे प्रतिष्ठापयति दक्षिणं कक्षमवलम्बनम्भवति एवं यज्ञोपवीती भवति सव्यम्बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंसे प्रतिष्ठापयति सव्यङ्कक्षमवलम्बम्भवत्येव प्राचीनावीती भवति। निवीती कण्ठसज्जनइति शिरोवधाय दक्षिणपाण्यादावप्यनुद्धृते कण्ठादेव सज्जने ऋजुप्रालम्बे यज्ञसूत्रे वस्त्रे च निवीती भवति॥ ६३ ॥

मेखलामजिनन्दण्डमुपवीतङ्कमण्डलुम्। अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥ ६४ ॥

मेखलामिति। मेखलादीनि विनष्टानि भिन्नानि छिन्नानि च जले प्रक्षिप्यान्यानि नवानि स्वस्वगृह्योक्तमन्त्रैर्गृह्णीयात्॥६४॥

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते। राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥ ६५॥

केशान्त इति। केशान्ताख्यो गृह्योक्तसंस्कारः गर्भादिसङ्ख्यावर्षाणामिति बौधायनवचनात्। गर्भषोडशे वर्षे ब्राह्मणस्य क्षत्रियस्य गर्भद्वाविंशे वैश्यस्य ततोद्व्यधिके गर्भचतुर्विंशे कर्त्तव्यः॥ ६५॥

अमन्त्रिका तु कार्य्येयं स्त्रीणामावृदशेषतः। संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥ ६६॥

अमन्त्रिकेति। इयमावृदयजातकर्मादिक्रियाकलापः समग्रः उक्तकालक्रमेण शरीरसंस्कारार्थं स्त्रीणाममन्त्रकः कार्य्यः॥ ६६॥

वैवाहिकोविधिः स्त्रीणां संस्कारोवैदिकः स्मृतः। पतिसेवा गुरौवासोगृहार्थोऽग्निपरिक्रिया॥ ६७॥

अनेनोपनयनेपि प्राप्ते विशेषमाह। वैवाहिकइति। वैवाहिकविधिरेव स्त्रीणां वैदिकः संस्कारः उपनयनाख्योमन्वादिभिः

भृतः पतिसेवेव गुरुकुले वासोवेदाध्ययनरूपः। गृहकृत्यमेव सायंप्रातः समिद्धोमरूपोऽग्निपरिचर्य्या तस्मादिवाहादेरुपनयनस्थाने विधानादुपनयनादेर्निवृत्तिरिति ॥ ६७ ॥

एषप्रोक्तोद्विजातीनामौपनायनिकोविधिः।
उत्पत्तिव्यञ्जकः पुण्यः कर्म्मयोगं निबोधत ॥ ६८ ॥

एष इति। औपनायनिकइति अनुशतिकादित्वादुभयपदवृद्धिः अयं द्विजातीनामुपनयनसम्बन्धी कर्म्मकलापउक्तः उत्पत्तेर्द्वितीयजन्मनोव्यञ्जकः ॥ ६८ ॥

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्य्यञ्च सन्ध्योपासनमेवच ॥ ६९ ॥

इदानीमुपनीतस्य येन कर्म्मणा योगस्तं शृणुत इत्याह। उपनीय गुरुरिति। गुरुः शिष्यमुपनीय प्रथममेकालिङ्गे गुदे तिस्र इत्यादिवक्ष्यमाणं शौचं स्नानाचमनाद्याचारमग्नौ सायंप्रातः समिद्धोमानुष्ठानं समन्त्रकसन्ध्योपासनविधिञ्च शिक्षयेत् ॥ ६९ ॥

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥ ७० ॥

अध्येष्यमाणइति । अध्ययनं करिष्यमाणः शिष्यो यथा शास्त्रं कृताचमन उत्तराभिमुखः कृताञ्जलिः पवित्रवस्त्रः । कृतेन्द्रियसंयमो गुरुणा अध्याप्यः । प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वेति गौतमवचनात् प्राङ्मुखस्यापि अध्ययनं ब्रह्माञ्जलिकृतइति वाहिताग्न्यादिष्वित्यनेन कृतशब्दस्य परनिपातः ॥ ७० ॥

ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥ ७१ ॥

ब्रह्मारम्भेऽवसाने चेति । वेदाध्ययनस्यारम्भे कर्त्तव्ये समापने च कृते गुरोः पादोपसंग्रहणं कर्त्तव्यं हस्तौ संहत्य संश्लिष्टौ कृत्वाऽध्येतव्यं स एव ब्रह्माञ्जलिः स्मृतइति पूर्व्वश्लोकोक्तब्रह्माञ्जलि शब्दार्थव्याकारः ॥ ७१ ॥

व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥ ७२ ॥

व्यत्यस्तपाणिनेति । पादोपसंग्रहणं कार्य्यमित्यनन्तरमुक्तं तद्व्यत्यस्तपाणिना कार्य्यमिति विधीयते कीदृशो व्यत्यासः कार्य्य

इत्यत आह। सव्येन पाणिना सव्यः पादो दक्षिणेन पाणिना दक्षिणः पादः गुरोः स्प्रष्टव्यः उत्तानहस्ताभ्याञ्चैतत्पादयोः स्पर्शनं कार्य्यं। यदाह पैठीनसिः। उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत्। दक्षिणोपरिभावेन व्यत्यासोयं शिष्टसमाचारात्॥ ७२॥

अध्येष्यमाणन्तु गुरुर्नित्यकालमतन्द्रितः। अधीष्व भो इति ब्रूयाद्विरामोस्त्विति चारमेत्॥ ७३॥

अध्येष्यमाणमिति। अध्ययनङ्करिष्यमाणं शिष्यं सर्व्वदा अनलसो गुरुरधीष्व भो इति प्रथमं वदेत्। शेषे विरामोस्त्वित्य भिधाय विरमेत् निवर्त्तेत॥ ७३॥

ब्राह्मणः प्रणवङ्कुर्य्यादादावन्ते च सर्व्वदा। स्रवत्यऽनोङ्कृतम्पूर्व्वम्परस्ताच्च विशीर्य्यति॥ ७४॥

ब्राह्मणः प्रणवमिति। ब्राह्मणो वेदस्याध्ययनारम्भे अध्ययन समाप्तौ चोंकारं कुर्य्यात्। यस्मात्पूर्व्वं यस्योङ्कारेण कृत स्तत्स्रवति शनैः शनैर्नश्यति यस्य परस्तान्न कृतस्तद्विशीर्य्यति अवस्थितिमेव न लभते॥ ७४॥

प्राक्कूलान् पर्य्युपासीनः पवित्रैश्चैव पावितः।
प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हति ॥ ७५ ॥

प्राक्कूलानिति। प्राक्कूलान्प्रागग्रान् दर्भान् अध्यासीनः पवित्रैः कुशैः करद्वयस्थैः पवित्रीकृतः। प्राणायामास्त्रयः पञ्चदशमात्रा इति गौतमस्मरणात्। पञ्चदशमात्रैस्त्रिभिः प्राणायामैः प्रयतः अकारादिलघ्वक्षरकालस्य मात्रा ततोऽध्ययनार्थमोङ्कारमर्हति ॥ ७५ ॥

अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः। वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च ॥ ७६ ॥

अकारञ्चेति। एतदक्षरमेताञ्चेति वक्ष्यति। तस्यायं शेषः। अकारमुकारं मकारञ्च प्रणवावयवभूतम्ब्रह्मा वेदत्रयात् ऋग्यजुःसामलक्षणात्। भूर्भुवःस्वरिति व्याहृतित्रयञ्च क्रमेण निरदुहत् उद्धृतवान् ॥ ७६ ॥

त्रिभ्यएव तु वेदेभ्यः पादम्पादमदूदुहत्।
तदित्यृचोस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥७७॥

त्रिभ्यएवेति। तथा त्रिभ्यएव वेदेभ्यः ऋग्यजुःसामभ्यः तदित्यृच इति प्रतीकेनानूदितायाः सावित्र्याः पादम्पादमिति त्रीन्पादान् ब्रह्मा चकर्ष परमे स्थाने तिष्ठतीति परमेष्ठी ॥ ७७ ॥

एतदक्षरमेताञ्च जपन् व्याहृतिपूर्व्विकाम्।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ ७८ ॥

यत एवमतः। एतदक्षरमिति। एतदक्षरमोङ्काररूपं एताञ्च त्रिपदां सावित्रीं व्याहृतित्रयपूर्व्विकां सन्ध्याकाले जपन्वेदज्ञोविप्रादिर्वेदत्रयाध्ययनपुण्येन युक्तोभवति अतः सन्ध्याकाले प्रणवव्याहृतित्रयोपेतां सावित्रीं जपेदिति विधिः कल्प्यते॥ ७८ ॥

सहस्रकृत्वस्त्वभ्यस्य वहिरेतत्त्रिकं द्विजः। महतोप्येनसोमासात्त्वचेवाऽहिर्विमुच्यते ॥ ७९ ॥

सहस्रकृत्व इति। सन्ध्यायामन्यत्र च काले एतत्प्रकृतप्रणवव्याहृतित्रयसावित्र्यात्मकन्त्रिकं ग्रामाद्वहिर्नदीतीरारण्यादौ सहस्रावृत्तिं जपित्वा महतोपि पापात्सर्प इव कञ्चुकान्मुच्यते। तस्मात्पापक्षयार्थमिदञ्जपनीयमिति अप्रकरणेपि लाघवार्थमुक्तम् अन्यथैतत्त्रयोच्चारणमपि पुनः कर्त्तव्यं स्यात् ॥ ७९ ॥

एतयर्चाविसंयुक्तः काले च क्रियया स्वया।
ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥ ८० ॥

एतयर्चेति। सन्ध्यायामन्यच समयेवा ऋचैतया सावित्र्या वियुक्तस्त्यक्तसावित्रीजपेऽस्वकीयया क्रियया च सायम्प्रातर्होमा

द्विरूपया स्वकाले त्यक्तो ब्राह्मणः क्षत्रियो वैश्योपि सज्जनेषु निन्दाङ्गच्छति तस्मात्स्वकाले सावित्री जपं स्वक्रियाञ्च न त्यजेत् ॥ ८० ॥

ओंकारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणोमुखं ॥ ८१ ॥

ओंकारपूर्व्विकेति। ओंकारपूर्व्विकास्तिस्रो व्याहृतयः भूर्भुवः स्वरित्येता अक्षरब्रह्मावाप्तिफलत्वेनाव्ययाः त्रिपदा च सावित्री ब्रह्मणो वेदस्य मुखमाद्यं तत्पूर्व्वकवेदाध्ययनारम्भात्। अथवा ब्रह्मणः परमात्मनः प्राप्तेर्द्वारमेतदध्ययनजपादिना निष्पापस्य ब्रह्मज्ञानप्रकर्षेण मोक्षावाप्तेः ॥ ८१ ॥

योऽधीतेऽहन्यहन्येतान्त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्मपरमभ्येति वायुभूतः खमूर्त्तिमान् ॥ ८२ ॥

अतएवआह। योऽधीतइति। यः प्रत्यहमनलसः सन्सावित्रीं प्रणवव्याहृतियुक्तां वर्षत्रयमधीते स परम्ब्रह्माभिमुख्येन गच्छति स वायुभूतो वायुरिव कामचारी जायते खंब्रह्म तदेवास्य मूर्त्तिरिति खमूर्त्तिमान् भवति शरीरस्यापि नाशात् ब्रह्मैव सम्पद्यते ॥ ८२ ॥

एकाक्षरम्परम्ब्रह्म प्राणायामाः परन्तपः।
सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते॥ ८३॥

एकाक्षरमिति। एकाक्षरमोङ्कारः परम्ब्रह्म परं ब्रह्मा वाप्तिहेतुत्वात्। ओंकारस्य जपेन तदर्थस्य च परं ब्रह्मणोभाव नया तदवाप्तेः। प्राणायामाः सप्रणवसव्याहृतिसशिरस्कगाय त्रीभिः त्रिरावृत्तिभिः कृताश्चान्द्रायणादिभ्योपि परन्तपः प्राणायामादति बहुवचननिर्देशात् त्रयोवश्यं कर्त्तव्यादत्युक्तं सावित्र्याः प्रकृष्टमन्यन्मन्त्रजातं नास्ति मौनादपि सत्यवाग्वि शिष्यते। एषां चतुर्णां स्तुत्या चत्वार्य्येतान्युपासनोयानीति विधिः कल्प्यते। धरणीधरेणतु एकाक्षरपरम्ब्रह्मप्राणायाम परन्तपइति पठितं व्याख्यातञ्च एकाक्षरम्परं यस्य तदेका क्षरपरं एवं प्राणायामपरमिति। मेधातिथिप्रभृतिभिर्वृद्धैर लिखितं। यतः लिखन् पाठान्तरन्तत्र स्वतन्त्रोधरणीधरः ॥ ८३ ॥

क्षरन्ति सर्व्वा वैदिक्योजुहोति यजति क्रियाः।
अक्षरन्त्वक्षयं ज्ञेयं ब्रह्मचैव प्रजापतिः॥ ८४॥

क्षरन्तीति। सर्व्वा वेदविहिता होमयागादिरूपाः क्रियाः स्वरूपतः फलतश्च विनश्यन्ति अक्षरन्तु प्रणवरूपमक्षयम्ब्रह्म

प्राप्तिहेतुत्वात् फलद्वारेणाचरब्रह्मीभावस्याविनाशात्। कथ मस्य ब्रह्मप्राप्तिहेतुत्वमतआह। ब्रह्मचैवेति। चशब्दोहेतौ यस्मात्प्रजानामधिपतिर्यत् ब्रह्म तदेवायमोङ्कारः स्वरूपतो ब्रह्मप्रतिपादकत्वेन चास्य ब्रह्मत्वं उभयथापि ब्रह्मत्वेन प्रतिपादकत्वेन वायमुपासितोजपकाले मोक्षहेतुरनेनदर्शितं ॥ ८४ ॥

विधियज्ञाज्जपयज्ञोविशिष्टोदशभिर्गुणैः। उपांशुः स्याच्छतगुणः साहस्रोमानसः स्मृतः॥ ८५ ॥

विधियज्ञादिति। विधिविषयोयज्ञोविधियज्ञोदर्शपौर्णमासा दिस्तस्मात्प्रकृतानाम्प्रणवादीनाञ्जपयज्ञोदशगुणाधिकः। सोप्यु पांशुश्चेदनुष्ठितः तदा शतगुणाधिकः यत्समोपस्थोपि परो न शृणोति तदुपांशुः। मानसस्तु जपः सहस्रगुणाधिकः। यत्र जिह्वोष्ठं मनागपि न चलति स मानसः॥ ८५॥

ये पाकयज्ञाश्चत्वारोविधियज्ञसमन्विताः। सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्॥ ८६ ॥

ये पाकयज्ञाइति। ब्रह्मयज्ञादन्ये ये पञ्च महायज्ञा न्तर्गता वैश्वदेवहोमबलिकर्मनित्यश्राद्धातिथिभोजनात्मका

स्त्वारः पाकयज्ञाः विधियज्ञाः दर्शपौर्णमासादयः तैः सहिता जपयज्ञस्य षोड़शीमपि कलां न प्राप्नुवन्ति जपयज्ञस्य षोड़शांशेनापि न समा इत्यर्थः ॥ ८६ ॥

जप्येनैव तु संसिध्येद्ब्राह्मणोनात्र संशयः।
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रोब्राह्मणउच्यते ॥ ८७ ॥

जप्येनैवेति। ब्राह्मणोजप्येनैव निःसन्देहां सिद्धिं लभते मोक्षप्राप्तियोग्योभवति। अन्यद्वैदिकं यागादिकं करोतु न करोतु वा यस्मान्मैत्रोब्राह्मणः ब्रह्मणः सम्बन्धी ब्रह्मणि लोयतइत्यागमेषूच्यते। मित्रमेव मैत्रः स्वार्थेऽण् यागादिषु पशुवीजादिवधान्न सर्व्वप्राणिप्रियता सम्भवति तस्माद्यागादिना विनापि प्रणवादिजपनिष्ठोनिस्तरतीति जपप्रशंसा नतु यागादीनां निषेधः। तेषामपि शास्त्रीयत्वात् ॥ ८७ ॥

इन्द्रियाणां विचरतां विषयेष्वपहारिषु।
संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम् ॥ ८८ ॥

इदानीं सर्व्ववर्णानुष्ठेयं सकलपुरुषार्थोपयुक्तमिन्द्रियसंयममाह। इन्द्रियाणामिति। इन्द्रियाणां विषयेष्वपहरणशीलेषु वर्त्तमानानां क्षयित्वादिविषयदोषान् जानन् संयमे यत्नं कुर्य्यात् सारथिरिव रथनियुक्तानामश्वानाम् ॥ ८८ ॥

एकादशेन्द्रियाण्याहुर्यानि पूर्व्वे मनीषिणः।
तानि सम्यक्प्रवच्यामि यथावदनुपर्व्वशः ॥ ८९ ॥

एकादशेति। पूर्व्वपण्डिता यान्येकादशेन्द्रियाण्याहुस्ता न्यर्व्वाचां शिक्षार्थं सर्व्वाणि कर्मतोनामतश्च क्रमाद्वच्यामि ॥ ८९ ॥

श्रोत्रन्त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी।
पायूपस्थं हस्तपादं वाक्चैव दशमी स्मृता ॥ ९० ॥

श्रोत्रमिति। तेषु एकादशसु श्रोत्रादीनि दशैतानि वहिरिन्द्रियाणि नामतोनिर्द्दिष्टानि। पायूपस्थं हस्तपादमिति द्वन्द्वस्य प्राणितूर्य्यसेनाङ्गानामिति प्राण्यङ्गद्वन्द्वत्वादेकवद्भावः ॥ ९० ॥

बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्व्वशः।
कर्म्मेन्द्रियाणि पञ्चैषाम्पाय्वादीनि प्रचक्षते ॥ ९१ ॥

बुद्धीन्द्रियाणीति। एषां दशानां मध्ये श्रोत्रादीनि पञ्च क्रमोक्तानि बुद्धेः करणत्वात् बुद्धीन्द्रियाणि। पाय्वादीनि चोत्सर्गादिकर्मकरणत्वात् कर्मेन्द्रियाणि तद्विदोवदन्ति ॥ ९१ ॥

एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्।
यस्मिन् जिते जितावेतौ भवतः पञ्चकौ गणौ॥९२॥

एकादशमिति। एकादशसङ्ख्यापूरकस्य मनोरूपमन्तरिन्द्रियं ज्ञातव्यम्। स्वगुणेन सङ्कल्परूपेण उभयरूपेन्द्रियगणप्रवर्त्तकस्वरूपम्। अतएव यस्मिन्मनसि जिते उभावपि पञ्चकौ बुद्धीन्द्रियकर्मेन्द्रियगणौ जितौ भवतः पञ्चकाविति तदस्य परिमाणमित्यनुवृत्तौ सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति पञ्चसङ्ख्यापरिमितिसङ्घार्थे कः॥९२॥

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति॥९३॥

मनोधर्म्मसङ्कल्पमूलत्वादिन्द्रियाणां प्रायेण प्रवृत्तेः किमर्थमिन्द्रियनिग्रहः कर्त्तव्य इत्यत आह। इन्द्रियाणामिति। यस्मादिन्द्रियाणां विषयेषु प्रसक्त्या दृष्टादृष्टस्य दोषं निःसन्देहमाप्नोति तान्येव पुनरिन्द्रियाणि सम्यक् नियम्य सिद्धिं मोक्षादिपुरुषार्थयोग्यतारूपां लभते तस्मादिन्द्रियसंयमं कुर्य्यादिति शेषः॥९३॥

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूयएवाभिवर्द्धते ॥ ९४ ॥

किमिन्द्रियसंयमेन विषयोपभोगादेव लब्धकामोनिवर्त्स्य तीत्याशङ्क्याह। नजात्विति। न कदाचित्कामोऽभिलाषः काम्यन्तइति कामाविषयाः तेषामुपभोगेन निवर्त्तते किन्तु घृतेनाग्निरिवाधिकाधिकमेव वर्द्धते प्राप्तभोगस्यापि प्रति दिनन्तदधिकभोगवाञ्छादर्शनात्। अतएव विष्णुपुराणे ययातिवाक्यं। यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। एकस्यापि न पर्य्याप्तन्तदित्यतितृषान्त्यजेत्। तथा। पूर्णं वर्षसहस्रम्मे विषयासक्तचेतसः। तथाप्यनुदिनं तृष्णा यन्तेष्वे वहि जायते ॥ ९४ ॥

यश्चैतान्प्राप्नुयात्सर्व्वान् यश्च तान्केवलांस्त्यजेत्।
प्रापणात्सर्व्वकामानाम्परित्यागोविशिष्यते ॥ ९५ ॥

यश्चैतानिति। यएतान्सर्व्वान् विषयान् प्राप्नुयात् यश्च तान् कामानुपेक्षते तयोर्विषयोपेक्षकः श्रेयान् तस्मात्सर्व्वकाम प्राप्तेस्तदुपेक्षा प्रशस्या तथाहि विषयलोलुपस्य तत्साधनाद्यु त्पादने कष्टसम्भवोविपत्तौ च क्लेशातिशयः नतु विषयविरक्तस्य ॥ ९५ ॥

न तथैतानि शक्यन्ते संनियन्तुमसेवया। विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः॥ ९६॥

इदानीमिन्द्रियसंयमोपायमाह। नतथेति। एतानीन्द्रियाणि विषयेषु प्रसक्तानि तथा नासेवया विषयसन्निधिवर्जनरूपया नियन्तुं शक्यन्ते दुर्निवारत्वात्। यथा सर्व्वदा विषयाणां क्षयित्वादिदोषज्ञानेन शरीरस्य चास्थिस्थूणमित्यादिवक्ष्यमाणदोषचिन्तनेन तस्माद्विषयदोषज्ञानादिना बहिरिन्द्रियाणि मनश्च नियच्छेत्॥ ९६॥

वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥९७॥

यस्मादनियमितं मनो विकारस्य हेतुः स्यादतआह। वेदा इति। वेदाध्ययनदानयज्ञनियमतपांसि स्वगादिविषयसेवासङ्कल्पशीलिनो न कदाचित् फलसिद्धये प्रभवन्ति॥ ९७॥

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च योनरः।
न हृष्यति ग्लायति वा स विज्ञेयोजितेन्द्रियः॥९८॥

जितेन्द्रियस्य स्वरूपमाह। श्रुत्वेति। स्तुतिवाक्यं निन्दावाक्यञ्च श्रुत्वा सुखस्पर्शं दुकूलादि दुःखस्पर्शं मेषकम्बलादि

स्पृष्ट्वा सुरूपं कुरूपञ्च दृष्ट्वा स्वादु अस्वादु च भुक्त्वा सुरभिम सुरभिञ्च घात्वा यस्य न हर्षविषादौ स जितेन्द्रियो ज्ञातव्यः ॥ ९८ ॥

इन्द्रियाणान्तु सर्व्वेषां यद्येकं चरतीन्द्रियम्।
तेनास्य चरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥९९॥

एकेन्द्रियासंयमोपि निवार्य्यत इत्याह। इन्द्रियाणान्त्विति। सर्व्वेषामिन्द्रियाणां मध्ये यद्येकमपीन्द्रियं विषयप्रवणं भवति ततोस्य विषयपरस्य इन्द्रियान्तरैरपि तत्त्वज्ञानं चरति न व्यवतिष्ठते चर्म्मनिर्म्मितोदकपात्रादिवैकेनापि छिद्रेण सर्व्वस्मा न्नस्यमेवोदकन्न व्यवतिष्ठते॥ ९९ ॥

वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा। सर्व्वा
न्संसाधयेदर्थानक्षिण्वन् योगतस्तनुम् ॥ १०० ॥

इन्द्रियसंयमस्य सर्व्वपुरुषार्थहेतुतान्दर्शयति। वशेकृत्वेति। बहिरिन्द्रियगणमायत्तङ्कृत्वा मनश्च संयम्य सर्व्वान्पुरुषार्थान् सम्यक् साधयेत्। योगत उपायेन स्वदेहमपीडयन् यः सहज सुखी संस्कृतान्नादिकभुङ्क्ते स क्रमेण तन्त्यजेत् ॥ १०० ॥

पूर्व्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात्।
पश्चिमान्तु समासीनः सम्यगृक्षविभावनात्॥ १०१ ॥

पूर्व्वां सन्ध्यामिति। पूर्व्वां सन्ध्यां पश्चिमामिति च काला ध्वनोरत्यन्तसंयोगे द्वितीया प्रथमसन्ध्यां सूर्य्यदर्शनपर्य्यन्तं सावित्रीं जपन् तिष्ठेत्। आसनादुत्थाय निवृत्तगतिरेकत्र देशे कुर्य्यात्। पश्चिमान्तु सन्ध्यां सावित्रीं जपन् सम्यङ्नक्षत्र दर्शनपर्य्यन्तमुपविष्टः स्यात्। अत्र च फलवत्त्वाज्जपः प्रधानं स्थानासनेत्वङ्गे फलवत्सन्निधावफलन्तदङ्गमिति न्यायात्। सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते। सहस्रपरमस्त्वभ्यस्य इति च पूर्व्वं जपात् फलमुक्तम्। मेधातिथिस्तु स्थानासन योरेव प्राधान्यमाह। सन्ध्याकालश्च मुहूर्त्तमात्रं तदाह योगियाज्ञवल्क्यः। ह्रासवृद्धी तु सततन्दिवसानां यथाक्रमम्। सन्ध्यामुहूर्त्तमात्रन्तु ह्रासे वृद्धौ च सा स्मृता॥ १०१ ॥

पूर्व्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति। पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम्॥ १०२ ॥

पूर्व्वांसन्ध्यामिति। पूर्व्वसन्ध्यायान्तिष्ठन् जपं कुर्व्वाणो निशासञ्चितम्पापं नाशयति। पश्चिमसन्ध्यायान्तूपविष्टो

जपं कुर्व्वन् दिवार्जितम्पापं निहन्ति तत्रापि जपात् फलमुक्तम्। एतच्चाज्ञानादिकृतपापविषयम्। अतएव याज्ञवल्क्यः। दिवा वा यदि वा रात्रौ यदज्ञानकृतम्भवेत्। त्रिकालसन्ध्या करणात्तत्सर्व्वं विप्रणश्यति॥ १०२॥

न तिष्ठति तु यः पूर्व्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्य्यः सर्व्वस्माद्द्विजकर्म्मणः॥ १०३॥

न तिष्ठतीति। यः पुनः पूर्व्वसन्ध्यां नानुतिष्ठति पश्चिमान्तु नोपास्ते तत्तत्कालविहितञ्जपादि न करोतीत्यर्थः स शूद्र इव सर्व्वस्माद्द्विजातिकर्म्मणोऽतिथिसत्कारादेरपि वाह्यः कार्य्यः। अनेनैव प्रत्यवायेन सन्ध्योपासनस्य नित्यतोक्ता नित्यत्वेऽपि सर्व्वदापचितपापचयस्य फलत्वमविरुद्धम्॥ १०३॥

अपांसमीपे नियतो नैत्यकं विधिमास्थितः।
सावित्रीमप्यधीयीत गत्वारण्यं समाहितः॥ १०४॥

अपांसमीप इति। ब्रह्मयज्ञरूपमिदं बहुवेदाध्ययनाशक्तौ सावित्रीमात्राध्ययनमपि विधीयते। अरण्यादिनिर्जन देशङ्गत्वा नद्यादिजलसमीपे नियतेन्द्रियः समाहितोऽनन्य

मनानैत्यकं विधिं ब्रह्मयज्ञरूपमाश्रितोऽनुतिष्ठासुः सावित्री मपि प्रणवव्याहृतिचययुतां यथाकाममधीयीत ॥ १०४ ॥

वेदोपकरणे चैव स्वाध्याये चैव नैत्यके। नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैवहि ॥ १०५ ॥

वेदोपकरणइति। वेदोपकरणे वेदाङ्गे शिक्षादौ नैत्यके नित्यानुष्ठेये च स्वाध्याये ब्रह्मयज्ञरूपे होममन्त्रेषु चानध्यायादरोनास्ति ॥ १०५ ॥

नैत्यके नास्त्यनध्यायोब्रह्मसत्रं हि तत्स्मृतम्। ब्रह्माहुतिहुतम्पुण्यमनध्यायवषट्कृतम् ॥ १०६ ॥

नैत्यकइति। पूर्वोक्तनैत्यकस्वाध्यायस्यायमनुवादः नैत्यकजपयज्ञे अनध्यायोनास्ति यतः सततभवत्वात्। ब्रह्मसत्रत्वमन्वादिभिः स्मृतं ब्रह्मैवाहुतिर्ब्रह्माहुतिर्हविस्तस्याहुतं अध्ययनरूपमनध्यायवषट्कृतमपि पुण्यमेव भवति ॥ १०६ ॥

यः स्वाध्यायमधीतेऽब्दं विधिना नियतः शुचिः।
तस्य नित्यं चरत्येष पयोदधिघृतं मधु॥ १०७॥

यः स्वाध्यायमिति। अब्दमिति अत्यन्तसंयोगे द्वितीया वर्षमप्येकं स्वाध्यायमहरहर्विहिताङ्गयुक्तं नियतेन्द्रियः प्रयतोजपति तस्यैषस्वाध्यायोजपयज्ञः क्षीरादीनि चरति क्षीरादिभिर्देवान् पितॄंश्च प्रीणाति तेच प्रीताः सर्व्वकामै र्जपयज्ञकारिणस्तर्पयन्तीत्यर्थः। अतएव याज्ञवल्क्यः। मधुनापयसा चैव सदेवांस्तर्पयेद्द्विजः। पितॄंश्चमधुघृताभ्याञ्च ऋचोधीतेहि योन्वहं इत्युपक्रम्य चतुर्णामेव वेदानाम्पुराणा नाञ्च जपस्य देवपितृतृप्तिफलमुक्त्वा शेषे ते तृप्तास्तर्पयन्त्येनं सर्व्वकामफलैः शुभैरित्युक्तवान्॥ १०७॥

अग्नीन्धनम्भैक्षचर्य्यामधःशय्यां गुरोर्हितम्। आस मावर्त्तनात्कुर्य्यात्कृतोपनयनोद्विजः॥ १०८॥

अग्नीन्धनमिति। सायंप्रातः समिद्धोममभिक्षामभूहाहरण मखट्वाशयनरूपामधःशय्यां नतु स्थण्डिलशायित्वमेव गुरोरु दककुम्भाद्याहरणरूपं हितंकृतोपनयनो ब्रह्मचारी समावर्त्तन पर्य्यन्तं कुर्य्यात्॥ १०८॥

आचार्य्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः। आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्यादश धर्मतः ॥ १०९ ॥

कीदृशः शिष्योऽध्याप्य इत्याह आचार्य्यपुत्र इति। आचार्य्यपुत्रपरिचारकज्ञानान्तरदातृधर्मविन्मृदार्य्यादि शुचिबान्धवग्रहणधारणसमर्थधनदाङ्गहितज्ञातयो दश एते धर्मेणाध्याप्याः ॥ १०९ ॥

नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः। जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ ११० ॥

नापृष्ट इति। यद्यन्येनाल्पाक्षरं विस्वरञ्चाधीतन्तस्य तत्त्वमपृष्टः सन्न वदेत् शिष्यस्य तु पृच्छतोऽपि वक्तव्यं भक्तिश्रद्धादि प्रश्नधर्मोल्लङ्घनमन्यायः तेन पृच्छतो न ब्रूयात्। जानन्नपि हि प्राज्ञो लोके मूक इव व्यवहरेत् ॥ ११० ॥

अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति। तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥ १११ ॥

उक्तप्रतिषेधद्वयातिक्रमे दोषमाह। अधर्मेणेति। अधर्मेण पृष्टोऽपि योऽयन्तु वदति यश्चान्यायेन यं पृच्छति तयोरन्यतरोऽयतिक्रमकारी म्रियते विद्वेषम्वा तेन सह गच्छति ॥ १११ ॥

धर्म्मार्थौ यत्र नस्यातां शुश्रूषा वापि तद्विधा।
तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥ ११२ ॥

धर्म्मार्थाविति। यस्मिन् शिष्येऽध्यापिते धर्म्मार्थौ न भवतः परिचर्य्यावाऽध्ययनानुरूपा तत्र विद्या नार्पणीया सुष्ठुब्रीह्या दिबीजमिवोषरे यत्र बीजमुप्तं न प्ररोहति स ऊषरः नचार्थ ग्रहणे भृतकाध्यापकत्वमाशङ्कनीयं यद्येतावन्मह्यन्दीयते तदैतावदध्यापयामीति नियमाभावात् ॥ ११२ ॥

विद्ययैव समं कामं मर्त्तव्यम्ब्रह्मवादिना।
आपद्यपि हि घोरायां नत्वेनामिरिणे वपेत् ॥ ११३ ॥

विद्ययेति। विद्ययैव सह वेदाध्यापकेन वरं मर्त्तव्यं नतु सर्व्वथाध्यापनयोग्यशिष्याभावे अपात्रायैताम्प्रतिपादयेत्। तथाच छान्दोग्यब्राह्मणं। विद्यया सार्द्धं म्रियेत न विद्यामूषरे वपेत ॥ ११३ ॥

विद्या ब्राह्मणमेत्याह सेवधिस्तेस्मि रक्ष माम्।
असूयकाय मां मादास्तथास्यां वीर्य्यवत्तमा ॥ ११४ ॥

अस्यानुवादमाह। विद्या ब्राह्मणमिति। विद्याधिष्ठात्री देवता कश्चिदध्यापकब्राह्मणमागत्य एवमवदत्। तवाहं

निधिरस्मि मां रक्ष असूयकादिदोषवते न मां वदेः तथा सत्यतिशयेन वीर्य्यवती भूयासम्। तथा च छान्दोग्यब्राह्मणं विद्या हवै ब्राह्मणमाजगाम तवाहमस्मि त्वं माम्पालय अनर्हते मानिने नैव मादा गोपाय मां श्रेयसी तेहमस्मीति ॥ ११४ ॥

यमेव तु शुचिं विद्यान्नियतब्रह्मचारिणम्।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥ ११५ ॥

यमिति। यमेव पुनः शिष्यं शुचिन्नियतेन्द्रियम्ब्रह्मचारिण ज्ञानासि तस्मै विद्यारूपनिधिरक्षकाय प्रमादरहिताय मां वद ॥ ११५ ॥

ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्। स ब्रह्मस्तेयसंयुक्तो नरकम्प्रतिपद्यते ॥ ११६ ॥

ब्रह्मेति। यः पुनरभ्यासार्थमधीयानात् अन्यं वा कञ्चिद ध्यापयतस्तदनुमतिरहितं वेदं गृह्णाति स वेदस्तेययुक्तो नरकङ्गच्छति तस्मादेतन्न कर्त्तव्यम् ॥ ११६ ॥

लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च।
आददीत यतो ज्ञानन्तम्पूर्व्वमभिवादयेत् ॥ ११७॥

लौकिकमिति। लौकिकमर्थशास्त्रादिज्ञानं वैदिकं वेदार्थ ज्ञानं आध्यात्मिकम्ब्रह्मज्ञानं यस्मात्तु गृह्णाति बहुमान्य

मध्ये स्थितं तत्प्रथममभिवादयेत्। लौकिकादिज्ञानदातॄणामेव त्रयाणां समवाये यथोत्तरं मान्यत्वम्॥ ११७ ॥

सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः।
नायन्त्रितस्त्रिवेदोऽपि सर्व्वाशी सर्व्वविक्रयी॥११८॥

सावित्रीति। सावित्रीमात्रवेत्तापि वरं सुयन्त्रितः शास्त्र नियमितः विप्रादिर्मान्यः नायन्त्रितोवेदत्रयवेत्तापि निषिद्ध भोजनादिशीलः प्रतिषिद्धविक्रेता च। एतच्च प्रदर्शनमात्रम् सुयन्त्रितशब्देन विधिनिषेधनिष्ठत्वस्य विवक्षितत्वात् ॥ ११८ ॥

शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत्।
शय्यासनस्थश्चैवैनम्प्रत्युत्थायाभिवादयेत्॥ ११९ ॥

शय्येति। शय्या च आसनञ्च शय्यासनं जातिरप्राणिना मिति द्वन्द्वैकवद्भावः। तस्मिन् श्रेयसा विद्याद्यधिकेन गुरुणा चाध्याचरितेऽ साधारण्येन स्वीकृते उत्तरकालमपि नासीत। स्वयञ्च शय्यासनस्थो गुरावागते उत्थायाभिवादनं कुर्यात् ॥ ११९ ॥

ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ १२० ॥

अस्यार्थवादमाह। ऊर्द्धमिति। यस्मात् यूनोऽल्पवयसो वयोविद्यादिना स्थविरे आयति आगच्छति सति प्राणा ऊर्द्धं उत्क्रामन्ति देहाद्बहिर्निर्गन्तुमिच्छन्ति तान्वृद्धस्य प्रत्युत्थानाभिवादाभ्यां पुनःसुस्थान् करोति। तस्माद्वृद्धस्य प्रत्युत्थायाभिवादनं कुर्य्यात् ॥ १२० ॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः। चत्वारि संप्रवर्द्धन्ते आयुर्विद्या यशोबलम् ॥ १२१ ॥

इतस्य फलमाह। अभिवादनशीलस्येति। उत्थाय सर्व्वदा वृद्धाभिवादनशीलस्य वृद्धसेविनस्य आयुःप्रज्ञायशोबलानि चत्वारि सम्यक् प्रकर्षेण वर्द्धन्ते ॥ १२१ ॥

अभिवादात्परं विप्रोज्यायांसमभिवादयन्।
असौ नामाहमस्मीति स्वंनाम परिकीर्त्तयेत् ॥ १२२ ॥

सम्प्रत्यभिवादनविधिमाह। अभिवादात्परमिति। वृद्धमभिवादयन् विप्रादिरभिवादात्परं अभिवादये इति शब्दो

चारणानन्तरं अमुकनामाहमस्मीति स्वंनाम परिकीर्त्तयेत् स्वकीयनामविशेषमुच्चारयेत्। अतोनामशब्दस्य विशेषपरत्वात् स्वनामविशेषोच्चारणानन्तरमभिवादनवाक्ये नामशब्दोपि प्रयोज्यइति मेधातिथिगोविन्दराजयोरभिधानमप्रमाणं। अतएव गौतमः स्वनामप्रोच्याहमभिवादयइत्यभिवदेत्। शाङ्खायनोप्यसावहम्भो इत्यात्मनोनामादिशेदित्युक्तवान्। यदिच नामशब्दश्रवणात्तस्य प्रयोगस्तदा अकारश्चास्य नाम्नोऽन्ते इत्यभिधानात्। प्रत्यभिवादनवाक्ये नामशब्दोच्चारणं स्यात् नच तत्कस्यचिन्मतम्॥ १२२ ॥

नामधेयस्य ये केचिदभिवादं न जानते। तान्प्राज्ञोहमिति ब्रूयात् स्त्रियः सर्व्वास्तथैव च ॥ १२३ ॥

नामधेयस्येति। नामधेयस्य उच्चारितस्य सतोये केचिदभिवाद्याः संस्कृतानभिज्ञतयाभिवादार्थं न जानन्ति तान् प्रत्यभिवादनेप्यसमर्थत्वात् प्राज्ञइत्यभिवाद्य शक्तिविज्ञोऽभिवादयिताऽभिवादयेहमित्येवं ब्रूयात् स्त्रियः सर्व्वास्तथैव ब्रूयात्॥ १२३॥

भोःशब्दङ्कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने। नाम्नां स्वरूपभावोहि भोभाव ऋषिभिः स्मृतः॥१२४॥

भोःशब्दमिति। अभिवादने यन्नामप्रयुक्तन्तस्यान्ते भोःशब्दङ्कीर्त्तयेत् अभिवाद्यसम्बोधनार्थं अतएवाह नाम्नामिति

भोइत्यस्य योभावः सत्ता सोऽभिवादयमानां स्वरूपभाव ऋषिभिः स्मृतः तस्मादेवमभिवादनवाक्यमभिवादये शुभशर्माहमस्मि भोः ॥ १२४ ॥"

आयुष्मान्भव सौम्येति वाच्योविप्रोभिवादने।
अकारश्चास्य नाम्नोन्ते वाच्यः पूर्व्वाक्षरः प्लुतः॥१२५॥

आयुष्मानिति। अभिवादने कृते प्रत्यभिवादयिता अभिवादकोविप्रादिरायुष्मान् भव सौम्येति वाच्यः। अस्य चाभिवादकस्य यन्नाम तस्यान्ते योऽकारादिः स्वरोनाम्नामकारान्तत्वनियमाभावात् स प्लुतः कार्य्यः स्वरापेक्षश्चेदकारान्तत्वं व्यञ्जनान्तेपि नाम्नि सम्भवति पूर्व्वं नामगतमक्षरं संश्लिष्टं यस्य स पूर्व्वाक्षरः तेन नागन्तुरपकृष्यचाकारादिः स्वरः प्लुतः कार्य्यः। एतच्च वाक्यस्य टेःप्लुतः उदात्तइत्यस्यानुवृत्तौ प्रत्यभिवादेऽशूद्रइति प्लुतं स्मरन् पाणिनिः स्फुटमुक्तवान्। व्याख्यातञ्च वृत्तिकृता वामनेन टेरिति किं व्यञ्जनान्तस्यैव टेः प्लुतोयथा स्यादिति। तस्मादीदृशं प्रत्यभिवादनवाक्यं आयुष्मान् भव सौम्य शुभशर्म्मान् एवं क्षत्रियस्य बलवर्म्मान् एवं वैश्यस्य वसुभूते प्लुतोराजन्यविशाम्वेति कात्यायनवचनात्। क्षत्रियवैश्ययोः पक्षे प्लुतोन भवति। शूद्रस्य प्लुतोन कार्य्यः अशूद्रइति

पाणिनिवचनात् स्त्रियामपि निषेध इति कात्यायनवचनात् । स्त्रियामपि प्रत्यभिवादनवाक्ये न प्लुतः । गोविन्दराजस्तु ब्राह्मणस्य नाम्नि शर्मोपपदं नित्यमाभिधाय प्रत्यभिवादनवाक्ये आयुष्मान् भव सौम्य भद्र इति निरुपपदोदाहरणेनोपपदोदाहरणानभिज्ञत्वमेव निजं ज्ञापयति । धरणीधरोऽपि आयुष्मान् भव सौम्येति सम्बुद्धिविभक्त्यन्तं मनुवचनं पश्यन्नपि असम्बुद्धिप्रथमैकवचनान्तममुकशर्मा इत्युदाहरन् विचक्षणैरुपेक्षणीय एव ॥ १२५ ॥

यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ १२६ ॥

योन वेत्तीति । यो विप्रोऽभिवादनस्यानुरूपप्रत्यभिवादनं न जानाति असावभिवादनविदुषापि स्वनामोच्चारणाद्युक्तविधिना शूद्र इव नाभिवाद्यः । अभिवादयेऽहमिति शब्दोच्चारणमात्रन्तु चरणग्रहणादिशून्यमनिषिद्धमागुक्तत्वात् ॥ १२६ ॥

ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ १२७ ॥

ब्राह्मणमिति । समागम्य समागमे कृते अभिवादकमवरवयस्कं समानवयस्कमनभिवादकमपि ब्राह्मणं कुशलं

क्षत्रियमनामयं वैश्यं क्षेमं शूद्रमारोग्यं पृच्छेत्। अतएवा पस्तम्बः कुशलमवरवयसं समानवयसं वा विप्रम्पृच्छेत् अनामयं क्षत्रियं क्षेमंवैश्यं आरोग्यं शूद्रं। अवरवयसमभि वादकं वयस्यमनभिवादकमपीति मन्वर्थमेवापस्तम्बः स्फुट यति स्म। गोविन्दराजस्तु प्रकरणात्प्रत्यभिवादकस्यैव कुशलादि प्रश्नमाह। नन्न अभिवादकेन सह समागमस्यार्थप्राप्तत्वात् समागम्येति निष्प्रयोजनानुवादप्रसङ्गात्। अतः कुशलक्षेम शब्दयोरनामयारोग्यपदयोश्च समानार्थत्वाच्छब्दविशेषोच्चा रणमेव विवक्षितम्॥ १२७॥

अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्।
भोभवत्पूर्व्वकन्त्वेनमभिभाषेत धर्म्मवित्॥ १२८॥

अवाच्य इति। प्रत्यभिवादनकाले अन्यदा च दीक्षणी यातः प्रभृत्यावभृथस्नानात् कनिष्ठोपि दीक्षितो नाम्ना न वाच्यः। किन्तु भोभवच्छब्दपूर्व्वकन्दीक्षितादिशब्दैरुत्कर्षा भिधायिभिरेव धार्म्मिकोऽभिभाषेत। भो दीक्षित इदं कुरु भवता यजमानेन इदं क्रियतामिति॥ १२८॥

परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः।
तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च॥ १२९॥

परपत्नीत्विति। या स्त्री परपत्नी भवति असम्बन्धा च यो नित इति स्वस्रादिर्न भवति तामनुप्रयुक्तसम्भाषणकाले भवति

सुभगे भगिनीति वा वदेत्। परपत्नीग्रहणात्कन्यायां नैष विधिः। स्वसुः कन्यादेस्त्वायुष्मत्यादिपदैरभिभाषणम् ॥१२८॥

मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून्।
असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः ॥ १३० ॥

मातुलांश्चेति। मातुलादीनागतान् कनिष्ठानासना दुत्थाय असावहमिति वदेत्। नाभिवादयेत् असाविति स्वनामनिर्देशः भूयिष्ठाः खलु गुरव इत्युपक्रम्य मातुलादी पोतृद्वयोरपि हारीतेन गुरुत्वकीर्त्तनात् तथाश्च कनिष्ठेष्वा रपि सम्भवात् तद्विषयोयं गुरुशब्दः ॥ १३० ॥

मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा।
सम्पूज्या गुरुपत्नीवत् समास्ता गुरुभार्य्यया ॥१३१॥

मातृष्वसेति। मातृष्वस्रादयो गुरुपत्नीवत्प्रत्युत्थानाभि वादनासनदानादिभिः सम्पूज्याः। अभिवादनप्रकरणादभि वादनमेव सम्पूजनं विज्ञायतइति समास्तादृत्यवोचत् गुरु भार्य्यासमानत्वात्प्रत्युत्थानादिकमपि कार्य्यमित्यर्थः ॥ १३१ ॥

भ्रातुर्भार्य्योपसंग्राह्या सवर्णाहन्यहन्यपि।
विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः॥१२२॥

भ्रातुर्भार्य्येति। भ्रातुः सजातीया भार्य्या ज्येष्ठा पूजाप्रकरणात् उपसंग्राह्या पादयोरभिवाद्या। अहन्यहनि प्रत्यहमेव अपिरेवार्थे। ज्ञातयः पितृपक्षाः पितृव्यादयः सम्बन्धिनो मातृपक्षाः श्वशुरादयश्च तेषाम्पत्न्यः पुनर्विप्रोष्य प्रवासात् प्रत्यागतेनैवाभिवाद्याः नतु प्रत्यहं नियमः॥ १२२॥

पितुर्भगिन्यां मातुश्च ज्यायस्याञ्च स्वसर्य्यपि।
मातृवद्वृत्तिमातिष्ठेत् माता ताभ्योगरीयसी॥१२३॥

पितुर्भगिन्यामिति। पितुर्मातुश्च भगिन्यां ज्येष्ठायाञ्चात्मनोभगिन्यां मातृवद्वृत्तिमातिष्ठेत्। माता पुनस्ताभ्योगुरुतमा। ननु मातृष्वसा मातुलानीत्यनेनैव गुरुपत्नीवत् पूज्यत्वमुक्तं किमधिकमनेन बोध्यते। उच्यते इदमेव माता ताभ्यो गरीयसीति तेन पितृष्वसानुज्ञायां दत्तायां मात्रा च विरोधे मातुराज्ञा अनुष्ठेयेति। अथवा पूर्व्वं पितृष्वसादेर्मातृवत्पूज्यत्वमुक्तं अनेन तु स्नेहादिवृत्तिरपतिदिश्यते इत्यपुनरुक्तिः॥ १२३॥

दशाब्दाख्यं पौरसख्यम्पञ्चाब्दाख्यं कलाभृताम्।
त्र्यब्दपूर्व्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु ॥१३४॥

दशाब्दाख्यमिति। दश अब्दा आख्या यस्य तद्दशाब्दाख्य मौरसख्यं अयमर्थः एकपुरवासिनां वक्ष्यमाणविद्यादिगुण रहितानां एकस्य दशभिरब्दैर्ज्येष्ठत्वे सत्यपि सख्यमाख्यायते पुरग्रहणं प्रदर्शनार्थं तेनैकग्रामादिनिवासिनामपि स्यात्। गीतादिकलाभिज्ञानां पञ्चवर्षपर्य्यन्तं सख्यं श्रोत्रियाणां त्र्यब्दपर्य्यन्तं सपिण्डेषु अत्यन्तास्वल्पेनैव कालेन सह सख्यम्। अपिरेवार्थे सर्व्वत्रोक्तकालादूर्द्ध्वं ज्येष्ठव्यवहारः ॥ १३४ ॥

ब्राह्मणन्दशवर्षन्तु शतवर्षन्तु भूमिपम्। पिता पुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥ १३५ ॥

ब्राह्मणमिति। दशवर्षं ब्राह्मणं शतवर्षं पुनः क्षत्रियं पितापुत्रौ जानीयात्। तयोर्म्मध्ये दशवर्षोपि ब्राह्मणएव क्षत्रियस्य शतवर्षस्यापि पिता तस्मात्पितृवदसौ तस्य मान्यः ॥ १३५ ॥

वित्तम्बन्धुर्वयःकर्म्मविद्या भवति पञ्चमी। एतानि मान्यस्थानानि गरीयोयद्यदुत्तरम् ॥ १३६ ॥

वित्तमिति। वित्तं न्यायार्जितन्धनं बन्धुः पितृव्यादिः वयोऽधिकवयस्कता कर्म्म श्रौतं स्मार्त्तञ्च विद्या वेदार्थतत्त्वज्ञानं

एतानि पञ्च मान्यत्वकारणानि। एषां मध्ये यद्यदुत्तरं तत्तत्पूर्व्वस्मात् श्रेष्ठमिति। बहुमान्यमेलके बलाबलमुक्तम् ॥ १३६॥

पञ्चानान्त्रिषु वर्णेषु भूयांसि गुणवन्ति च। यत्र स्युः सोऽत्र मानार्हः शूद्रोपि दशमीङ्गतः॥१३७॥

पञ्चानामिति। त्रिषु वर्णेषु ब्राह्मणादिषु पञ्चानां वित्तादीनां मध्ये यत्र पुरुषे पूर्व्वमप्यनेकम्भवति स एवोत्तरस्मादपि मान्यः। तेन वित्तबन्धुयुक्तोवयोधिकाम्मान्यः एवं वित्तादित्रययुक्तः कर्म्मवतोमान्यः वित्तादिचतुष्टययुक्तोविदुषो मान्यः। गुणवन्ति चेति प्रकर्षवन्ति तेन द्वयोरेव वित्तादिसत्वे प्रकर्षोमानहेतुः। शूद्रोपि दशमीमवस्थां नवत्यधिकाङ्गतो द्विजन्मनामपि मानार्हः शतवर्षाणान्दशधाविभागे दशम्यवस्था नवत्यधिका भवति॥ १३७॥

चक्रिणोदशमीस्थस्य रोगिणोभारिणः स्त्रियाः। स्नातकस्य च राज्ञश्च पन्था देयोवरस्य च॥ १३८॥

अयमपि पूजाप्रकारः प्रसङ्गादुच्यते। चक्रिणइति। चक्रयुक्तरथादियानारूढस्य नवत्यधिकवयसोरोगार्त्तस्य भार

पीडितस्य स्त्रियाः अचिरनिवृत्तसमावर्त्तनस्य देशाधिपस्य विवाहाय प्रस्थितस्य पन्थास्त्यक्तव्यः। त्यागार्थलाघ्व दद्यादिति चतुर्थी ॥ १३८ ॥

तेषान्तु समवेतानां मान्यौ स्नातकपार्थिवौ।
राजस्नातकयोश्चैव स्नातको नृपमानभाक् ॥ १३९ ॥

तेषामिति। तेषामेकत्र मिलितानान्देशाधिपस्नातकौ मान्यौ राजस्नातकयोरपि स्नातकएव राजापेक्षया मान्यः अतोराजशब्दोऽत्र पूर्व्वश्लोके च न केवलक्षत्रियजातिवचनः क्षत्रियजात्यपेक्षया ब्राह्मणन्दशवर्षन्त्वित्यनेन ब्राह्मणमात्रस्य मान्यत्वाभिधानात् स्नातकग्रहणवैयर्थ्यात् ॥ १३९ ॥

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते ॥ १४० ॥

उपनीयेति। आचार्य्यादिशब्दार्थमाह तैः शब्दैरिह शास्त्रे प्रायोव्यवहारात्। योब्राह्मणः शिष्यमुपनीय कल्प रहस्यसहितां वेदशाखां सर्व्वां अध्यापयति तमाचार्य्यं पूर्व्वे मुनयोवदन्ति। कल्पोयज्ञविद्या रहस्यमुपनिषत्। वेदत्वेऽप्युपनिषदां प्राधान्यविवक्षया पृथङ्निर्द्देशः ॥ १४० ॥

एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥ १४१ ॥

एकदेशमिति। वेदस्यैकदेशं मन्त्रब्राह्मणस्य वेदरहितानि व्याकरणादीनि अङ्गानि योवृत्त्यर्थमध्यापयति स उपाध्याय उच्यते ॥ १४१ ॥

निषेकादीनि कर्म्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रोगुरुरुच्यते ॥ १४२ ॥

निषेकादीनीति। निषेकोगर्भाधानन्तेन पितुरयं गुरुत्वो पदेशः गर्भाधानादीनि संस्कारकर्म्माणि पितुरुपदिष्टानि यथाशास्त्रं यःकरोति अन्नेन च सम्वर्द्धयति स विप्रोगुरुरुच्यते ॥ १४२ ॥

अग्न्याधेयम्पाकयज्ञानग्निष्टोमादिकान्मखान्।
यः करोति वृतोयस्य स तस्यर्त्विगिहोच्यते ॥ १४३ ॥

अग्न्याधेयमिति। आहवनीयाद्यग्न्युत्पादककर्म्म अग्न्याधेयं अष्टकादीन् पाकयज्ञान् अग्निष्टोमादीन यज्ञान् कृतवरणो

यस्य करोति स तस्य ऋत्विगिह शास्त्रेऽभिधीयते। ब्रह्मचारिधर्मेष्वनुपयुक्तमपि ऋत्विग्लक्षणमाचार्य्यादिवहृत्विजोपि मान्यत्वन्दर्शयितुमप[illegible]हुक्तम् ॥ १४३ ॥

य आवृणोत्यवितथम्ब्रह्मणा श्रवणावुभौ।
स माता स पिता ज्ञेयस्तन्न द्रुह्येत्कदाचन ॥ १४४ ॥

य आवृणोतीति। य उभौ कर्णौ अवितथमिति वर्णस्वरवैगुण्यरहितेन सत्यरूपेण वेदेनापूरयति स माता पिता च ज्ञेयः महोपकारकत्वगुणयोगात् अयमध्यापको मातापितृशब्दवाच्यस्तन्नापकुर्य्यात् कदाचनेति गृहीतेपि वेदे ॥ १४४ ॥

उपाध्यायान् दशाचार्य्य आचार्य्याणां शतम्पिता।
सहस्रन्तु पितॄन्माता गौरवेणातिरिच्यते ॥ १४५ ॥

उपाध्यायानिति। दशोपाध्यायानपेक्ष्य आचार्य्यः आचार्य्यशतमपेक्ष्य पिता सहस्रं पितॄनपेक्ष्य माता गौरवेणातिरिक्ता भवति। अत्रोपनयनपूर्व्वकसावित्रीमात्राध्यापयिता आचार्य्योऽभिप्रेतः। तमपेक्ष्य पितुरुत्कर्षः उत्पादकब्रह्मदात्रोरित्यनेन मुख्याचार्य्यस्य पितरमपेक्ष्य उत्कर्षं वक्ष्यतीत्यविरोधः ॥ १४५ ॥

उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्॥ १४६॥

उत्पादकेति। जनकाचार्यौ द्वावपि पितरौ जन्महेतुत्वात्। तयोराचार्य्यपिता गुरुतरः। यस्माद्विप्रस्य ब्रह्मग्रहणार्थं जन्मोपनयनजन्यसंस्काररूपमपरलोके इह लोके च शाश्वतं नित्यं ब्रह्मप्राप्तिफलकत्वात्॥ १४६॥

कामान्माता पिता चैनं यदुत्पादयतोमिथः।
सम्भूतिं तस्य तां विद्याद्यद्योनावभिजायते॥ १४७॥

मातापितरौ यदेनं बालकङ्कामवशेनान्योन्यं उत्पादयतः सम्भवमात्रन्तत्तस्य पश्वादिसाधारणं यद्योनौ मातृकुक्षाव भिजायते अङ्गप्रत्यङ्गानि लभते॥ १४७॥

आचार्य्यस्त्वस्य यां जातिं विधिवद्वेदपारगः।
उत्पादयति सावित्र्या सा सत्या साऽजरामरा॥१४८॥

आचार्य्यइति आचार्य्यः पुनर्वेदज्ञोऽस्य माणवकस्य यां जातिं यज्जन्म विधिवत् सावित्र्येति साङ्गोपनयनपूर्वक सावित्र्यनुवचनेनोत्पादयति सा जातिः सत्या अजरा अमरा

ब्रह्मप्राप्तिफलत्वात्। उपनयनपूर्व्वकस्य वेदाध्ययनतदर्थ ज्ञानानुष्ठानैर्निष्कामस्य मोक्षलाभात् ॥ १४८ ॥

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥ १४९ ॥

अल्पं वेति। श्रुतस्य श्रुतेनेत्यर्थः। उपाध्यायो यस्य शिष्य स्याल्पं वा बहु वा कृत्वा श्रुतेनोपकरोति तमपीह शास्त्रे तस्य गुरुं जानीयात्। श्रुतमेवोपक्रिया तया श्रुतोपक्रियया ॥ १४९ ॥

ब्राह्मस्य जन्मनः कर्त्ता स्वधर्म्मस्य च शासिता।
बालोपि विप्रो वृद्धस्य पिता भवति धर्म्मतः ॥ १५० ॥

ब्राह्मस्येति। ब्रह्मग्रहणार्थं जन्म ब्राह्ममुपनयनं स्वधर्म्मस्य शासिता वेदार्थव्याख्याता तादृशोपि बालो वृद्धस्य ज्येष्ठस्य पिता भवति धर्म्मत इति पितृधर्म्मास्तस्मिन्ननुष्ठातव्याः ॥ १५० ॥

अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः।
पुत्त्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥ १५१ ॥

प्रकृतानुरूपार्थवादमाह अध्यापयामासेति। अङ्गिरसः पुत्त्रो बालः कविर्विद्वान् पितॄन् गौणान्पितृव्यतत्पुत्रादीनधिक

वयसोऽध्यापितवान् तान् ज्ञानेन परिगृह्य शिष्यान् कृत्वा पुत्रका इति आजुहाव इतिहेत्यव्ययमुपावृत्तसूचनार्थम् ॥ १५१ ॥

ते तमर्थमपृच्छन्त देवानागतमन्यवः। देवाश्चैतान्समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥ १५२ ॥

ते तमर्थमपृच्छन्तइति। ते पितृतुल्याः पुत्रकाइत्युक्ता अनेन जातक्रोधाः पुत्रकशब्दार्थं देवान् पृष्टवन्तः देवाश्च पृष्टामिलित्वा एतानवोचन् युष्मान् यत् शिशुः पुत्रशब्देनोक्तवान् तद्युक्तम् ॥ १५२ ॥

अज्ञोभवति वै बालः पिता भवति मन्त्रदः अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम्॥१५३॥

अज्ञइति। वै शब्दोऽवधारणे अज्ञएव बालोभवति नत्वल्पवयाः मन्त्रदः पिता भवति मन्त्रग्रहणं वेदोपलक्षणार्थं योवेदमध्यापयति व्याचष्टे स पिता ॥ १५३ ॥

न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः। ऋषयश्चक्रिरे धर्मं योऽनूचानः स नोमहान् ॥ १५४॥

अत्रैव हेतुमाह। यस्मात्पूर्व्वेपि मुनयोऽज्ञं बालमित्यूचुः मन्त्रदञ्च पितेत्येवाब्रुवन् इत्याह। न हायनैरिति। न

बहुभिर्व्वर्षर्न्न केशश्मश्रुलोमभिः शुक्लैः न बहुना धनेन न पितृव्यत्वादिभिर्बन्धुभावैः समुदितैरप्येतैर्न महत्त्वं भवति किन्तु ऋषय इमं धर्म्मं कृतवन्तः यः साङ्गवेदाध्येतासोऽस्माकं महान् सम्मतः ॥ १५४ ॥

विप्राणां ज्ञानतोज्यैष्ठं क्षत्रियाणान्तु वीर्य्यतः।
वैश्यानान्धान्यधनतः शूद्राणामेव जन्मतः ॥१५५॥

विप्राणामिति। ब्राह्मणानां विद्यया क्षत्रियाणां पुनर्वीर्य्येण वैश्यानान्धान्यवस्त्रादिधनेन शूद्राणामेव पूर्व्वजन्मना श्रेष्ठत्वं सर्व्वत्र तृतीयार्थे तसिः ॥ १५५ ॥

न तेन वृद्धोभवति येनास्य पलितं शिरः। योवै
युवाप्यधीयानस्तन्देवाः स्थविरं विदुः ॥ १५६ ॥

न तेनेति। न तेन वृद्धोभवति येनास्य शुक्लकेशं शिरः किन्तु युवापि सन् विद्वान् तन्देवाः स्थविरञ्जानन्ति ॥ १५६ ॥

यथा काष्ठमयोहस्ती यथा चर्म्ममयोमृगः। यश्च
विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥ १५७ ॥

यथा काष्ठमयइति। यथा काष्ठघटितोहस्ती यथा चर्म्म निर्म्मितोमृगः यश्च विप्रोनाधीते त्रयएते नाममात्रं दधति नतु हस्त्यादिकार्य्यं शत्रुवधादिकर्त्तुं क्षमन्ते॥ १५७ ॥

यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला।
यथा चाज्ञेऽफलन्दानं तथा विप्रोऽनृचोऽफलः॥२५८॥

यथा षण्ढ इति। यथा नपुंसकं स्त्रीषु निष्फलं यथा स्त्रीगवी गव्यामेव निष्फला यथा चाज्ञे दानमफलं तथा ब्राह्मणोऽप्यनधीयानोनिष्फलः श्रौतस्मार्त्तकर्म्मानर्हतया तत्फलरहितत्वात्॥२५८॥

अहिंसयैव भूतानां कार्य्यं श्रेयोऽनुशासनम्। वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्म्ममिच्छता॥१५९॥

अहिंसयैवेति। भूतानां शिष्याणामकरणात् श्रेयोऽर्थमनुशासनमनतिहिंसया कर्त्तव्यं रज्वावेणुदलेन वेत्यल्पहिंसाया अभ्यनुज्ञानात्। वाणी च मधुरा प्रीतिजननी श्लक्ष्णा या नोच्चैरुच्यते सा शिष्यशिक्षार्थे धर्मबुद्धिमिच्छता प्रयोक्तव्या॥१५९॥

यस्य वाङ्मनसे शुद्धे सम्यग्गुप्ते च सर्व्वदा। स वै सर्व्वमवाप्नोति वेदान्तोपगतं फलम्॥१६०॥

यस्येति। इदानीं पुरुषमात्रस्य फलं धर्मं वाङ्मनससंयममाह न अध्यापयितुरेव। यस्य वाङ्मनसोभयं शुद्धम्भवति।

वागनृतादिभिरदुष्टा मनश्च रागद्वेषादिभिरदूषितम्भवति एते वाङ्मनसे निषिद्धविषयप्रकरणे सर्व्वदा यस्य पुंसः सुरक्षिते भवतः स वेदान्तेऽवगतं सर्व्वं फलं सर्व्वज्ञत्वसर्व्वेशत्वादिरूपं मोक्षलाभादवाप्नोति ॥ १६० ॥

नारुन्तुदः स्यादार्त्तोऽपि न परद्रोहकर्म्मधीः ।
ययास्योद्विजते वाचा नालोक्यान्तामुदीरयेत् ॥ १६१ ॥

नारुन्तुद इति । अयमपि पुरुषमात्रस्यैव धर्मो नाध्यापकस्य । आर्त्तः पीडितोपि नारुन्तुदः स्यात् न मर्मपीडाकरं तत्त्वदूषण मुदाहरेत् । तथा परस्य द्रोहोपकारस्तदर्थं कर्म बुद्धिश्च न कर्त्तव्या । तथा यया वाचा चास्य परोव्यथते तां मर्मस्पृश मर्थालोक्यां स्वर्गादिप्राप्तिविरोधिनीं न वदेत् ॥ १६१ ॥

सम्मानाद्ब्राह्मणोनित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्व्वदा ॥ १६२ ॥

सम्मानादिति । ब्राह्मणः सम्मानात् विषादिव सर्व्वदोद्विजेत सम्माने प्रीतिं न कुर्य्यात् । अमृतस्येव सर्व्वस्माल्लोकादवमान स्याकाङ्क्षेत् । अवमाने परेण कृतेपि क्षमावांस्तत्र खेदं न कुर्य्यात् । मानावमानद्वन्द्वसहिष्णुत्वमनेन विधीयते ॥ १६२ ॥

सुखं ह्यवमतः शेते सुखञ्च प्रतिबुध्यते। सुखञ्चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥ १६३ ॥

सुखं ह्यवमतः शेते इति। अवमानसहिष्णुत्वे हेतुमाह। यस्मादवमाने परेण कृते तत्र खेदमकुर्वाणः सुखं निद्राति अन्यथावमानदुःखेन दह्यमानः कथं निद्रां लभते कथञ्च सुखम्प्रतिबुध्यते प्रतिबुद्धश्च कथं सुखं कार्य्येषु चरति अवमानकर्त्ता तेन पापेन विनश्यति ॥ १६३ ॥

अनेन क्रमयोगेन संस्कृतात्मा द्विजः शनैः। गुरौ वसन् सञ्चिनुयाद्ब्रह्माधिगमिकन्तपः ॥ १६४ ॥

अनेनेति। अनेन क्रमकथितोपायेन जातकर्म्मादिना उपनयनपर्य्यन्तेन संस्कृतो द्विजो गुरुकुले वसन् शनैरत्वरया वेदग्रहणार्थं तपोऽभिहिताभिधास्यमाननियमकलापरूपमनुतिष्ठेत् विध्यन्तरसिद्धस्यापि अयमनुवादोऽध्ययनाङ्गत्वबोधनाय ॥ १६४ ॥

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः। वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥ १६५ ॥

अध्ययनाङ्गत्वमेव स्पष्टयति तपोविशेषैरिति। तपोविशेषैर्नियमकलापैर्विविधैर्बहुप्रकारैश्च अध्येयमाणस्नातामृतः

इत्यादिनोक्तैः। सेवेतेमांस्तु नियमानित्यादिभिर्वक्ष्यमाणैरपि व्रतैरौपनिषन्महानाम्निकादिभिर्विधिदर्शितैः स्वगृह्यविहितैः समग्रो वेदो मन्त्रब्राह्मणात्मकः सोपनिषत्कोऽप्यध्येतव्यः। रहस्यमुपनिषत्प्राधान्यख्यापनाय पृथङ्‌निर्देशः ॥ १६५ ॥

वेदमेव सदाभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥ १६६ ॥

वेदमेवेति। यत्र नियमानामङ्गत्वमुक्तन्तत् तत्स्वाध्यायाध्ययनमनेन विधत्ते तपस्तप्स्यन् चरिष्यन् द्विजो वेदमेव ग्रहणार्थमावर्त्तयेत् यस्माद्वेदाभ्यास एव विप्रादेरिह लोके प्रकृष्टन्तपो मुनिभिरभिधीयते ॥ १६६ ॥

आ हैव स नखाग्रेभ्यः परमन्तप्यते तपः।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥ १६७ ॥

आ हैवेति। स्वाध्यायाध्ययनस्तुतिरियं। ह शब्दः परम शब्दाभिहितस्यापि प्रकर्षस्य अतिशयसूचकः। स द्विज आ नखाग्रेभ्य एव चरणनखपर्य्यन्तं सर्व्वदेहव्यापकमेव प्रकृष्टतम तपस्तप्यते यः स्रग्व्यपि कुसुममालाधार्य्यपि प्रत्यहं यथाशक्ति स्वाध्यायमधीते तस्मादपोत्थनेन वेदाध्ययनाय ब्रह्मचारिनियमत्यागमपि

स्तुत्यर्थं दर्शयति तप्यते तपइति तपस्तपःकर्म्मकस्य वेति यणात्मनेपदे भवतः ॥ १६७ ॥

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ १६८ ॥

योऽनधीत्येति। योद्विजो वेदमनधीत्यान्यत्रार्थशास्त्रादौ श्रमं यत्नातिशयङ्करोति स जीवन्नेव पुत्रपौत्रादिसहितः शीघ्रं शूद्रत्वं गच्छति। वेदमनधीत्यापि स्मृतिवेदाङ्गाध्ययने विरोधाभावः। अतएव शङ्खलिखितौ। न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः ॥ १६८ ॥

मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने। तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥ १६९ ॥

द्विजानान्तत्र तत्राधिकारश्रुतेर्द्विजत्वनिरूपणार्थमाह। मातुरग्रइति। मातुः सकाशादादौ पुरुषस्य जन्म द्वितीयं मौञ्जीबन्धने उपनयने ज्यापेः संज्ञाछन्दसोर्बहुलमिति ह्रस्वः। तृतीयं ज्योतिष्टोमादियज्ञदीक्षायां वेदश्रवणात्। तथाच

श्रुतिः (पुनर्व्वा यज्ञलिङ्गः यज्ञियं कुर्व्वन्ति यज्ञैवयन्तीति।
प्रथमद्वितीयतृतीयजन्मकथनं चेदं द्वितीयजन्मस्तुत्यर्थं द्विज
स्यैव यज्ञदीक्षायामप्यधिकारात् ॥ १६९ ॥

तत्र यद्ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम्।
तत्रास्य माता सावित्री पिता त्वाचार्य्य उच्यते ॥१७०॥

तत्रेति। तेषु त्रिषु जन्मसु मध्ये यदेतद्ब्रह्मग्रहणार्थं जन्म उपनयनसंस्काररूपं मेखलाबन्धनोपलक्षितन्तत्रास्य माणवकस्य सावित्री माता आचार्य्यस्तु पिता मातापितृसंपाद्यत्वाज्जन्मनः ॥ १७० ॥

वेदप्रदानादाचार्य्यम्पितरम्परिचक्षते। नह्य
स्मिन् युज्यते कर्म्म किञ्चिदामौञ्जिबन्धनात् ॥१७१॥

वेदप्रदानादिति। वेदाध्यापनादाचार्य्यं पितरं मन्वादयो वदन्ति पितृवन्महोपकारफलात् गौणम्पितृत्वं महोपकारमेव दर्शयति। नह्यस्मिन्निति। यस्मादस्मिन्माणवके प्रागुपनयनात् किञ्चित् कर्म्म श्रौतं स्मार्त्तञ्च न सम्बध्यते न तत्राधिक्रियत इत्यर्थः ॥ १७१ ॥

नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते। शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥ १७२ ॥

नाभिव्याहारयेदिति। आमौञ्जीबन्धनादित्यनुवर्त्तते प्रागुपनयनाद्वेदं नोच्चारयेत्। स्वधाशब्देन श्राद्धमुच्यते तन्निनीयते निष्पाद्यते येन मन्त्रजातेन तद्वर्ज्जयित्वा मृतपितृकोनवश्राद्धादौ मन्त्रानुच्चारयेत् तद्व्यतिरिक्तं वेदन्नोदाहरेत् यस्माद्यावद्वेदे न जायते तावदसौ शूद्रेण तुल्यः ॥ १७२ ॥

कृतोपनयनस्यास्य व्रतादेशनमिष्यते। ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्व्वकम् ॥ १७३ ॥

कृतोपनयनस्येति। यस्मादस्य माणवकस्य समिधमाधेहि मा दिवा स्वाप्सीरित्यादि व्रतादेशनं वेदस्याध्ययनं मन्त्रब्राह्मणक्रमेणाध्येष्यमाणस्त्वाचान्त इत्यादिविधिपूर्व्वकमुपनीतस्योपदिश्यते तस्मादुपनयनात्पूर्व्वं न वेदमुदाहरेत् ॥ १७३ ॥

यद्यस्य विहितञ्चर्म्म यत्सूत्रं या च मेखला। यो दण्डो यच्च वसनन्तत्तदस्य व्रतेष्वपि ॥ १७४ ॥

यद्यस्येति। यस्य ब्रह्मचारिणो यानि चर्म्मसूत्रमेखलादण्डवस्त्राणि उपनयनकाले गृह्येण विहितानि गोदानादिकव्रतेष्वपि नवानि कर्त्तव्यानि ॥ १७४ ॥

सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन्।
सन्नियम्येन्द्रियग्रामन्तपोवृद्ध्यर्थमात्मनः ॥ १७५ ॥

सेवेतेति। ब्रह्मचारी गुरुसमीपे वसन् इन्द्रियसंयमं कृत्वात्मगतादृष्टवृद्ध्यर्थमिमान्नियमाननुतिष्ठेत् ॥ १७५ ॥

नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम्।
देवताभ्यर्चनञ्चैव समिदाधानमेव च ॥ १७६ ॥

नित्यमिति। प्रत्यहं स्नात्वा देवर्षिपितृभ्य उदकदानम्प्रतिमादिषु हरिहरादिदेवपूजनं सायंप्रातश्च समिद्धोमं कुर्य्यात्। यत्तु गौतमीये स्नाननिषेधो ब्रह्मचारिणः स सुखस्नानविषयः। अतएव बौधायनः। नाप्सु श्लाघमानः स्नायात्। विष्णुनाच कालद्वयमभिषेकाग्निकार्य्यकारणमप्सु दण्डवन्मज्जनमिति ब्रुवाणेन वारद्वयं स्नानमुपदिष्टम् ॥ १७६ ॥

वर्ज्जयेन्मधु मांसञ्च गन्धं माल्यं रसान् स्त्रियः।
शुक्तानि यानि सर्व्वाणि प्राणिनाञ्चैव हिंसनं॥१७७॥

वर्ज्जयेदिति। क्षौद्रमांसञ्च न खादेत् गन्धञ्च कर्पूरचन्दनकस्तूरिकादिं वर्ज्जयेत् एषाञ्च गन्धानां यथासम्भवं भक्षणमन

लेपनञ्च निषिद्धं माल्यञ्च न धारयेत् उद्रिक्तरसांश्च गुड़ादीन् खादेत् स्त्रियश्च नोपेयात् यानि स्वभावतो मधुरादिरसानि कालवशेन उदकवासादिना चाम्लयन्ति तानि शुक्तानि न खादेत्। प्राणिनां हिंसां न कुर्य्यात्॥ १७७ ॥

अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम्। कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम्॥ १७८ ॥

अभ्यङ्गमिति। तैलादिना शिरःसहितदेहमर्द्दनलक्षण कज्जलादिभिश्च चक्षुषोरञ्जनं पादुकायाश्छत्रस्य च धारणं कामं मैथुनातिरिक्तविषयाभिलाषातिशयं मैथुनस्य स्त्रिय इत्यनेनैव निषिद्धत्वात्। क्रोधलोभनृत्यगीतवीणापणवादि वर्जयेत्॥ १७८ ॥

द्यूतञ्च जनवादञ्च परिवादन्तथानृतम्। स्त्रीणाञ्च प्रेक्षणालम्भमुपघातम्परस्य च॥ १७९ ॥

द्यूतञ्चेति। अक्षादिक्रीडाञ्जनैः सह निरर्थवाक्कलहम्परस्य दोषवादं मृषाभिधानं स्त्रीणाञ्च मैथुनेच्छया सानुरागेक्षणालिङ्गने परस्य चापकारं वर्ज्जयेत्॥ १७९ ॥

एकः शयीत सर्व्वत्र न रेतः स्कन्दयेत् क्वचित्।
कामाद्धि स्कन्दयन्नेतोऽहिनस्ति व्रतमात्मनः॥ १८०॥

एकइति। सर्व्वत्र नीचशय्यादावेकाकी शयनं कुर्य्यात् इच्छया न स्वशुक्रं पातयेत्। यस्मादिच्छया स्वमेहनात् शुक्रम्पातयन् स्वकीयव्रतं नाशयति व्रतलोपे चावकीर्णि प्रायश्चित्तं कुर्य्यात्॥ १८०॥

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्म्मामित्यृचञ्जपेत्॥१८१॥

स्वप्नइति। ब्रह्मचारी स्वप्नादावनिच्छया रेतः सिक्त्वा कृतस्नानश्चन्दनाद्यनुलेपनपुष्पधूपादिभिः सूर्य्यमभ्यर्च्य पुनर्म्मामैत्विन्द्रियं इत्येतां ऋचं वारत्रयम्पठेत्। इदमत्र प्रायश्चित्तम्॥ १८१॥

उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्।
आहरेद्यावदर्थानि भैक्षञ्चाहरहश्चरेत्॥ १८२॥

उदकुम्भमिति। जलकलशपुष्पगोमयमृत्तिकाकुशान् यावदर्थानि यावद्भिः प्रयोजनानि आचार्य्यस्य तावन्माचार्य्या

र्थमाहरेत्। अतएव उदकुम्भमित्यत्र एकत्वमप्यविवक्षितं प्रदर्शनञ्चैतत् अन्यदप्याचार्य्योपयुक्तमुपहरेत् भैक्षञ्च प्रत्यह मर्जयेत्॥ १८२ ॥

वेदयज्ञैरहीनानाम्प्रशस्तानां स्वकर्म्मसु। ब्रह्म चार्य्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥ १८३ ॥

वेदयज्ञैरिति। वेदयज्ञैरत्यक्तानां स्वकर्म्मसु दक्षाणां गृहेभ्यः प्रत्यहम्ब्रह्मचारी सिद्धान्नभिक्षासमूहमाहरेत्॥ १८३॥

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु। अलाभेत्वन्यगेहानाम्पूर्व्वम्पूर्व्वं विवर्जयेत् ॥ १८४ ॥

गुरोः कुलइति। आचार्य्यस्य सपिण्डेषु बन्धुषु च मातुलादिषु न भिक्षेत तद्गृहव्यतिरिक्तभिक्षायोग्यगृहाभावे चोक्तेभ्यः पूर्व्वं पूर्व्वं वर्जयेत्। ततश्च प्रथमम्बन्धुभिक्षेत् तत्रालाभेज्ञातीन् तत्रालाभे गुरोरपि ज्ञातीन् भिक्षेत ॥ १८४ ॥

सर्व्वं वापि चरेद्ग्रामं पूर्व्वोक्तानामसम्भवे। नियम्य प्रयतोवाचमभिशस्तांस्तु वर्जयेत् ॥ १८५ ॥

सर्व्वं वेति। पूर्व्वं वेदयज्ञैरहीनानामित्यनेनोक्तानामसम्भवे सर्व्वं वा ग्राममुक्तगुणरहितमपि शुचिर्मौनी भिक्षेत् महा पातकाद्यभिशस्तांस्त्यजेत् ॥ १८५ ॥

दूरादाहृत्य समिधः संनिदध्याद्विहायसि। सायम्प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥ १८६ ॥

दूरादिति। दूरादिभ्यः परिगृहीतवृक्षेभ्यः समिध आनीय आकाशे धारणाशक्तेः पटलादौ स्थापयेत्। ताभिश्च समिद्भिः सायम्प्रातरनले होमं कुर्य्यात् ॥ १८६ ॥

अकृत्वा भैक्षचरणमसमिध्य च पावकम्। अनातुरः सप्तरात्रमवकीर्णिव्रतञ्चरेत् ॥ १८७ ॥

अकृत्वेति। भिक्षाहारं सायम्प्रातः समिद्धोममरोगो नैरन्तर्य्येण सप्तरात्रमकृत्वा लुप्तव्रतोभवति। ततश्चावकीर्णि प्रायश्चित्तं कुर्य्यात् ॥ १८७ ॥

भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥ १८८ ॥

भैक्षेणेति। ब्रह्मचारी न एकान्नमद्यात्किन्तु बहुगृहाहृतभिक्षासमूहेन प्रत्यहञ्जीवेत्। यस्माद्भिक्षासमूहेन ब्रह्मचारिणो वृत्तिरुपवासतुल्या मुनिभिः स्मृता ॥ १८८ ॥

व्रतवद्देवदैवत्ये पित्र्ये कर्म्मण्यथर्षिवत्। काम मभ्यर्थितोऽश्नीयाद्व्रतमस्य न लुप्यते ॥ १८९ ॥

व्रतवदिति। पूर्व्वनिषिद्धस्यैकान्नभोजनस्यायमतिप्रसवः। देवदैवत्ये कर्म्मणि देवतोद्देशेन श्राद्धेऽभ्यर्थितो ब्रह्मचारी व्रतवदिति व्रतविरुद्धमधुमांसादिवर्जितमेकस्याप्यन्नं यथेप्सितमश्नीत। अथ पित्रुद्देशेन श्राद्धेऽभ्यर्थितो भवति तदा ऋषिर्य्यतिः सम्यग्दर्शनसम्पन्नत्वात् स इव मधुमांसवर्जितमेकस्याप्यन्नं यथेप्सितमश्नीतेति। स एवार्थो वेदग्ध्येनोक्तः। तथापि भैक्षवृत्तिनियमरूपं व्रतमस्य लुप्तं न भवति। याज्ञवल्क्योऽपि श्राद्धेऽभ्यर्थितस्यैकान्नभोजनमाह। ब्रह्मचर्य्ये स्थितो नैकमन्नमद्यादनापदि। ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन्निति। विश्वरूपेण तु व्रतमस्य न लुप्यत इति पश्यता ब्रह्मचारिणो मधुमांसभक्षणमनेन मनुवचनेन विधीयत इति व्याख्यातम् ॥ १८९ ॥

ब्राह्मणस्यैव कर्म्मैतदुपदिष्टं मनीषिभिः। राजन्य वैश्ययोस्त्वेवं नैतत्कर्म्म विधीयते ॥ १९० ॥

ब्राह्मणस्यैवेति। ब्राह्मणक्षत्रियविशामविशेषेणैव ब्रह्मचारिणा भैक्षचरणविधानाद्व्रतवदित्यनेन तदपवादरूपमेकान्नभोजनं उपदिष्टं क्षत्रियवैश्ययोरपि प्रसक्तमनेन पर्य्युदस्यते यदेकान्न भोजनरूपङ्कर्म्म तद्ब्राह्मणस्यैव वेदार्थविद्भिर्विहितं क्षत्रिय वैश्ययोः पुनर्नैतत्कर्म्मेति ब्रूयते ॥ १९० ॥

चोदितोगुरुणा नित्यमप्रचोदितएव वा। कुर्य्या दध्ययने यत्नमाचार्य्यस्य हितेषु च ॥ १९१ ॥

चोदितइति। आचार्य्येण प्रेरितोन प्रेरितोवा स्वयमेव प्रत्यहमध्ययने गुरुहितेषु च उद्योगं कुर्य्यात् ॥ १९१ ॥

शरीरञ्चैव वाचञ्च बुद्धीन्द्रियमनांसि च। नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणोगुरोर्मुखम् ॥ १९२ ॥

शरीरञ्चेति। देहवाग्बुद्धीन्द्रियमनांसि नियम्य कृता ञ्जलिर्गुरुमुखम्पश्यंस्तिष्ठेत्। नोपविशेत् ॥ १९२ ॥

नित्यमुद्धृतपाणिः स्यात्साध्वाचारः सुसंयतः। आ
स्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥१९३॥

नित्यमिति। सततमुत्तरीयाद्वहिष्कृतदक्षिणवाहुः शोभ
नाचारो वस्त्राच्छतदेह आस्यतामिति गुरुणोक्तः सन् गुरोरभि
मुखं यथाभवति तथा आसीत ॥ १९३ ॥

हीनान्नवस्त्रवेषः स्यात्सर्व्वदा गुरुसन्निधौ।
उत्तिष्ठेत्प्रथमञ्चास्य चरमञ्चैव सम्विशेत् ॥ १९४ ॥

हीनान्नवस्त्रेति। सर्व्वदा गुरुसमीपे गुर्व्वपेक्षया त्वप्रकृष्टान्न
वस्त्रप्रसाधनो भवेत्। गुरोश्च प्रथमं रात्रिशेषे शयनादुत्तिष्ठेत्
प्रदोषे च गुरौ सुप्ते पश्चाच्छयीत ॥ १९४ ॥

प्रतिश्रवणसम्भाषे शयानो न समाचरेत्। नासी
नो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥ १९५ ॥

प्रतिश्रवणेति। प्रतिश्रवणमाज्ञाङ्गीकरणं सम्भाषणञ्च
गुरोः शय्यायां सुप्तः आसनोपविष्टो भुञ्जानस्तिष्ठन्विमुखश्च न
कुर्य्यात् ॥ १९५ ॥

आसीनस्य स्थितः कुर्य्यादभिगच्छंस्तु तिष्ठतः।
प्रत्युद्गम्यत्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥ १९६ ॥

कथन्तर्हि कुर्य्यात्तदाह। आसीनस्येति। आसनोपविष्टस्य गुरोराज्ञान्ददतः स्वयमासनादुत्थितः तिष्ठतो गुरोरादिशतः तदभिमुखं कतिचित्पदानि गत्वा यदा गुरुरागच्छति तदाप्यभिमुखङ्गत्वा यदातु गुरुर्द्धावन्नादिशति तदा तस्य पश्चाद्धावन्प्रतिश्रवणसम्भाषे कुर्य्यात्॥ १९६ ॥

पराङ्मुखस्याभिमुखोदूरस्थस्येत्य चान्तिकम्।
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥ १९७ ॥

तथा पराङ्मुखस्येति। पराङ्मुखस्य गुरोरादिशतः सम्मुखस्थोदूरस्थस्य गुरोः समीपमागत्य शयानस्य गुरोः प्रणम्य प्रह्वीभूत्वा निदेशे निकटे अवतिष्ठतो गुरोरादिशतः प्रह्वीभूयैव प्रतिश्रवणसम्भाषे कुर्य्यात्॥ १९७ ॥

नीचं शय्यासनञ्चास्य सर्व्वदा गुरुसन्निधौ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनोभवेत् ॥ १९८ ॥

नीचमिति। गुरुसमीपे चास्य गुरुशय्यासनापेक्षया नीचे एव शय्यासने नित्यं स्यातां यत्र च देशे समासीनं गुरुः पश्यति न तत्र यथेष्टचेष्टाचरणप्रसारादिकां कुर्य्यात्॥ १९८ ॥

नोदाहरेदस्य नाम परोक्षमपि केवलम्।
नचैवास्यानुकुर्व्वीत गतिभाषितचेष्टितम्॥१९९॥

नोदाहरेदिति। अस्य गुरोः परोक्षमपि उपाध्याया चार्य्यादिपूजावचनोपपदशून्यं नाम नोच्चारयेत् तथा न गुरोर्गमनभाषितचेष्टितान्यनुकुर्वीत। गुरुगमनादिसदृशान्यात्मनोगमनादीनि उपहासबुद्ध्या न कुर्वीत॥१९९॥

गुरोर्य्यत्र परीवादोनिन्दावापि प्रवर्त्तते। कर्णौ तत्र पिधातव्यौ गन्तव्यम्वा ततोन्यतः॥२००॥

गुरोर्यत्रेति। विद्यमानदोषस्याभिधानम्परीवादः अविद्यमानदोषाभिधानं निन्दा यत्र देशे गुरोःपरीवादोनिन्दावा वर्त्तते तत्र स्थितेन शिष्येण कर्णौ हस्तादिना तिरोधातव्यौ तस्माद्वा देशाद्देशान्तरङ्गन्तव्यम्॥२००॥

परीवादात् खरोभवति श्वावै भवति निन्दकः।
परिभोक्ता कृमिर्भवति कीटोभवति मत्सरी॥२०१॥

इदानीं शिष्यकर्त्तृकपरीवादादिफलमाह। परीवादादिति। गुरोः परिवादाच्छिष्योमृतःखरोभवति गुरोर्निन्दकः

कुक्कुरोभवति परिभोक्ता अनुचितेन गुरुधनेनोपजीवकः कृमि र्भवति। मत्सरी गुरोरुत्कर्षासहनः कीटोभवति कीटः कृमिभ्यः किञ्चित् स्थूलोभवति ॥ २०१ ॥

दूरस्थोनार्चयेदेनं न क्रुद्धोनान्तिके स्त्रियाः। यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥ २०२ ॥

दूरस्थइति। दूरस्थः शिष्योऽन्यं नियुज्य माल्यवस्त्रादिना गुरुं नार्चयेत् स्वयङ्गमनाशक्तौ त्वदोषः। क्रुद्धः कामिनीसमीपे च स्थितं स्वयमपि नार्चयेत्। यानासनस्थश्च शिष्यो यानासना दवतीर्य गुरुमभिवादयेत् यानासनस्थश्चैवैनमप्युत्थायेत्यनेन यानासनादुत्थानं विहितं अनेनतु यानासनत्यागइत्यपुन रुक्तिः ॥ २०२ ॥

प्रतिवातेऽनुवाते च नासीत गुरुणा सह। असंश्रवे चैव गुरोर्नकिञ्चिदपि कीर्त्तयेत् ॥ २०३ ॥

प्रतिवातइति। प्रतिगतोऽभिमुखीभूतः शिष्यस्य योगुरु देशाच्छिष्यदेशमागच्छति स प्रतिवातः यः शिष्यदेशाद्गुरुदेशमा गच्छति सोऽनुवातः। तत्र गुरुणा समं नासीत। तथाऽविद्य मानः संश्रवोयत्र तस्मिन्नसंश्रवे गुरुर्यत्र नशृणोतीत्यर्थः तत्र गुरुगतमन्यगतं वा न किञ्चित्कथयेत् ॥ २०३ ॥

गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च। आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥ २०४ ॥

गो इति। यानशब्दः प्रत्येकमभिसम्बध्यते। बलीवर्द्दयाने घोटकप्रयुक्ते याने उष्ट्रयुक्तयाने रथशकटादौ प्रासादोपरि प्रस्तरे कटे च तृणादिनिर्म्मिते शिलायां फलके च दारुघटित दीर्घासने नौकायाञ्च गुरुणा सह आसीत ॥ २०४ ॥

गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत्। न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥ २०५ ॥

गुरोर्गुराविति। आचार्य्यस्याचार्य्ये सन्निहिते आचार्य्य इव तस्मिन्नपि अभिवादनादिकां वृत्तिमनुतिष्ठेत्। तथा गुरुगृहे वसन् शिष्य आचार्य्येणानियुक्तेन स्वान् गुरून् मातृपितृव्यादी नभिवादयेत् ॥ २०५ ॥

विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु। प्रतिषेधत्सु चाधर्म्मान् हितञ्चोपदिशत्स्वपि ॥ २०६ ॥

विद्येति। आचार्य्यव्यतिरिक्ता उपाध्यायादयो विद्यागुरवः। तेष्वेत देवेति सामान्योपक्रमः। किन्तदाचार्य्य इव नित्या सार्व्वकालिकी वृत्तिर्विधेया। तथा स्वयोनिष्वपि पितृव्यादिषु तद्वृत्तिः। तथा अधर्म्मान्निषेधत्सु धर्म्मतत्त्वञ्चोपदिशत्सु गुरुवद्वर्त्तितव्यम् ॥ २०६ ॥

श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत्। गुरुपुत्रेषु चार्य्येषु गुरोश्चैव स्वबन्धुषु॥ २०७॥

श्रेयःस्विति श्रेयःसु विद्यातपःसमृद्धेषु आर्य्येष्विति गुरुपुत्रविशेषणं समानजातिषु गुरुपुत्रेषु गुरोश्च ज्ञातिष्वपि पितृव्यादिषु सर्व्वदा गुरुवद्वृत्तिमनुतिष्ठेत्। गुरुपुत्रश्चात्राशिष्योऽधिकवयाश्च बोद्धव्यः। शिष्यबालसमानवयसां अनन्तरं विशेषस्य वक्ष्यमाणत्वात्॥ २०७॥

बालः समानजन्मा वा शिष्योवा यज्ञकर्म्मणि। अध्यापयन् गुरुसुतोगुरुवन्मानमर्हति॥ २०८॥

बाल इति। कनिष्ठः सवयावा ज्येष्ठोपि वा शिष्योऽध्यापयन् अध्यापनसमर्थोगृहीतवेद इत्यर्थः। स यज्ञकर्म्मणि ऋत्विगन्यत्वा यज्ञदर्शनार्थमागतोगुरुवत्पूजामर्हति॥ २०८॥

उत्सादनञ्च गात्राणां स्नापनोच्छिष्टभोजने। न कुर्य्याद्गुरुपुत्रस्य पादयोश्चावनेजनम्॥ २०९॥

आचार्य्यवदित्यविशेषेण पूजायामाप्तायां विशेषमाह उत्सादनमिति। गात्राणामुत्सादनमुद्वर्त्तनं स्नापनं उच्छिष्टस्य भक्षणम्पादयोश्च प्रक्षालनं गुरुपुत्रस्य न कुर्य्यात्॥ २०९॥

गुरुवत्प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः। असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः ॥ २१० ॥

गुरुवदिति। सवर्णा गुरुपत्न्यः गुरुवदाज्ञाकरणादिना पूज्या भवेयुः। असवर्णाः पुनः केवलैःप्रत्युत्थानाभिवादनैः॥ २१० ॥

अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च। गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम ॥ २११ ॥

अभ्यञ्जनमिति। तैलादिना देहाभ्यङ्गं स्नापनङ्गात्राणां चोद्वर्त्तनङ्केशानाञ्च माल्यादिना प्रसाधनमेतानि गुरुपत्न्या न कर्त्तव्यानि केशानामिति प्रदर्शनमात्रार्थं देहस्यापि चन्दनादिना प्रसाधनं न कुर्य्यात् ॥ २११ ॥

गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः। पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ २१२ ॥

गुरुपत्नीत्विति। युवती गुरुपत्नी पादयोरुपसंगृह्य अभिवादनदोषगुणज्ञेन यूना नाभिवाद्या पूर्णविंशतिवर्षत्वं यौवनप्रदर्शनार्थं बालस्य पादयोरभिवादनमनिषिद्धम्। यूनस्तु भूमावभिवादनं वक्ष्यति ॥ २१२ ॥

स्वभाव एष नारीणां नराणामिह दूषणम्।
अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः॥ २१३॥

स्वभावइति। स्त्रीणामयं स्वभावः यदिह शृङ्गारचेष्टया व्यामोह्य पुरुषाणान्दूषणम्। अतोऽर्थादस्माद्धेतोः पण्डिताः स्त्रीषु न प्रमत्ताभवन्ति॥ २१३॥

अविद्वांसमलं लोके विद्वांसमपि वा पुनः।
प्रमदा ह्युत्पथं नेतुङ्कामक्रोधवशानुगम्॥ २१४॥

अविद्वांसमिति। विद्वानहञ्जितेन्द्रियइति बुद्ध्या न स्त्रीसन्निधिर्विधेयः। यस्मादविद्वांसं विद्वांसमपि वा पुनः पुरुषन्देह धर्मात्कामक्रोधवशानुयायिनं स्त्रियउत्पथं नेतुं समर्थाः॥२१४॥

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति॥ २१५॥

अतआह। मात्रेति। मात्रा भगिन्या दुहित्रा वा निर्जन गृहादौ नासीत यतोऽतिबलइन्द्रियगणः शास्त्रनियमितात्मानमपि पुरुषम्परवशङ्करोति॥ २१५॥

कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि।
विधिवद्वन्दनं कुर्य्यादसावहमिति ब्रुवन्॥ २१६॥

कामन्त्विति। कामन्तु गुरुपत्नीनां युवतीनां स्वयमपि युवा यथोक्तविधिना भूमावभिवादयेऽमुकशर्माऽहमभवतीति ब्रुवन्पाद ग्रहणं विना यथेष्टमभिवादनं कुर्य्यात॥ २१६॥

विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम्। गुरु
दारेषु कुर्वीत सतान्धर्म्ममनुस्मरन्॥ २१७॥

विप्रोष्येति। प्रवासादागत्य सव्येन सव्यः स्पृष्टव्यो दक्षिणेन च दक्षिण इत्युक्तविधिना पादग्रहणमन्वहञ्च भूमावभिवादन गुरुपत्नीषु युवा कुर्य्यात [illegible] नामयमाचार इति जानन् ॥ २१७॥

यथा खनन् खनित्रेण नरो वार्य्यधिगच्छति।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति॥ २१८॥

यथेति। उक्त [illegible] [illegible] [illegible] यथा कश्चिन्मनुष्यः खनित्रेण भूमिं खनन् जलं प्राप्नोति। [illegible] गुरुगतां विद्यां गुरु सेवापरः शिष्यः प्राप्नोति॥ २१८॥

मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः।
नैनं ग्रामेऽभिनिम्लोचेत्सूर्य्यो नाभ्युदियात् क्वचित्
॥२१९॥

मुण्डो वेति। ब्रह्मचारिणः प्रकारत्रयमाह। मुण्डित समस्तशिरःकेशो वा जटावान् वा शिखैव वा जटाजाता यस्य अपरशिरःकेशा मुण्डिताः तथा वा भवेत् एनम्ब्रह्मचारिणं क्वचिद्ग्रामे निद्राणं उत्तरत्र शयानमिति दर्शनात्सूर्य्यो नाभिनिम्लोचेत् नास्तमियात् ॥ २१९ ॥

तञ्चेदभ्युदियात्सूर्य्यः शयानं कामचारतः। निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ २२० ॥

अत्र प्रायश्चित्तमाह। तञ्चेदिति। तञ्चेत्कामतो निद्राणं निद्रापरवशत्वेनाज्ञानात् सूर्य्योऽभ्युदियात् अस्तमियात्तदा सावित्रीं जपन् उभयत्रापि दिनं उपवसन् रात्रौ भुञ्जीत। अभिनिम्लुक्तस्य उत्तरेऽहनि उपवासजपौ अभिरभागदर्शने कर्मप्रवचनीयसंज्ञा ततः कर्मप्रवचनीययुक्ते द्वितीया। सावित्रीजपस्तु गौतमवचनात् तदाह गौतमः। सूर्य्याभ्युदितो ब्रह्मचारी तिष्ठेत् अहरभुञ्जानोऽभ्यस्तमितश्च रात्रिं जपन् सावित्रीं। ननु गौतमवचनात् सूर्य्याभ्युदितस्यैव दिनाभोजनजपावुक्तौ

अभ्यस्तमितस्य तु रात्र्यभोजनजपौ नैतत् अपेक्षायां व्याख्या सन्देहे वा मुन्यन्तरविवृतमन्वर्थमन्वयामहे नतु स्फुटमन्वर्थं मुन्यन्तरदर्शनादन्यथाकुर्म्मः। अतएव जपापेक्षायाङ्गौतम वचनात् सावित्रीजपोऽभ्युपेयएव नतूभयत्र स्फुटं मनूक्तन्दिनोपवासजपमपाकुर्म्मः। तस्मादभ्यस्तमितस्य मानवगौतमोयप्रायश्चित्तविकल्पः॥ २२०॥

सूर्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च यः। प्रायश्चित्तमकुर्वाणो युक्तः स्यान्महतैनसा॥ २२१॥

अस्य तु प्रायश्चित्तविधेरर्थवादमाह सूर्य्येणेति। यस्मात्सूर्य्येणाभिनिर्मुक्तोऽभ्युदितश्च निद्राणः प्रायश्चित्तमकुर्व्वन्महतापापेन युक्तो नरकं गच्छति तस्माद्यथोक्तप्रायश्चित्तं कुर्य्यात् ॥ २२१॥

आचम्य प्रयतोनित्यमुभे संध्ये समाहितः। शुचौ देशे जपञ्जप्यमुपासीत यथाविधि॥ २२२॥

यस्मादुक्तप्रकारेण सन्ध्यातिक्रमे महत्पापमतआह आचम्येति। आचम्य पवित्रोनित्यमनन्यमनाः शुचिदेशे सावित्रीञ्जपन् उभे सन्ध्ये विधिवदुपासीत॥ २२२॥

यदि स्त्री यद्यवरजः श्रेयः किञ्चित्समाचरेत्।
तत्सर्व्वमाचरेद्युक्तो यत्र वास्य रमेन्मनः ॥ २२३ ॥

यदीति। यदि स्त्री शूद्रो वा किंचित् श्रेयोऽनुतिष्ठति तत्सर्वं उद्युक्तोऽनुतिष्ठेत् यच्च शास्त्रानिषिद्धे मनोऽस्य तुष्यति तदपि कुर्य्यात् ॥ २२३ ॥

धर्म्मार्थावुच्यते श्रेयः कामार्थौ धर्म्म एव च। अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥ २२४ ॥

श्रेय एव किं तद्दर्शयति धर्म्मार्थाविति। धर्म्मार्थौ श्रेयोऽभिधीयते कामहेतुत्वादिति केचिदाचार्य्या मन्यन्ते अन्ये त्वर्थकामौ सुखहेतुत्वात् धर्म्म एवेत्यपरं अर्थकामयोरप्युपायत्वात्। अर्थ एवेह लोके श्रेय इत्यन्ये धर्म्मकामयोरपि साधनत्वात्। सम्प्रति स्वमतमाह। धर्म्मार्थकामात्मकः परस्पराविरुद्धः त्रिवर्ग एव पुरुषार्थतया श्रेय इति विनिश्चयः। एवञ्च बुभुचून्प्रत्युपदेशोन मुमुक्षून् मुमुक्षूणान्तु मोक्ष एव श्रेय इति षष्ठे वक्ष्यते ॥ २२४ ॥

आचार्य्यो ब्रह्मणो मूर्त्तिः पिता मूर्त्तिः प्रजापतेः। माता पृथिव्यामूर्त्तिस्तु भ्राता स्वोमूर्त्तिरात्मनः ॥ २२५ ॥

आचार्य्य इति। आचार्य्यो वेदान्तोदितस्य ब्रह्मणः परमात्मनो मूर्त्तिः शरीरं पिता हिरण्यगर्भस्य माता च धारणात्पृथिवी मूर्त्तिः भ्राता च स्वः सगर्भः क्षेत्रज्ञस्य तस्माद्देवतारूपा एता नावमन्तव्याः ॥ २२५ ॥

आचार्य्यश्च पिताचैव माता भ्राता च पूर्व्वजः। नार्त्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः ॥ २२६ ॥

आचार्य्येति। आचार्य्यो जनको जननी च भ्राता च सगर्भो ज्येष्ठः पीडितेनापि अमी नावमाननीयाः विशेषतो ब्राह्मणेन यस्मात ॥ २२६ ॥

यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम्। न तस्य निष्कृतिः शक्यः कर्त्तुं वर्षशतैरपि ॥ २२७ ॥

यमिति। नृणामपत्यानां सम्भवे गर्भाधाने सति अनन्तरं यं क्लेशं मातापितरौ सहेते तस्य वर्षशतैरप्यनेकैरपि

जन्मभिरानृण्यं कर्तुमशक्यम्। मातुस्तावत्कुक्षौ धारणदुःखं प्रसववेदनातिशयो जातस्य रक्षणवर्द्धनकष्टञ्च पितुरपि बाल्ये रक्षासम्बर्द्धनदुःखं उपनयनात्प्रभृतिवेदतदङ्गाध्यापनव्याख्यानादिक्लेशातिशयइति सर्व्वं सिद्धं तस्मात् देवतारूपा एते नाव मन्तव्याः ॥ २२७ ॥

तयोर्नित्यम्प्रियं कुर्य्यादाचार्य्यस्य च सर्व्वदा।
तेष्वेव त्रिषु तुष्टेषु तपः सर्व्वं समाप्यते ॥ २२८ ॥

तयोर्नित्यमिति। तयोर्मातापित्रोः प्रत्यहमाचार्य्यस्य च सर्व्वदा प्रीतिमुत्पादयेत्। यस्मात्तेष्वेव त्रिषु प्रीतेषु सर्व्वं तपः चान्द्रायणादिकम्फलद्वारेण सम्यक् प्राप्यते मात्रादित्रयतुष्ट्यैव सर्व्वस्य तपसः फलम्प्राप्यतइत्यर्थः ॥ २२८ ॥

तेषान्त्रयाणां शुश्रूषा परमन्तपउच्यते। नतैरभ्यननुज्ञातोधर्म्ममन्यं समाचरेत् ॥ २२९ ॥

तेषामिति। तेषां मातापित्राचार्य्याणाम्परिचर्य्या सर्व्वन्तपोमध्यं श्रेष्ठं इतएव सर्व्वतपःफलप्राप्तेर्य्यद्यन्यमपि धर्म्मं कथञ्चित् करोति तदप्येतत् त्रयानुमतिव्यतिरेकेण न कुर्य्यात् ॥ २२९ ॥

तएव हि त्रयोलोकास्तएव त्रयआश्रमाः। तएव हि त्रयोवेदास्तएवोक्तास्त्रयोऽग्नयः ॥ २३० ॥

तएवेति। यस्मात्तएव मातापित्राचार्य्यास्त्रयोलोकाः लोकत्रयप्राप्तिहेतुत्वात् कारणे कार्य्योपचारः तएव ब्रह्मचर्य्यादिभावत्रयरूपाश्रमाः गार्हस्थ्याद्याश्रमत्रयप्रदायकत्वात्। तएव त्रयोवेदाः वेदत्रयजपफलोपायत्वात्। तएवहि त्रयोऽग्नयोऽभिहिताः त्रेताग्न्याधेययज्ञादिफलदातृत्वात् ॥ २३० ॥

पिता वै गार्हपत्योऽग्निर्म्माताग्निर्दक्षिणः स्मृतः। गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ २३१ ॥

पितेति। वैशब्दोऽवधारणे पितैव गार्हपत्योऽग्निः माता दक्षिणाग्निः आचार्य्यआहवनीयः सेयमग्नित्रेता श्रेष्ठतरा स्तुत्यर्थत्वाच्चास्य न वस्तुविरोधोऽत्रभावनीयः ॥ २३१ ॥

त्रिष्वप्रमाद्यन्नेतेषु त्रीन् लोकान् विजयेद्गृही। दीप्यमानः स्ववपुषा देववद्दिवि मोदते ॥ २३२ ॥

त्रिष्विति। एतेषु त्रिषु प्रमादमकुर्व्वन् ब्रह्मचारी तावत् भवत्येव गृहस्थोपि त्रीन् लोकान् विजयते संज्ञापूर्व्वकस्यात्मने

पदविधेरनित्यत्वान्न विपराभ्यांजेरित्यात्मनेपदं त्रीन् लोकान् विजयेदिति त्रिभ्वाधिपत्यं प्राप्नोति तथा स्ववपुषा प्रकाशमानः सूर्यादिदेववत् दिवि हृष्टोभवति ॥ २३२ ॥

इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ।
गुरुशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते ॥ २३३ ॥

इममिति। इमम्भूर्लोकं मातृभक्त्या पितृभक्त्या मध्यममन्तरीक्षम्। आचार्य्यभक्त्या तु हिरण्यगर्भलोकमेव प्राप्नोति ॥ २३३ ॥

सर्व्वे तस्यादृता धर्म्मा यस्यैते त्रयआदृताः । अनादृतास्तु यस्यैते सर्व्वास्तस्याऽफलाः क्रियाः ॥ २३४ ॥

सर्व्वे तस्येति। यस्यैते त्रयोमातापित्राचार्य्या आदृताः सत्कृताः तस्य सर्व्वे धर्म्माः फलदा भवन्ति यस्यैते त्रयोऽनादृतास्तस्य सर्व्वाणि श्रौतस्मार्त्तकर्म्माणि निष्फलानि भवन्ति ॥ २३४ ॥

यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत् ।
तेष्वेव नित्यं शुश्रूषां कुर्य्यात्प्रियहिते रतः ॥ २३५ ॥

यावदिति। ते त्रयोयावज्जीवन्ति तावदन्यन्धर्म्मं स्वातन्त्र्येण नानुतिष्ठेत्। तदनुज्ञया तु धर्म्मानुष्ठानं प्रागिहितमेव किन्तु

तेष्वेव प्रत्यहं प्रियहितपरः शुश्रूषां कुर्य्यात् तदर्थं प्रीतिसाधनं प्रियं भेषजपानादिवत् आयत्यामिष्टसाधनं हितम् ॥ २२५ ॥

तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत्। तत्त्न्निवेदयेत्तेभ्योमनोवचनकर्म्मभिः ॥ २३६ ॥

तेषामिति। तेषां शुश्रूषायाअविरोधेन तदनुज्ञातो यद्यन्मनोवचनकर्म्मभिः परलोकफलं कर्म्मानुष्ठितन्तन्मयैतदनुष्ठितमिति पश्चात्तेभ्योनिवेदयेत् ॥ २३६ ॥

त्रिष्वेतेष्विति कृत्यं हि पुरुषस्य समाप्यते। एष धर्म्मः परः साक्षादुपधर्म्मोऽन्यउच्यते ॥ २३७ ॥

त्रिष्विति। इतिशब्दः कार्त्स्न्ये हिशब्दो हेतौ यस्मादेतेषु त्रिषु शुश्रूषितेषु पुरुषस्य सर्व्वं श्रौतस्मार्त्तं कर्त्तव्यं सम्पूर्णमनुष्ठितं भवति तत्फलावाप्तेस्तस्मादेषश्रेष्ठोधर्म्मः साक्षात्सर्व्वपुरुषार्थसाधनः। अन्यस्त्वग्निहोत्रादिः प्रतिनियतस्वर्गादिहेतुरूपधर्म्मोजघन्यधर्म्मइतिशुश्रूषास्तुतिः ॥ २३७ ॥

श्रद्दधानः शुभां विद्यामाददीताऽवरादपि। अन्त्यादपि परन्धर्म्मं स्त्रीरत्नन्दुष्कुलादपि ॥ २३८ ॥

श्रद्दधानइति। श्रद्धायुक्तः शुभां दृष्टशक्तिंगारुडादिविद्यां अवराच्छूद्रादपि गृह्णीयात् अन्त्यश्चाण्डालः तस्मादपि

जातिस्मरादेर्विहितयोगप्रकर्षात् दुष्कृतशेषोपभोगार्थमवाप्त चाण्डालजन्मनः परस्माद् मोक्षोपायमात्मज्ञानमाददीत। तस्या आत्मज्ञानमेवोपक्रम्य मोक्षधर्मं प्राप्य ज्ञानम्ब्राह्मणात् क्षत्रियात् वैश्यात् शूद्रादपि नीचादभीक्ष्णं। अर्हातव्यं श्रद्दधानेन नित्यश्च श्रद्धिर्नास्ति जन्ममृत्युविशेषतां। मेधातिथिस्तु श्रुतिस्मृत्यपेक्षया परोधर्मोलौकिकः धर्मशब्दोप्यत्र स्यायामपि युज्यते। यदि चाण्डालोप्यत्र प्रदेशे मा चिरं स्था माचास्मिन्नम्भसि स्नायादितिवदति तमपि धर्ममनुतिष्ठेत्। प्रागल्भ्यालौकिकं वस्तु परन्धर्ममिति ब्रुवन्। चित्रं तथापि सर्वत्र श्लाघ्यो मेधातिथिः सतां। स्त्रीरत्नं आत्मापेक्षया निकृष्ट कुलादपि परिणेतुं स्वीकुर्य्यात्॥ २३८॥

विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम्।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम्॥ २३९॥

विषादिति। विषं यद्यमृतयुक्तम्भवति तदा विषमपसार्य तस्मादमृतं ग्राह्यंबालादपि हितवचनं ग्राह्यं शत्रुतोपि सज्जन वृत्तं अमेध्यादपि सुवर्णादिकं ग्रहीतव्यम्॥ १३९॥

स्त्रियो रत्नान्यथो विद्या धर्म्मः शौचं सुभाषितम्।
विविधानि च शिल्पानि समादेयानि सर्व्वतः॥ २४०॥

स्त्रिय इति। अत्र स्त्र्यादीनामुक्तानामपि दृष्टान्ततयो पादानं यथा स्त्र्यादयो निकृष्टकुलादिभ्यो गृह्यन्ते तथा अन्यान्यपि हितानि चित्रलिखनादीनि सर्व्वतः प्रतिग्रहीतव्यानि ॥ २४० ॥

अब्राह्मणादध्ययनमापत्काले विधीयते। अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः॥ २४१ ॥

अब्राह्मणादिति। ब्राह्मणादन्यो यो द्विजः क्षत्रियस्तदभावे वैश्यो वा तस्मादध्ययनमापत्काले ब्राह्मणाध्यापकासम्भवे ब्रह्मचारिणो विधीयते। अनुव्रज्यादिरूपा गुरोः शुश्रूषा यावदध्ययनन्तावत्कार्य्या गुरुत्वकृपादप्रक्षालनोच्छिष्टप्राशननादिरूपा शुश्रूषा प्रशस्ता सा न कार्य्या। तदर्थमनुव्रज्येति विशेषितं। गुरुत्वमपि यावदध्ययनमेव क्षत्रियस्याध्यापकस्य। सम्वदः क्षत्रियो वित्रः शुश्रूष्यो नुगमादिना। आप्तविद्यो ब्राह्मणस्तु पुनस्तस्य गुरुः स्मृतः। ब्रह्मचारित्वेन नैष्ठिकस्यापि अब्राह्मणादध्ययनमसम्यक् प्रतिषेधयति ॥ २४१ ॥

नाब्राह्मणे गुरौ शिष्योवासमात्यन्तिकं वसेत्।
ब्राह्मणे चाननूचाने काङ्क्षन्गतिमनुत्तमाम्॥२४२॥

नेत्राब्राह्मणइति। आत्यन्तिकं वासं यावज्जीविकं ब्रह्मचर्यं क्षत्रियादिके गुरौ ब्राह्मणे साङ्गवेदानध्येतरि अनुत्तमां गतिं मोक्षलक्षणामिच्छन् शिष्योनानुतिष्ठेत्॥ २४२ ॥

यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले।
युक्तः परिचरेदेनमाशरीरविमोक्षणात्॥ २४३ ॥

यदीति। यदि तु गुरोः कुले नैष्ठिकंब्रह्मचर्यात्मकमात्यन्तिकंवासमिच्छेत्तदा यावज्जीवनमुद्युक्तोगुरुं शुश्रूषयेत् ॥ २४३ ॥

आसमाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्। स
गच्छत्यञ्जसा विप्रोब्रह्मणः सद्म शाश्वतम्॥ २४४ ॥

अस्य फलमाह। आसमाप्तेरिति। समाप्तिः शरीरस्य जीवनत्यागः तत्पर्यन्तं योगुरुं परिचरति स तत्त्वतोब्रह्मणः सद्मरूपमविनाशि प्राप्नोति ब्रह्मणि लीयतइत्यर्थः ॥ २४४ ॥

न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित्। स्नास्यं स्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत्॥ २४५॥

नेपूर्वमिति। उपकुर्वाणस्यायं विधिः नैष्ठिकस्य स्नानासम्भवात्। गुरुदक्षिणादानधर्मज्ञो ब्रह्मचारी स्नानात्पूर्वं किञ्चित् गोवस्त्रादिधनङ्गुरवे नावश्यं दद्यात्। यदि तु यदृच्छातो लभते तदा गुरवे दद्यादेव अतएव स्नानात्पूर्वं गुरवे दानमाहापस्तम्बः। यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणाएव ताः सएव ब्रह्मचारिणोयज्ञोनित्यव्रतमिति। स्नास्यन् पुनर्गुरुणा दत्ताज्ञोयथाशक्ति धनिनं याचित्वापि प्रतिग्रहादिनापि गुरवेऽर्थमाहृत्यावश्यन्दद्यात्॥ २४५॥

क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम्। धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत्॥ २४६॥

किन्तत्तदाह। क्षेत्रमिति। शक्त्या गुर्वर्थमाहरेदित्युक्तत्वात् क्षेत्रहिरण्यादिकं यथासामर्थ्यं विकल्पितं समुदितं वा गुरवे दत्वा तत्प्रीतिमर्जयेत्। विकल्पपक्षे चान्ततोऽन्यासम्भवे छत्रोपानहमपि दद्यात् द्वन्द्वनिर्देशात् समुदितदानं प्रदर्शनार्थं चैतत्सम्भवेऽन्यदपि दद्यात्। अतएव लघुहारीतः। एकमप्य

घरं यस्तु गुरुः शिष्ये निवेदयेत्। पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा चानृणी भवेत्। असम्भवे शाकमपि दद्यात्॥ २४६॥

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते। गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत्॥ २४७॥

आचार्य इति। नैष्ठिकस्यायमुपदेशः। आचार्ये मृते तत्सुते विद्यादिगुणयुक्ते तदभावे गुरुपत्न्यां तदभावे गुरोः सपिण्डे पितृव्यादौ गुरुवत् शुश्रूषामनुतिष्ठेत्॥ २४७॥

एतेष्वविद्यमानेषु स्थानासनविहारवान्। प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः॥ २४८॥

एतेष्विति। एतेषु त्रिषु अविद्यमानेषु सततमाचार्यस्याग्नेः समीपे स्थानासनविहारैः सायंप्रातरादौ समिद्धोमादिना अग्नेःशुश्रूषां कुर्वन् आत्मनोदेहमात्मदेहावच्छिन्नं जीवम्ब्रह्मप्राप्तियोग्यं साधयेत्॥ २४८॥

एवञ्चरति योविप्रोब्रह्मचर्य्यमविप्लुतः। स गच्छत्युत्तमं स्थानं न चेहाजायते पुनः॥ २४९ ॥

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वितीयोऽध्यायः॥

एवञ्चरतीति। आसमाप्तेः शरीरस्येत्यनेन यावज्जीवमाचार्य्यशुश्रूषया मोक्षलक्षणं फलमुक्तं। इदानीमाचार्य्ये [illegible] एवमित्यनेनानन्तरोक्तविधिना आचार्य्यपुत्रादीनामप्यग्निपर्य्यन्तानां शुश्रूषकोयोनैष्ठिकोब्रह्मचर्य्यमखण्डितव्रतोऽनुतिष्ठति स उत्तमस्थानम्ब्रह्मण्यात्यन्तिकलयलक्षणमाप्नोति। न चेह संसारे कर्म्मवशादुत्पत्तिं लभते॥ २४९ ॥

इति मन्वर्थमुक्तावल्यां मनुवृत्तौ द्वितीयोऽध्यायः॥

## ॥ ३ अध्यायः ॥

---

षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्।
तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥ १ ॥

पूर्व्वं आसमाप्तेः शरीरस्येत्यनेन नैष्ठिकब्रह्मचर्य्यमुक्तम्। न चावध्यपेक्षा आसमावर्त्तनादित्यनेन चोपकुर्वाणकस्य सावधिब्रह्मचर्य्यमुक्तम्। अतस्तस्यैव गार्हस्थ्याधिकारः। तत्र कियदवधिब्रह्मचर्य्ये तस्य गार्हस्थ्यमित्यपेक्षायामाह। षट्त्रिंशदाब्दिकमिति। त्रयो वेदा ऋग्यजुःसमाख्याः तेषां समाहारः त्रिवेदी तद्विषयं व्रतं स्वगृह्योक्तनियमसमूहरूपं षट्त्रिंशद्वर्षं यावत् गुरुकुले चरितव्यं षट्त्रिंशदाब्दिकमिति षट्त्रिंशदब्दशब्दात्कालाट्ठञ् अस्मिंश्च पक्षे समं स्यादश्रुतत्वादिति न्यायेन प्रतिवेदशाखं द्वादशवर्षाणि व्रताचरणम्। तदर्द्धिकमष्टादश वर्षाणि तत्र प्रतिवेदशाखं षट्। पादिकं नव वर्षाणि तत्र प्रतिवेदशाखं त्रीणि। यावता कालेनोक्तावधेरूर्द्धमधीवा वेदान् गृह्णाति तावत्कालं वा व्रताचरणं विषमशिष्टत्वेपि पक्षाणामेका देया तिस्रो देयाः षड्देया इतिवत् नियमफले न्यूनापेक्षा

विकल्पः। तथाच श्रुतिः। नियमेनाधीतम्वीर्य्यवत्तरम्भवतीति ग्रहणान्निकपचमन्दर्शनात्पूर्व्वोक्तपचत्रये ग्रहणादूर्द्धमपि व्रतानुष्ठानमवगम्यते। अथर्व्ववेदस्य ऋग्वेदांशत्वेपि ऋग्वेदं यजुर्वेदं सामवेदमथर्वाणञ्चतुर्थमिति छान्दोग्योपनिषदि चतुर्थवेदत्वेन कीर्त्तनात् अङ्गानि वेदाश्चत्वार इति विष्णु पुराणादिवाक्येषुच पृथङ्निर्देशाच्चतुर्थवेदत्वेपि प्रायेणाभिचाराद्यर्थत्वात् यज्ञविद्यायामनुपयोगात्तन्निर्देशः। तथाहि ऋग्वेदेनैव होत्रं कुर्वन् यजुर्वेदेनाध्वर्य्यवं सामवेदेनोद्गात्रं यदेव त्रय्यै विद्यायै शुक्रन्तेन ब्रह्मत्वमिति श्रुतेस्त्रयीशब्दाद्यत्वं यज्ञानां ज्ञायते अयञ्च मानवः त्रैवेदिकव्रतचर्य्याविधिर्नाथर्व्ववेदव्रतचर्य्यां निषेधयति तत्परत्वे वाक्यभेदप्रसङ्गात्। स्मृत्यन्तरं वेदमात्रे व्रतश्रवणाच्च। यदाह योगियाज्ञवल्क्यः। प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्चवा ॥ १॥

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममावसेत् ॥ २॥

वेदानधीत्येति। वेदशब्दोयभिन्नवेदशाखापरः। स्वशाखाध्ययनपूर्व्वकवेदशाखात्रयं द्वयमेकां वा शाखां मन्त्रब्राह्मण क्रमेणाधीत्य गृहस्थाश्रमं गृहस्थविहितकर्म्मकलापरूपमनुतिष्ठेत्। कृतदारपरिग्रहो गृहस्थः गृहशब्दस्य दारवचन

त्वात्। अविप्लुतब्रह्मचर्य्यइति पूर्व्वविहितस्त्रीसंयोगमधुमांसभक्षणवर्जनरूपब्रह्मचर्य्यानुवादोयमक्लिष्टाध्ययनाङ्गत्वस्यापनार्थः पुरुषशक्त्यपेक्षश्चायमेकद्वित्रिशाखाध्ययनविकल्पः यद्यपि व्रतान्ते वेदाध्ययनस्य नित्यवदुपदिश्यता मनुनोभयस्नातकएव श्रेष्ठत्वादभिहितस्तथापि स्मृत्यन्तरादन्यस्नातकोपि बोद्धव्यः। तदाह हारीतः। त्रयः स्नातकाभवन्ति विद्यास्नातकोव्रतस्नातकोविद्याव्रतस्नातकश्चेति। यः समाप्य वेदमसमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः। यः समाप्य व्रतानि असमाप्य वेदं समावर्त्तते स व्रतस्नातकः उभयं समाप्य समावर्त्तते यः स विद्याव्रतस्नातकः। याज्ञवल्क्योप्याह। वेदं व्रतानि वा पारन्नीत्वा ह्युभयमेव वेति ॥ २ ॥

तम्प्रतीतं स्वधर्म्मेण ब्रह्मदायहरम्पितुः। स्रग्विणन्तल्पआसीनमर्हयेत्प्रथमङ्गवा ॥ ३

तमिति। तं ब्रह्मचारिधर्म्मानुष्ठानेन ख्यातं दीयतइति दायः ब्रह्मैव दायोब्रह्मदायः तं हरतीति ब्रह्मदायहरम्पितुः पितृतोगृहीतवेदमित्यर्थः पितृतोऽध्ययनं मुख्यमुक्तम्पितुरभावे आचार्यादेरप्यधीतवेदं मालयालंकृतं उत्कृष्टशयनोपविष्टं गोसाधनमधुपर्केण पिता आचार्य्योवा विवाहात्प्रथमं पूजयेत् ॥ ३ ॥

गुरुणानुमतः स्नात्वा समावृत्तोयथाविधि।
उद्वहेत द्विजोभार्य्यां सवर्णां लक्षणान्विताम् ॥ ४ ॥

गुरुणेति। गुरुणा दत्तानुज्ञः स्वगृह्योक्तविधिना कृतस्नान समावर्त्तनः समानवर्णां शुभलक्षणां कन्यां विवहेत् ॥ ४ ॥

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने ॥ ५ ॥

असपिण्डा चेति। मातुर्या सपिण्डा न भवति सप्तमपुरुष पर्य्यन्तं सपिण्डतां वक्ष्यति सपिण्डता तु पुरुषे सप्तमे विनिव र्त्ततइति। तेन मातामहादिवंशजा या न भवतीत्यर्थः। च शब्दान्मातृसगोत्रापि मातृवंशपरम्पराजन्मनाम्नोः प्रत्यभि ज्ञाने सति न विवाह्या तदितरा तु मातृसगोत्रापि विवाह्येति संगृहीतम्। तथाच व्यासः। सगोत्रां मातुरप्येके नेच्छन्त्यु द्वाहकर्म्मणि। जन्मनाम्नोरविज्ञाने उद्वहेदविशङ्कितः। यत्तु मेधातिथिना वशिष्ठनाम्ना मातृसगोत्रा निषेधवचनं लिखि तम्। परिणीय सगोत्रान्तु समानप्रवरान्तथा। तस्यां कृत्वा समुत्सर्गं द्विजश्चान्द्रायणञ्चरेत्। मातुलस्य सुताञ्चैव मातृ गोत्रान्तथैव चेति। तदपि मातृवंशजन्मनामपरिज्ञानविषये

मेव। असगोत्रा च या पितुरिति पितुर्या सगोत्रा न भवति। चकारात् पितृसपिण्डापि पितृष्वस्रादिसन्ततिभवा या न भवतीत्यर्थः। सा द्विजातीनान्दारत्वसम्पादके विवाहे प्रशस्ता मिथुनधर्म्मे अग्न्याधानकर्म्मपुत्रोत्पादनादौ चेति ॥ ५ ॥

महान्त्यपि समृद्धानि गोजाविधनधान्यतः।
स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्जयेत् ॥ ६ ॥

महान्त्यपीति। उत्कृष्टान्यपि गवादिभिः समृद्धान्यपि इमानि दश कुलानि विवाहे त्यजेत् ॥ ६ ॥

हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥ ७ ॥

तानि कानीत्याह। हीनक्रियमिति। जातकर्मादिक्रियारहितं स्त्रीजनकं वेदाध्ययनशून्यम् बहुदीर्घरोमान्वितं अर्शोनामव्याधियुक्तम् क्षयोराजयक्ष्मा मन्दानलापस्मार श्वित्रकुष्ठयुक्तानाञ्च कुलानि वर्जयेदिति पूर्व्वक्रियासम्बन्धः। दृष्टमूलता चास्य प्रतिषेधस्य मातुलवदुत्पन्ना अनुवहन्ते। तेन हीनक्रियादिकुलात्परिणीतायां सन्ततिरपि तादृशी

स्यात्। व्याधयः सञ्चारिण इति वैद्यकाः पठन्ति। सर्व्वसंक्रामिणो रोगानवर्जयित्वा प्रवाहिका इति। अवेदमूला कथमियं प्रमाणमिति चेन्न दृष्टार्थतयैव प्रामाण्यसम्भवात्। तदुक्तं भविष्यपुराणे। सर्व्वा एतावेदमूला दृष्टार्था: परिहृत्य तु। मीमांसाभाष्यकारेणापि स्मृत्यधिकरणेऽभिहितम् ये दृष्टार्थास्ते तत्प्रमाणं येत्वदृष्टार्थास्तेषु वैदिकशब्दानुमानमिति ॥ ७ ॥

नोद्वहेत्कपिलाङ्कन्यां नाधिकाङ्गीं न रोगिणीम्।
नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम्॥८॥

कुलाश्रयप्रतिषेधमभिधाय कन्यास्वरूपाश्रय प्रतिषेधमाह। नोद्वहेदिति। कपिलकेशां षडङ्गुल्यादिकां नित्यव्याधितां अविद्यमानलोमां प्रचुरलोमां बहुपरुषभाषिणीं पिङ्गलाक्षीं कन्यां नोपयच्छेत्॥ ८ ॥

नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्व्वतनामिकाम्।
न पक्ष्यहिप्रेष्यनाम्नीं नच भीषणनामिकाम्॥ ९ ॥

नेति। ऋक्षं नक्षत्रं तन्नामिकां आर्द्रारेवतीत्यादिकां एवं तरुनदीम्लेच्छपर्व्वतपक्षिसर्पदासभयानकनामिकां कन्यां नोद्वहेत्॥ ९ ॥

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम्॥ १०॥

अव्यङ्गाङ्गीमिति। अविकलाङ्गीं मधुरसुखोद्यनाम्नीं हंसगजरुचिरगमनां अनतिस्थूललोमकेशदशनां कोमलाङ्गीं कन्यामुद्वहेत्॥ १०॥

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया॥ ११॥

अत्र विधिनिषेधयोरभिधानमनिषिद्धविहितकन्यापरिणयनमभ्युदयार्थमिति दर्शयितुमाह। यस्या इति। यस्याः पुनर्भ्राता नास्ति तां पुत्रिकाशङ्कया नोद्वहेत्। यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरमित्यभिसन्धानमात्रादपि पुत्रिका भवति। अभिसन्धिमात्रात्पुत्रिकेत्येक इति गौतमस्मरणात्। यस्याश्च विशेषेण पिता न ज्ञायते अनेनेयमुत्पन्नेति तामपि नोद्वहेत्। अत्र च पुत्रिकाधर्मशङ्कयेति न योजनीयमिति केचित्। गोविन्दराजस्त्वाह भिन्नपितृकयोरप्येकमातृकयोर्भ्रातृत्वप्रसिद्धेः सद्भ्रातृकत्वेऽपि यस्या विशेषेण पिता न ज्ञायते तामपि पुत्रिकाशङ्कयैव नोद्वहेदिति। मेधातिथिस्त्वेकमेव इममर्थमाह। यस्यास्तु भ्राता नास्ति तां पुत्रिकाशङ्कया नोपयच्छेत् पिता चेन्न ज्ञायते प्रोषितो मृतो वा वाशब्दश्चेदर्थे पितरि तु विद्यमाने तदीयवाक्यादेव पुत्रिकात्वाभावमवगम्य

भ्रातृकापि वोढव्येति। अस्माकन्तु विकल्पस्वरसादिदम्प्रति भाति। यस्याविशेषेण पिता न ज्ञायते तामपि जारजत्वेनाधर्म्म शङ्कया नोद्वहेत्। अत्र च पक्षे पुत्रिकाधर्म्मशङ्कयेति पुत्रिकाधा धर्म्मस्य तयोः शङ्का पुत्रिकाधर्म्मशङ्का तयेति यथासङ्ख्यं योजनीयं अत्र च प्रकरणे सगोत्रादिपरिणयने सगोत्रां सुदमत्योपयच्छेत् मातृवदेनां विभृयादिति परित्यागश्रवणात्। परिणीय सगोत्राञ्चेति प्रायश्चित्तश्रवणाच्च तत्र तत्समभिव्याहृते च मातृसपिण्डापरिणयनादौ भार्य्यात्वमेव न भवति। भार्य्या शब्दस्याहवनीयादिवत्संस्कारवचनत्वात् येषाम्पुनर्दृष्टगुणदोष मूलके विधिनिषेधाभिधाने यथाहीनक्रियमिति न तदतिक्रमे भार्य्यात्वाभावः। अतएव मनुना महान्त्यपि समृद्धानीत्यादि पृथक्करणं कृतं एतन्मध्यपतितस्य नर्च्चवचनदीनामीमित्यादि प्रतिषेधोपि न भार्य्यात्वाभावफलकः किन्त्वत्र शास्त्राति क्रमात्प्रायश्चित्तमात्रम्॥ ११॥

सवर्णाग्रे द्विजातीनाम्प्रशस्ता दारकर्म्मणि।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोवराः॥ १२॥

सवर्णाग्रइति। ब्राह्मणक्षत्रियवैश्यानाम्प्रथमे विवाहे कर्त्तव्ये सवर्णा श्रेष्ठा भवति कामतः पुनर्विवाहे प्रवृत्तानामेता वक्ष्य माणा आनुलोम्येन श्रेष्ठाभवेयुः॥ १२॥

शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥ १३ ॥

शूद्रैवेति। शूद्रस्य शूद्रैव भार्य्या भवति नत्वत्कृष्ट वैश्यादयस्तिस्रः वैश्यस्य च शूद्रा वैश्या च भार्य्ये मन्वादिभिः स्मृते चत्रियस्य वैश्याशूद्रे चत्रिया च। ब्राह्मणस्य चत्रिया वैश्या शूद्रा ब्राह्मणी च। वशिष्ठोपि शूद्रामप्येके मन्त्रवर्ज मिति द्विजातीनां मन्त्रवर्जितं शूद्राविवाहमाह ॥ १३ ॥

न ब्राह्मणचत्रिययोरापद्यपि हि तिष्ठतोः।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्य्योपदिश्यते ॥ १४ ॥

न ब्राह्मणेति। ब्राह्मणचत्रिययोर्गार्हस्थ्यमिच्छतोः सर्व्वथा सवर्णालाभे कस्मिंश्चिदपि वृत्तान्ते इतिहासाख्यानेपि शूद्रा भार्य्या नाभिधीयते। पूर्व्वं सवर्णानुक्रमेणानुलोम्येन विवाहा भ्यनुज्ञानात् अयं निषेधः प्रातिलोम्येन विवाहविषयो बोद्धव्यः ब्राह्मणचत्रियग्रहणञ्चेदन्दोषभूयस्त्वार्थं अनन्तरं द्विजातयइति बहुवचनात् वैश्यगोचरनिषेधस्यापि वच्य माणत्वात ॥ १४ ॥

हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः। कुला न्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥ १५ ॥

हीनजातिस्त्रियमिति। सवर्णामपरिणीय हीनजातिं शूद्रां शास्त्राविवेकात्परिणयन्तो ब्राह्मणक्षत्रियवैश्यास्तचोत्पन्न पुत्रपौत्रादिक्रमेण कुलान्येव ससन्ततिकानि शूद्रतां गमयन्ति। अत्र द्विजातय इति बहुवचननिर्देशात् निन्दया वैश्यस्यापि निषेधः कल्प्यते। ब्राह्मणक्षत्रिययोस्तु पूर्व्वमेव निषेधकल्पना न्निन्दासाचार्य्येव ॥ १५ ॥

शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च। शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥ १६ ॥

शूद्रावेदीति। शूद्रां विन्दति परिणयतीति शूद्रावेदी स पतति पतित इव भवति इदमत्रेर्मतं उतथ्यतनयस्य गौतमस्य च। अत्यादिग्रहणं आदरार्थं एतद्ब्राह्मणविषयं शूद्रायां सुतो त्पत्त्या पततीति शौनकस्य मतमेतत् क्षत्रियविषयं शूद्रासुत तत्सुतोत्पत्त्या पततीति भृगोर्मतं एतद्वैश्यविषयं एतस्य महर्षिमतत्रयस्य व्यवस्था सम्भवे विकल्पात्पतनविकल्पायोगात्। मेधातिथिगोविन्दराजयोस्तु मतं शूद्रावेदी पततीति पूर्व्वोक्त

शूद्राविवाहनिषेधशेषः। सुतोत्पत्त्या पततीति दैवाज्जात शूद्राविवाहे ऋतौ नोपेयादिति विधानार्थं ऋतुकालगमने सुतोत्पत्तेः। तदपत्यतयेति तु तान्येव शूद्रोत्पन्नान्यपत्यानि यस्य स तदपत्यस्तस्य भावस्तदपत्यता तया पतति एतेनेद मुक्तं ऋतावुपयन्नितरास्तु जातापत्य उपेयात्॥ १६॥

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्।
जनयित्वा सुतन्तस्याम्ब्राह्मण्यादेव हीयते॥ १७॥

शूद्रामिति। सवर्णामपरिणीय दैवात् स्नेहाद्वा शूद्रा परिणेतुर्ब्राह्मणस्य गमननिषेधार्थं निन्दया निषेधस्मृत्यनुमानात् शूद्रां गत्वा ब्राह्मणो नरकं गच्छति जनयित्वा सुतन्तस्यामिति ऋतुकालगमननिषेधपरम्ब्राह्मण्यादेव हीयत इति दोषभूयस्त्वार्थं॥ १७॥

दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु।
नाश्नन्ति पितृदेवास्तन्नच स्वर्गं स गच्छति॥ १८॥

दैवेति। यदि कथञ्चित्सवर्णानुक्रमेणाक्रमेण वा शूद्रापि परिणीयते तदा भार्य्यालेन प्रसक्तानि तत्कर्त्तृकानि दैवादीनि दैवेत्यनेन निषिध्यन्ते दैवं होमादि पित्र्यं श्राद्धादि आतिथेयं

अतिथिभोजनादि। एतानि यस्य शूद्रासम्पाद्यानि तद्धव्यं कव्यं पितृदेवानाश्नन्ति नच तेनातिथ्येन स गृही स्वर्गं याति। यस्तु तत्कारयेन्मोहात्सजात्याश्रितयान्ययेति सवर्णायां सन्निहितायां निषेधं वक्ष्यति। अयन्त्वसन्निहितायामपीत्यपुनरुक्तिः ॥१८॥

वृषलीफेनपीतस्य निःश्वासोपहतस्य च। तस्याञ्चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥१९॥

वृषलीति। वृषलीफेनोऽधररसः स पीतो येन सवृषलीफेनपीतः। वाहिताग्न्यादिष्वित्यनेन परनिपातः। अनेन शूद्रायाअधररसपानं निषिध्यते। निःश्वासोपहतस्य चेति तया सहैकशय्यादौ शयननिषेधः। तस्यां जातापत्यस्य शुद्धिर्नोपदिश्यतइति ऋतुकालगमननिषेधानुवादः॥ १९ ॥

चतुर्णामपि वर्णानाम्प्रेत्य चेह हिताहितान्। अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत ॥२०॥

चतुर्णामिति। चतुर्णामपि वर्णानाम्ब्राह्मणादीनाम्परलोके इह लोके च कांश्चित् हितान् कांश्चिदहितान् इमानभिधास्यमानानष्टौ संक्षेपेण भार्य्याप्राप्तिहेतून् विवाहान् शृणुत ॥ २० ॥

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥ २१ ॥

ब्राह्म इति तएते नामतो निर्दिश्यन्ते। ब्राह्मराक्षसादि संज्ञा चेयं शास्त्रसंव्यवहारार्था स्तुतिनिन्दाप्रदर्शनार्था च। ब्रह्मण इवायं ब्राह्मः रक्षस इवायं राक्षसः। न तु ब्रह्मादिदेवतात्वं विवाहानां सम्भवति। पैशाचस्याधमत्वाभिधानं निन्दातिशयार्थम् ॥ २१ ॥

यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ।
तद्वः सर्व्वं प्रवक्ष्यामि प्रसवे च गुणागुणान् ॥ २२ ॥

य इति। धर्मादनपेतो धर्म्यः यो विवाहो यस्य वर्णस्य धर्म्यो यस्य विवाहस्य यौ गुणदोषौ दृष्टादृष्टफलौ तत्तद्विवाहोत्पन्नापत्येषु ये गुणागुणास्तान् सर्वान् युष्माकं प्रकर्षेणाभिधास्यामि। वक्ष्यमाणानुकीर्त्तनमिदं शिष्याणां सुखग्रहणार्थम् ॥ २२ ॥

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान्। विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥ २३ ॥

षडिति। ब्राह्मणस्य ब्राह्मादिक्रमेण षट्। क्षत्रियस्याद्यानुपरितनानासुरादींश्चतुरः विट्शूद्रयोस्तु तानेव

राक्षसवर्जितानासुरगान्धर्वपैशाचान् धर्मादनपेतान् जानीयात् ॥ २३ ॥

चतुरोब्राह्मणस्याद्यान् प्रशस्तान् कवयोविदुः।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥ २४ ॥

चतुरइति। ब्राह्मणस्य प्रथमपठितान् ब्राह्मादींश्चतुरः क्षत्रियस्य राक्षसमेकमेव वैश्यशूद्रयोरासुरमेतान् श्रेष्ठान् ज्ञातारोजानन्ति। अतएव ब्राह्मणादिष्वासुरादीनाम्पूर्व्वविहितानामत्रानुपादानञ्जघन्यत्वज्ञापनार्थं तेन प्रशस्तविवाहासम्भवे जघन्यस्यापि परिग्रहइति दर्शितम्। एवमुत्तरत्रापि विगर्हितपरित्यागोबोद्धव्यः ॥ २४ ॥

पञ्चानान्तु त्रयोधर्म्या द्वावधर्म्म्यौ स्मृताविह।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ॥ २५ ॥

पञ्चानामिति। इह पैशाचप्रतिषेधादुपरितनानां पञ्चानामार्षप्राजापत्यादीनां ग्रहणम्। तेषु मध्ये प्राजापत्यगान्धर्व्वराक्षसास्त्रयोधर्म्मादनपेतास्तत्र प्राजापत्यः क्षत्रियादीनामप्राप्तोविधीयते ब्राह्मणस्य विहितत्वादनूद्यते। गान्धर्व्वश्च चतुर्णामेव प्राप्तत्वादनुवादः। राक्षसोपि वैश्यशूद्रयोर्विधीयते

ब्राह्मणस्य क्षत्रियवृत्त्यवस्थितस्यापि आसुरपैशाचौ न कर्त्तव्यौ कदाचनेत्यविशेषाच्चतुर्णामेव निषिध्यते। अत्र यं वर्णं प्रति यस्य विवाहस्य विधिनिषेधौ तस्य तत्प्रति विकल्पः स च विहितासम्भवे बोद्धव्यः ॥ २५ ॥

पृथक्पृथग्वा मिश्रौ वा विवाहौ पूर्व्वचोदितौ।
गान्धर्वोराक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ॥ २६ ॥

पृथगिति। पृथक्पृथगिति प्राप्तत्वादनूद्यते। मिश्रा विति विधीयते। पृथक्पृथक् मिश्रौ वा पूर्व्वविहितौ गान्धर्व्व राक्षसौ क्षत्रस्य धर्म्यौ मन्वादिभिः स्मृतौ। यदा स्त्रीपुंसयोर न्योन्यानुरागपूर्व्वकसम्वादेन परिणीता युद्धादिना विजित्य तामुद्वहेत्तदा गान्धर्व्वराक्षसौ मिश्रौ भवतः ॥ २६ ॥

आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयम्।
आहूय दानं कन्याया ब्राह्मोधर्म्मः प्रकीर्त्तितः॥ २७॥

आच्छाद्येति। आच्छादनमात्रस्यैव औचित्यप्राप्तत्वात्स विशेषवाससा कन्यावरावाच्छाद्यालङ्कारादिना च पूजयित्वा विद्याचारवन्तमप्रार्थकवरमानीय तस्मै कन्यादानम्ब्राह्मो विवाहोमन्वादिभिरुक्तः ॥ २७ ॥

यज्ञे तु वितते सम्यगृत्विजे कर्म्म कुर्व्वते। अलं
कृत्य सुतादानन्दैवन्धर्म्मम्प्रचक्षते ॥ २८ ॥

यज्ञइति। ज्योतिष्टोमादियज्ञे प्रारब्धे यथाविधि ऋत्विजे कर्म्मकर्त्रे अलंकृत्य कन्यादानं दैवं विवाहं मुनयो ब्रुवते ॥ २८ ॥

एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः।
कन्याप्रदानं विधिवदार्षोधर्म्मः सउच्यते ॥ २९ ॥

एकमिति। स्त्रीगवी पुङ्गवश्च गोमिथुनं तदेकं द्वे वा वरात् धर्म्मतः धर्म्मार्थं यागादिसिद्धये कन्यायै वा दातुं नतु शुल्कबुद्ध्या गृहीत्वा यद्यथाशास्त्रं कन्यादानं स आर्षोविवाहो विधीयते ॥ २९ ॥

सहोभौ चरतां धर्म्ममिति वाचानुभाष्य च।
कन्याप्रदानमभ्यर्च्य प्राजापत्योविधिः स्मृतः ॥ ३० ॥

सहेति। सह युवां धर्म्मं कुरुतमिति सुताप्रदानकाले वचसा पूर्व्वं नियम्यार्च्चयित्वा यत्कन्यादानं स प्राजापत्योविवाहः स्मृतः ॥ ३० ॥

ज्ञातिभ्योद्रविणन्दत्वा कन्यायै चैव शक्तितः।
कन्याप्रदानं स्वाच्छन्द्यादासुरोधर्म उच्यते॥ ३१॥

ज्ञातिभ्य इति। कन्याया ज्ञातिभ्यः पित्रादिभ्यः कन्यायै वा यत् यथाशक्ति धनन्दत्वा कन्यायाश्चप्रदानमादानं स्वीकारः स्वाच्छन्द्यात्स्वेच्छया नत्वार्षइव शास्त्रीयधनजातिपरिमाणनियमेन सआसुरोविवाहउच्यते॥ ३१॥

इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्व्वः स तु विज्ञेयोमैथुन्यः कामसम्भवः॥ ३२॥

इच्छयेति। कन्याया वरस्य चान्योन्यानुरागेण यः परस्परसंयोगआलिंगनादिरूपः स गान्धर्व्वो ज्ञातव्यः। सम्भवत्यस्मादिति सम्भवः। यस्मात्कन्यावरयोरभिलाषादसौ सम्भवति अतएव मैथुन्योमैथुनाय हितः। सर्व्वविवाहानामेव मैथुन्यत्वे यदस्य मैथुन्यत्वाभिधानं तत्सत्यपि मैथुने न विरोध इति प्रदर्शनार्थम्॥ ३२॥

हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्। प्रसह्य कन्याहरणं राक्षसोविधिरुच्यते॥३३॥

हत्वेति। प्रसह्य बलात्कारेण कन्याया हरणं राक्षसो विवाहइत्येव लक्षणम्। यदा तु हर्त्तुः शक्त्यातिशयं ज्ञात्वा

पित्रादिभिरुपेक्षते तदा नावश्यकं हननादि। यदि कन्या पक्षः प्रतिपक्षतां याति तदा हननादिकमपि कर्त्तव्यमित्यर्थ प्राप्तमनूद्यते। कन्यापक्षान्विनाश्य तेषामङ्गच्छेदं कृत्वा प्राकारादीन्भित्त्वा हा पितर्हा भ्रातरनाथाहं ह्रिये इति वदन्तीं अश्रूणि मुञ्चन्तीं यत्कन्यां गृहादपहरति अनेन कन्याया अनिच्छोक्ता गान्धर्वादिविवेकार्थम् ॥ ३३ ॥

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति।
स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः ॥ ३४ ॥

सुप्तामिति। निद्राभिभूतां मद्यमदविह्वलां शीलसंरक्षणेन रहितां विजनदेशे यत्र विवाहे मैथुनधर्मेण प्रवर्त्तते। स पापहेतुर्विवाहानां मध्येऽधमः पैशाचः स्यात् ॥ ३४ ॥

अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते।
इतरेषान्तु वर्णानामितरेतरकाम्यया ॥ ३५ ॥

अद्भिरिति। उदकदानपूर्व्वकमेव ब्राह्मणानाङ्कन्यादानं प्रशस्तं क्षत्रियादीनाम्पुनर्विनाप्युदकं परस्परेच्छया वाङ्मात्रेणापि कन्यादानम्भवति उदकपूर्व्वकमपीत्यनियमः ॥ ३५ ॥

योयस्यैषां विवाहानां मनुना कीर्त्तितोगुणः।
सर्व्वं शृणुत तं विप्राः सम्यक् कीर्त्तयतोमम॥ ३६॥

य इति। यद्यपि गुणदोषौ च पुत्र्य यावितिगुणाभिधान मपि प्रतिज्ञातमेव तथापि बहूनामर्थानां तत्र वक्तव्यतया प्रतिज्ञातत्वात् विशेषज्ञापनार्थः पुनरुपन्यासः। एषां विवाहा नामिति निर्द्धारणे षष्ठी एषां मध्ये यस्य विवाहस्य योगुणो मनुना कथितः तत्सर्व्वं हे विप्राः मम कथयतः शृणुत॥ ३६॥

दश पूर्व्वान् परान् वंश्यानात्मानञ्चैकविंशकम्।
ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसः पितॄन्॥ ३७॥

दशेति। दश पूर्व्वान् पित्रादीन् वंश्यान् परान् पुत्रादीन् दश आत्मानञ्चैकविंशकम्ब्राह्मविवाहोढापुत्रोयदि सुकृत कृद्भवति तदा पापान्मोचयति पित्रादीन्नरकादुद्धरति पुत्रादयश्च तस्य कुले निष्पापाजायन्त इति मोचनार्थः तेषा मनुत्पत्तेः पापध्वंसस्याशक्यत्वात्॥ ३७॥

दैवोढाजः सुतश्चैव सप्त सप्त परावरान्। आर्षो ढाजः सुतस्त्रींस्त्रीन् षट्षट्कायोढजः सुतः॥ ३८॥

दैवोढेति। दैवविवाहोढायाः पुत्रः सप्त परान् पित्रादीन् सप्त अवरान् पुत्रादींश्च। आर्षविवाहोढायाः पुत्रः त्रीन्

पित्रादीन् त्रींश्च पुत्रादीन्। प्राजापत्यविवाहोढायाः पुत्रः षट् पित्रादीन् षट् पुत्रादीन् आत्मानञ्चैनसो मोचयतीति पूर्व्वस्यैव सर्व्वत्रानुषङ्गः। कायोढजइति आर्षः संज्ञाछन्दः सार्थ्वकुलमिति च्छस्वत्नम्। ब्राह्माद्यष्टविवाहोद्देशक्रमानुसारेण मन्दफलस्यार्षस्येह बहुफलप्राजापत्यात्पूर्व्वाभिधानं। ब्राह्मादिविवाहोद्देशश्लोकएव कथमयं क्रमइति चेत् पश्चान्नान्तु त्रयोधर्म्याइत्यत्र प्राजापत्यग्रहणार्थम् अन्यथा आर्षस्यैव ग्रहणं स्यात्॥ ३८ ॥

ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्व्वशः।
ब्रह्मवर्चस्विनः पुत्राजायन्ते शिष्टसंमताः॥ ३९ ॥

ब्राह्मेति। प्रसवे च गुणागुणानिति यदुक्तं तदुच्यते। ब्राह्मादिषु चतुर्षु विवाहेषु क्रमावस्थितेषु श्रुताध्ययनसम्पत्तिकृतेजोयुक्ताःपुत्राः शिष्टप्रियाजायन्ते प्रियार्थत्वाच्च संमतशब्दस्य क्तेनच पूजायामिति न षष्ठीसमासप्रतिषेधः। सम्बन्धसामान्यविषया षष्ठीयं समस्यते॥ ३९ ॥

रूपसत्त्वगुणोपेता धनवन्तोयशस्विनः। पर्य्याप्तभोगाधर्म्मिष्ठा जीवन्ति च शतं समाः॥ ४० ॥

रूपेति। रूपं मनोहराकृतिः। सत्त्वं द्वादशाध्याये वक्ष्यमाणं गुणा दयादयः। तैर्युक्ताधनिनः ख्यातिमन्तोयथेप्सित

वस्त्रस्रग्गन्धलेपनादिभोगशालिनो धार्म्मिकाश्च पुत्रा जायन्त इति पूर्व्वमनुवर्त्तते अतश्च वर्षाणि जीवन्ति ॥ ४० ॥

इतरेषु तु शिष्टेषु नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्मधर्म्मद्विषः सुताः ॥ ४१ ॥

इतरेष्विति। ब्राह्मादिभ्यश्चतुर्भ्यो अन्येष्वासुरादिषु चतुर्षु विवाहेषु क्रूरकर्म्माणोमृषावादिनोवेदद्वेषिणोयागादिधर्म्मद्वेषिणः पुत्राजायन्ते ॥ ४१ ॥

अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा। निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ॥ ४२ ॥

अनिन्दितैरिति। सङ्क्षेपेण विवाहानाम्फलकथनमिदम्। अगर्हितैर्भार्य्याप्राप्तिहेतुभिर्व्विवाहैरगर्हिता मनुष्याणां सन्ततिर्भवति गर्हितैस्तु गर्हिता तस्माद्गर्हितविवाहान्न कुर्य्यात् ॥ ४२ ॥

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते। असवर्णास्वयं ज्ञेयोविधिरुद्वाहकर्म्मणि ॥ ४३ ॥

पाणीति। समानजातीयासु गृह्यमाणासु हस्तग्रहणलक्षणः संस्कारोगृह्यादिशास्त्रेण विधीयते विजातीयासु पुनरुद्वा

मानासु विवाहकर्म्मणि पाणिग्रहणस्थाने अयमनन्तरश्लोके वक्ष्यमाणो विधिर्ज्ञेयः ॥ ४३ ॥

शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥ ४४ ॥

शर इति। क्षत्रियया पाणिग्रहणस्थाने ब्राह्मणविवाहे ब्राह्मणहस्तपरिगृहीतकाण्डैकदेशो ग्राह्यः। एवं वैश्यया ब्राह्मणक्षत्रियविवाहे ब्राह्मणक्षत्रियविधृतप्रतोदैकदेशो ग्राह्यः। शूद्रया। पुनर्द्विजातित्रयविवाहे प्रावृतवसनदशा ग्राह्या ॥ ४४ ॥

ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा।
पर्व्ववर्ज्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥ ४५ ॥

ऋत्विति। ऋतुर्नाम शोणितदर्शनोपलक्षितो गर्भधारणयोग्यः स्त्रीणामवस्थाविशेषः। तत्कालाभिगामी स्यादित्ययं नियमविधिः। न तु परिसंख्या। स्वार्थहानिपरार्थकल्पनाप्राप्तबाधात्मकदोषत्रयदुष्टत्वात्। ऋतुकालेपि रागतः पक्षे गमनप्राप्तौ यस्मिन् पक्षेऽप्राप्तिस्तत्र विधिः समे यजेतेतिवत्। अत एव ऋतावगमने दोषमाह। पराशरः। ऋतुस्नातान्तु

घोरायां सन्निधौ नोपगच्छति। घोरायांभ्रूणहत्यायां पतते नात्र संशयः। अनुत्पन्नपुत्रस्य चायं नियमः। ब्राह्मणो ह वै जायमानस्त्रिभिर्ऋणैर्ऋणवान् जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेन ऋषिभ्यइत्येतत्प्रत्यक्षश्रुतिमूलत्वेऽस्य सम्भवति मूलान्तरकल्पनस्यायुक्तत्वात्। तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियमिति च वक्ष्यति। ततोऽप्येतच्छ्रुति मूलमवगम्यते। पुत्रोत्पादनशास्त्रस्य चैकपुत्रोत्पादनेनैव चरितार्थत्वात् कामजानितरान्विदुरिति दर्शनादजातपुत्रस्यैव नियमः। दशास्यांपुत्रानाधेहीति मन्त्रस्तु बहुपुत्रप्रशंसापरः। जातपुत्रस्यापि ऋतुकालगमननियमेन दशस्वेव वर्तितव्यं स्वदारनिरतः सदेति नित्यं स्वदारसन्तुष्टः स्यात् नान्यभार्य्यामुपगच्छेदिति विधानात्परिसंख्यैव वाक्यार्थः स्यात् स्वदारगमनस्य प्राप्तत्वात् ऋताविवागमने दोषाश्रवणाच्च न नियमविधिः। पर्व्ववर्ज्जं व्रजेच्चैनामिति। पर्व्वाण्यमावास्यादीनि वक्ष्यन्ते। तानि वर्ज्जयित्वा भार्य्याप्रीतिव्रतं यस्य सतद्व्रतोऽनृतावप्युपेयात् अतएव रतिकाम्यया न तु पुत्रोत्पादनशास्त्रबुद्ध्या तस्माद्विधिद्वयमिदं। ऋतावुपेयादेव। अन्यभार्य्यां नोपगच्छेत्। अनृतावपि भार्य्याप्रीतये गच्छेदिति। अतएव गौतमः। ऋतावुपेयादनृतौ च पर्व्ववर्ज्जं। याज्ञवल्क्योप्याह। यथा कामी भवेद्वापि स्त्रीणां वरमनुस्मरन्। पर्व्ववर्ज्जमिति ऋतावनृतौ चोभयत्र सम्बध्यते॥ ४५॥

ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः।
चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः ॥ ४६ ॥

ऋतुरिति। अत्र रात्र्यहःशब्दावहोरात्रपरौ। शोणितदर्शनात्प्रभृति स्त्रीसम्पर्कगमनादौ शिष्टनिन्दितैश्चतुर्भिरन्यैरहोरात्रैः सह षोडशाहोरात्रा मासि मासि स्त्रीणामृतुः स्वभावेभवः स्वाभाविकः व्याध्यादिना तु न्यूनाधिककालोपि भवति ॥ ४६ ॥

तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ॥ ४७ ॥

तासामिति। तासां पुनः षोडशानां रात्रीणां शोणितदर्शनात्प्रभृति आद्याश्चतस्रो रात्रयः एकादशी त्रयोदशी च रात्रिर्गमने निन्दिता अवशिष्टा दश रात्रयः प्रशस्ताभवेयुः ॥ ४७ ॥

युग्मासु पुत्राजायन्ते स्त्रियोऽयुग्मासु रात्रिषु।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियं ॥ ४८ ॥

युग्मेति। पूर्वोक्तास्वपि दशसु षष्ठ्यष्टम्याद्यासु रात्रिषु गमने पुत्रा उत्पद्यन्ते। अयुग्मासु पञ्चमीसप्तम्यादिषु दुहितरः। अतः पुत्रार्थी युग्मासु ऋतुकाले भार्य्याङ्गच्छेत् ॥ ४८ ॥

पुमान्पुंसोऽधिके शुक्रे स्त्रीभवत्यधिके स्त्रियाः।
समेऽपुमान्पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्ययः॥ ४९ ॥

पुमानिति। पुंसोवीजे अधिकेऽयुग्मास्वपि पुत्रोजायते स्त्रीवीजेऽधिके युग्मास्वपि दुहिता एव। अतोवृष्याहारादिना निजवीजाधिक्यं भार्य्यायास्त्वाहारलाघवादिना वीजाल्पत्व मवगम्यायुग्मास्वपि पुत्रार्थिना गन्तव्यमिति दर्शितम्। स्त्रीपुंसयोस्तु वीजसाम्येऽपुमान्नपुंसकं जायते पुंस्त्रियाविति यमौ वा। निःसारेऽल्पे चोभयोरेव वीजे गर्भस्यासम्भवः॥ ४९ ॥

निन्द्यास्वष्टासु चान्यासु स्त्रियोरात्रिषु वर्ज्जयन्।
ब्रह्मचार्य्येव भवति यत्र तत्राश्रमे वसन्॥ ५० ॥

निन्द्येति। निन्द्यासु पूर्व्वोक्तासु षट्सु रात्रिषु अन्यासु चानिन्द्यास्वपि यासु कासुचिदष्टासु स्त्रियोवर्ज्जयन् द्वे रात्री अवशिष्टे पर्व्ववर्ज्जिते व्रजन्नखण्डितब्रह्मचार्य्येव भवति यत्र तत्राश्रमे वसन्निति वानप्रस्थापेक्षया। तस्य हि भार्य्यया सह गमनपक्षे ऋतुगमनप्रसक्तम्। नच वनस्थभार्य्यायाऋतुर्न भवतीति वाच्यम्। वनम्पद्याश्रितोव्रजेदिति वर्षैरेकगुणाम्भार्य्यामुद्वहेत्त्रिगुणः पुमानित्यादिशास्त्रपर्य्यालोचनया तत्सम्भ

त्वात्। मेधातिथिस्तु यत्र तत्राश्रमे वसन्निति अनुवादमात्रं गृहस्थेतराश्रमचर्ये जितेन्द्रियत्वविधानात्। रात्रिद्वयाभ्यनुज्ञानासम्भवादित्याह। गोविन्दराजस्तु उत्पन्नविनष्टपुत्रस्याश्रमान्तरस्थस्यापीच्छया पुत्रार्थं रात्रिद्वयगमने दोषाभावप्रतिपादनार्थमेतत्। यत्र तत्राश्रमे वसन्निति वचनात्तु चार्थी सम्विशेदिति च प्रस्तुतत्वात्पुत्रस्य च महोपकारकत्वादित्याह। हन्त गोविन्दराजेन विशेषमविद्वत्ता। व्यक्तमञ्जी इतरस्तौ स्वदारसुरतं यतेः ॥ ५० ॥

न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि।
गृह्णञ्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥ ५१ ॥

नेति। कन्यायाः पिता धनग्रहणदोषज्ञः अल्पमपि धनं कन्यादाननिमित्तकं न गृह्णीयात्। यस्माल्लोभेन तद्गृह्णन् अपत्यविक्रयी भवति ॥ ५१ ॥

स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः।
नारीयानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् ॥ ५२ ॥

स्त्रीधनेति। कन्यादाननिमित्तकशुल्कग्रहणनिषेधप्रसङ्गात्। नवमाध्यायाभिधेयस्त्रीधनग्रहणनिषेधोऽयम्। ये बान्धवाः पति

अश्वादीनि वस्त्रश्चेति प्रदर्शनार्थं सर्व्वमेव धनं न ग्राह्यं ति गृह्णाना: पापकारिणोनरकङ्गच्छन्ति ॥ ५२ ॥

आर्षे गोमिथुनं शुल्कं केचिदाहुर्म्मृषैव तत्।
अल्पोप्येवं महान्वापि विक्रयस्तावदेव सः ॥ ५३ ॥

आर्षइति। आर्षे विवाहे गोमिथुनं शुल्कं वराङ्ग्राह्य मिति केचिदाचार्य्यावदन्ति तत्पुनरसत्यं यस्मादल्पमूल्य साध्यत्वादल्पोवा भवतु बहुमूल्यसाध्यत्वान्महान्वा भवतु स तावद्विक्रयोभवत्येव। यत्पुनरेकं गोमिथुनमिति पूर्व्वमुक्तं तत्परमतमिति गोविन्दराजः। तदयुक्तम्। मनुकृते लक्षण मार्षस्य न स्यादेव। वराद्गोमिथुनग्रहणपूर्व्वककन्यादानस्यैवार्ष विवाहलक्षणत्वात्। मन्वभिमतमन्यदेवार्षलक्षणमेकं गोमिथुन मिति परमतमिति चेत्। एकं गोमिथुनं द्वे चेत्येतत्परमतं यदि। तदा मनुमतेनार्षलक्षणङ्किन्नदुच्यताम्। अष्टौ विवा हान् कथयन्नार्षोढासन्ततेर्गुणान्। मनुः किं स्वमतेनार्षलक्षणं वक्तुमक्षमः। मेधातिथिस्तु पूर्व्वापरविरोधापन्यासनिरासा वेव न कृतवान्। तस्मादस्माभिरित्थं व्याख्यायते। आर्षे विवाहे गोमिथुनं शुल्कमुत्कोचरूपमिति केचिदाचार्य्या वदन्ति। मनोस्तु मतं नेदं शास्त्रनियमितजातिसङ्ख्याकं ग्रहणं

न शुल्करूपं शुल्कत्वे मूल्यात्यल्पत्वेऽनुपयोगिनी विक्रय एव तदा स्यात्। किन्त्वार्षविवाहसम्बन्धे अवश्यकर्त्तव्ययागादि सिद्धये कन्यायै वा दातुं शास्त्रीयं धर्मार्थमेव गृह्यते। अत एवा र्षलक्षणश्लोके वरादादाय धर्मतइति धर्मतोधर्मार्थमिति तत्त्वार्थः। भोगलोभेन तु धनग्रहणं शुल्करूपमशास्त्रीयं अत एव गृह्णन् शुल्कं हि लोभेनेति निन्दामुक्तवान्। तस्मा त्पौर्वापर्यपर्य्यालोचनादार्षे धर्मार्थं गोमिथुनं ग्राह्यं नतु भोगार्थमिति मनुना स्वमतमनुवर्णितम्॥ ५३॥

यासां नाददते शुल्कं ज्ञातयो न स विक्रयः।
अर्हणन्तत्कुमारीणामानृशंस्यञ्च केवलम्॥ ५४॥

आर्षे गोमिथुनं शुल्कमित्युक्तं इदानीं कन्यार्थमपि धनस्य दानं न शुल्कमित्याह। यासामिति। यासाङ्कन्यानाम्प्रीत्या वरेण दीयमानन्धनम्पित्रादयोन गृह्णन्ति किन्तु कन्यायै समर्पयन्ति सोऽपि न विक्रयः। यस्मात्कुमारीणाम्पूजनं तदा नृशंस्यमहिंसकत्वं केवलन्नादनकर्म्यारूपम्॥ ५४॥

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा। पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः॥ ५५॥

पितृभिरिति। न केवलं विवाहकाले वरेण इत्तन्धनं समर्पणीयं किन्तु तदुत्तरकालमपि पित्रादिभिरप्येताभोजनी

दिना पूजयितव्याः वस्त्रालंकारादिना भूषयितव्याश्च बहु धनादिसम्पदमाप्तुकामैः॥ ५५॥

यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते सर्व्वास्तत्राफलाः क्रियाः॥५६॥

यत्रेति। यत्र कुले पित्रादिभिः स्त्रियः पूज्यन्ते तत्र देवताः प्रसीदन्ति यत्र पुनरेता न पूज्यन्ते तत्र देवताप्रसादाभावात् यागादिक्रियाः सर्व्वा निष्फला भवन्तीति निन्दार्थवादः॥५६॥

शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम्।
न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्व्वदा॥५७॥

शोचन्तीति। जामिः स्वसृकुलस्त्रियोरित्याभिधानिकाः। यस्मिन् कुले भगिनी गृहपतिसम्बन्धिनीअसन्निहितसपिण्डस्त्रियश्च पत्नीदुहितृस्नुषाद्याः परितापादिना दुःखिन्यो भवन्ति तत्कुलं शीघ्र निर्द्धनीभवति दैवराजादिना च पीड्यते। यत्रैता न शोचन्ति तद्धनादिना नित्यं वृद्धिमेति। मेधातिथिगोविन्दराजौ तु। नवोढादुहितृस्नुषाद्या जामय इत्याहतुः॥५७॥

जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः॥ ५८॥

जामय इति। यानि गेहानि भगिनीपत्नीदुहितृस्नुषाद्या अपूजिताः सत्योऽभिशपन्ति इदमनिष्टमेषामस्त्विति तान्य भिचारहतानीव धनपश्वादिसहिता विनश्यन्ति॥ ५८॥

तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च॥ ५९॥

तस्मादिति। यस्मादेवं तस्मात्कारणादेता भूषणाच्छादना शनैर्नित्यं सत्कारेषु कौमुद्यादिषु उत्सवेषु उपनयनादिषु समृद्धिकामैः नृभिः सदा पूजनीयाः॥ ५९॥

सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च।
यस्मिन्नेव कुले नित्यं कल्याणन्तत्र वै ध्रुवम्॥ ६०॥

सन्तुष्ट इति। भार्य्यया भर्त्रा इति हेतौ तृतीया। यत्र कुले भार्य्यया भर्त्ता प्रीतो भवति स्त्र्यन्तराभिलाषादिर्न

न करोति भार्य्या च स्वामिना प्रीता भवति तस्मिन् कुले चिरं श्रेयोभवति। कुलग्रहणात् केवलभार्य्यापती एव पुत्रपौत्रा दिसन्ततिरपि श्रेयोभागिनी भवति॥ ६०॥

यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत्।
अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्त्तते॥ ६१॥

यदीति। दीप्त्यर्थोऽत्र रुचिः। यदि स्त्री वस्त्राभरणादिना शोभाजनकेन दीप्तिमती न स्यात् तदा स्वामिनं पुनर्न हर्षये देव। हि शब्दोवधारणे। अप्रहर्षात्पुनः स्वामिनः प्रजननं गर्भधारणं न सम्पद्यते॥ ६१॥

स्त्रियान्तु रोचमानायां सर्व्वन्तद्रोचते कुलम्।
तस्यान्त्वरोचमानायां सर्व्वमेव न रोचते॥ ६२॥

स्त्रियामिति। स्त्रियां मण्डनादिना कान्तिमत्यां भर्त्तृ स्नेहविषयतया परपुरुषसम्पर्कविरहात् तत्कुलन्दीप्तम्भवति तस्यां पुनररोचमानायां भर्तृविद्वेषितया नरान्तरसंपर्का त्सकलमेव कुलं मलिनम्भवति॥ ६२॥

कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ६३ ॥

कुविवाहैरिति। आसुरादिविवाहैर्यथावर्णं निषिद्धैर्ज्जात कर्म्मादिक्रियालोपैर्वेदापाठेन ब्राह्मणापूजनेन प्रख्यातकुलान्यपकर्षं गच्छन्ति ॥ ६३ ॥

शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥ ६४ ॥

शिल्पेनेति। चित्रकर्म्मादिशिल्पेन कलया धनप्रयोगात्मक व्यवहारेण केवलशूद्रापत्येन गवाश्वरथक्रयविक्रयादिना कृषिराजसेवाभ्यां कुलानि विनश्यन्तीत्युत्तरेण सम्बन्धः ॥ ६४ ॥

अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणाम्।
कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः ॥ ६५ ॥

अयाज्येति। अयाज्यव्रात्यादियाजनैः। कर्म्मणां श्रौत स्मार्त्तादीनां नास्तिक्येन शास्त्रीयफलवत्कर्म्मसु फलाभाव बुद्धिर्नास्तिक्यम्। वेदाध्ययनशून्यानि कुलानि चिप्रमपकर्ष

गच्छन्ति। अत्र च विवाहप्रकरणे विवाहनिन्दाप्रसङ्गेन क्रियालोपादयोऽपि निन्दिताः। निन्दया चैतन्न कर्त्तव्यमिति सर्व्वत्र निषेधः कल्प्यते ॥ ६५ ॥

मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि। कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः ॥ ६६ ॥

इदानीं क्रियालोपादिगतप्रासङ्गिककुलनिन्दानुप्रसक्त्या कुलोत्कर्षमाह। मन्त्रेति। यद्यपि धनेन कुलमिति लोके प्रसिद्धं तथाप्यल्पधनान्यपि कुलानि वेदाध्ययनतदर्थज्ञानानुष्ठानयुक्तानि उत्कृष्टकुलगणनायां गण्यन्ते महतीन्तु ख्यातिमर्जयन्ति ॥ ६६ ॥

वैवाहिकेऽग्नौ कुर्व्वीत गृह्यङ्कर्म्म यथाविधि। पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृही ॥ ६७ ॥

विवाहप्रकरणमतिक्रान्तं। इदानीं वैवाहिकाग्नौ सम्पाद्यं महायज्ञविधानञ्चेति वक्तव्यतया प्रतिज्ञातं महायज्ञाद्यनुष्ठानमाह। वैवाहिक इति। विवाहे भवो वैवाहिकः। आध्यात्मिकादित्वाट्ठञ्। तस्मिन्नग्नौ गृह्योक्तं कर्म्म सायम्प्रातर्होमाष्ट

कादि यथाशास्त्रमग्निमाधाय पञ्चमहायज्ञान्तर्गतवैश्व देवाद्यनुष्ठानं प्रतिदिनमन्वाधाय पाकं गृहस्थः कुर्य्यात्॥ ६७॥

पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करः। कण्ड नीचोदकुम्भश्च बध्यते यास्तु वाहयन्॥ ६८॥

पञ्चेति। पशुवधस्थानं सूना। सूनाइव सूना हिंसास्थान गुणयोगात्। चुल्ल्यादयः पञ्च गृहस्थस्य जीवादिहिंसा स्थानानि चुल्ली उद्दाहनी पेषणी दृषदुपलात्मिका। उपस्करः गृहोपकरणकुण्डसंमार्जन्यादिः। कण्डनी उलूखलमुषले। उदकुम्भोजलाधारकलशः। याः स्वकार्य्ये योजयन् पापेन सम्बध्यते॥ ६८॥

तासां क्रमेण सर्व्वासां निष्कृत्यर्थं महर्षिभिः। पञ्च कृप्तामहायज्ञाः प्रत्यहं गृहमेधिनाम्॥ ६९॥

तासामिति। तासां चुल्ल्यादिसूनानां यथाक्रमं निष्कृत्यर्थं उत्पन्नपापनाशार्थं गृहस्थानां पञ्च महायज्ञाः प्रतिदिनं मन्वादिभिरनुष्ठेयतया स्मृताः। एवञ्च निष्कृत्यर्थमित्यभि धानात् हिंसास्थानत्वेन च कीर्त्तनात् सूनादोषैर्न लिप्यतइति वक्ष्यमाणलात्पञ्चसूनानामपापहेतुकत्वंपञ्चयज्ञानाञ्च तत्पाप

नाशकत्वमवगम्यते। प्रत्यहमित्यभिधानात्प्रतिदिनं तत्पापक्षयस्यापेक्षितत्वात्सन्ध्यावन्दनादिवन्नित्यत्वमपि न विरुध्यते ॥ ६९ ॥

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ७० ॥

अध्यापनमिति। अध्यापनशब्देनाध्ययनमपि गृह्यते जपोऽहुतइति वक्ष्यमाणत्वात्तेनाऽध्यापनमध्ययनञ्च ब्रह्मयज्ञः। अन्नाद्येनोदकेन वा इति पितृतर्पणं वक्ष्यति स पितृयज्ञः। अग्नौ होमो वक्ष्यमाणो देवयज्ञः। भूतबलिर्भूतयज्ञः। अतिथिपूजनं मनुष्ययज्ञः। अध्यापनादिषु यज्ञशब्दो महच्छब्दश्च स्तुत्यर्थो गौणः ॥ ७० ॥

पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः। स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥ ७१ ॥

पञ्चेति। शक्तितइत्येतद्विधानार्थोऽयमनुवादः। अनुकल्पेनापि यथासम्भवमेते कर्त्तव्याः। हापयतीति प्रकृत्यर्थएव स्वार्थे णिच् जहातीत्यर्थः ॥ ७१ ॥

देवतातिथिभृत्यानाम्पितॄणामात्मनश्च यः। न निर्व्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ७२ ॥

देवतेति। देवताशब्देन भूतानामपि ग्रहणम्। तेषामपि बलिहरणे देवतारूपत्वात् भृत्याश्चवश्यसंवर्द्धनीयाः। वृद्धमातापित्रादयःसर्व्वतएवात्मानङ्गोपायेदिति श्रुत्या आत्मपोषणमप्यवश्यं कर्त्तव्यम्। देवतादीनाम्पञ्चानां योऽन्नं न ददाति सश्वसन्नपि जीवितकार्य्याकरणान्न जीवतीति निन्दया वश्यकर्त्तव्यता बोध्यते ॥ ७२ ॥

अहुतञ्च हुतञ्चैव तथाप्रहुतमेव च। ब्राह्म्यं हुतम्प्राशितञ्च पञ्चयज्ञान्प्रचक्षते ॥ ७३ ॥

अहुतञ्चेति। नामभेदेपि नवाच्यभेदइति दर्शयितुं पञ्चमहायज्ञानां मुन्यन्तरकृतान्यहुतादीनि संज्ञान्तराण्यभिधेयानि तानि स्वयं व्याचष्टे ॥ ७३ ॥

जपोऽहुतोहुतोहोमः प्रहुतोभौतिकोबलिः। ब्राह्म्यं हुतं द्विजाग्र्यार्च्चा प्राशितं पितृतर्पणं ॥ ७४ ॥

जपइति। अहुतशब्देन ब्रह्मयज्ञाख्योजपउच्यते। हुतशब्देन देवयज्ञाख्योहोमः प्रहुतशब्देन भूतयज्ञाख्योभूत-

बलिः। आहुतशब्देन मनुष्ययज्ञाख्यो ब्राह्मणश्रेष्ठस्यार्चा। प्राशितशब्देन पितृयज्ञाख्यं नित्यश्राद्धम्॥ ७४॥

स्वाध्याये नित्ययुक्तः स्याद्दैवे चैवेह कर्म्मणि। दैव कर्म्मणि युक्तोहि बिभर्त्तीदञ्चराचरम्॥ ७५॥

स्वाध्यायइति। यदि दारिद्र्यादिदोषेणातिथिभोजनादिकं कर्त्तुं न लभते तदा ब्रह्मयज्ञे नित्ययुक्तोभवेत्। दैवे कर्म्मण्यग्नौ होमे च होमस्य स्तुतिमाह। यतोदैवकर्मपर इदं स्थावरजङ्गमं धारयति॥ ७५॥

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नन्ततः प्रजाः॥ ७६॥

कुतएतदित्याह। अग्नाविति। यजमानेनाग्नावाहुतिः सम्यक्क्षिप्ता रसाहरणकारित्वादादित्यस्य आदित्यं प्राप्नोति सचाहुतिरसआदित्याद्वृष्टिरूपेण जायते ततोऽन्नं तदुपभोगेन जायन्ते प्रजाः॥ ७६॥

यथा वायुं समाश्रित्य वर्त्तन्ते सर्व्वजन्तवः। तथा गृहस्थमाश्रित्य वर्त्तन्ते सर्व्व आश्रमाः ॥ ७७ ॥

यथेति। यथा प्राणाख्यवाय्वाश्रयेण सर्व्वप्राणिनोजीवन्ति तथा गृहस्थाश्रयेण सर्व्वाश्रमिणोनिर्वहन्ति ॥ ७७ ॥

यस्मात्त्रयोप्याश्रमिणोज्ञानेनान्नेन चान्वहम्। गृहस्थेनैव धार्य्यन्ते तस्माज्ज्येष्ठाश्रमोगृही ॥ ७८ ॥

गृहस्थः प्राणतुल्यः सर्व्वाश्रमिणामित्युक्तं तदेवोपपादयति यस्मादिति। यस्माद्गृहस्थव्यतिरिक्तास्त्रयोप्याश्रमिणोवेदार्थं व्याख्यानान्नदानाभ्यां नित्यं गृहस्थैरेवोपक्रियन्ते तस्माज्ज्येष्ठा श्रमोगृहस्थः। ज्येष्ठआश्रमोयस्य सतथेति बहुब्रीहिः ॥७८॥

स सन्धार्य्यः प्रयत्नेन स्वर्गमक्षयमिच्छता। सुखञ्चेहेच्छता नित्यं योऽधार्य्योदुर्बलेन्द्रियैः ॥७९॥

सइति। यतएवमतः सगृहस्थाश्रमः स्वर्गसुखमिच्छता अनन्तमिव चिरस्थायित्वात्। इह लोकेच स्त्रीसम्भोगस्वा द्वन्नादिभोजनसुखं सन्ततमिच्छता प्रयत्नेनानुष्ठेयः योऽसंय तेन्द्रियैर्द्धारयितुन्न शक्यते ॥ ७९ ॥

ऋषयः पितरो देवा भूतान्यतिथयस्तथा।
आशासते कुटुम्बिभ्यस्तेभ्यः कार्य्यं विजानता ॥ ८०॥

ऋषयइति। एते गृहस्थेभ्यः सकाशात्प्रार्थयन्ते अतः शास्त्रज्ञेन तेभ्यः कर्त्तव्यम् ॥ ८० ॥

स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि।
पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्म्मणा ॥ ८१ ॥

किन्तत्तदाह। स्वाध्यायेनेति। नानाप्रकारत्वादर्चनस्य स्वाध्यायादेरर्चनार्थत्वमुचितम्। महायज्ञान्तर्गतैः स्वाध्याया दिभिः ऋषिदेवपितृअतिथिभूतानि यथाशास्त्रं पूजयेत् ॥ ८१ ॥

कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा। पयो
मूलफलैर्व्वापि पितृभ्यः प्रीतिमावहन् ॥ ८२ ॥

तत्र पितृयज्ञं तावदाह। कुर्य्यादिति। प्रत्यहं यथा सम्भवं श्राद्धं कुर्य्यात्। श्राद्धशब्दोयत्कर्मविधिवाक्यवर्त्ती कौण्डपायिनामयनीयाग्निहोत्रशब्दवत् वक्ष्यमाणपार्वणश्राद्ध धर्म्मातिदेशार्थः। अन्नाद्येनेति तिलैर्व्रीहिभिर्यवैरित्यादेरु पादानं पयः क्षीरम् ॥ ८२ ॥

एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयज्ञिके। न चैवात्राशयेत्किञ्चिद्वैश्वदेवं प्रति द्विजम् ॥ ८३ ॥

एकमिति। पितृप्रयोजने पञ्चयज्ञान्तर्गते एकमपि ब्राह्मणम्भोजयेत्। अपिशब्दात्सम्भवे बहूनपि। पार्वणधर्म्मग्रहणाच्च वैश्वदेवब्राह्मणभोजनप्राप्तावाह। न कश्चिद्वैश्वदेवार्थं ब्राह्मणमत्र भोजयेत् ॥ ८३ ॥

वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्व्वकम्। आभ्यः कुर्य्याद्देवताभ्यो ब्राह्मणो होममन्वहम् ॥ ८४ ॥

वैश्वदेवस्येति। विश्वदेवार्थः सर्व्वदेवतार्थो वैश्वदेवस्तस्य पक्कस्यान्नस्यावसथ्याग्नौ स्वगृह्यविहितपर्य्युक्षणादीतिकर्त्तव्यतापूर्व्वकमाभ्यो वक्ष्यमाणदेवताभ्यो ब्राह्मणः प्रत्यहं होमं कुर्य्यात्। ब्राह्मणग्रहणं द्विजातिप्रदर्शनार्थं त्रयाणामप्रकृतत्वात् ॥ ८४ ॥

अग्नेः सोमस्य चैवादौ तयोश्चैव समस्तयोः। विश्वेभ्यश्चैव देवेभ्यो धन्वन्तरय एव च ॥ ८५ ॥

अग्नेरिति। वचनद्वयं स्वाहाकारप्रदानान्ता होमा इति कात्यायनस्मरणादादावग्नये स्वाहा सोमाय स्वाहेति निरपेक्ष

देवताकं होमद्वयं कृत्वा अग्नीषोमाभ्यां स्वाहेति समस्तदेवताकं होमं कुर्य्यात्ततोविश्वेभ्योदेवेभ्योधन्वन्तरये ॥ ८५ ॥

कुह्वै चैवानुमत्यै च प्रजापतयएव च। सहद्यावा पृथिव्योश्च तथा स्विष्टकृतेऽन्ततः ॥ ८६ ॥

कुह्वैचेति। कुह्वै अनुमत्यै प्रजापतये द्यावापृथिवीभ्या मग्नये स्विष्टकृतइत्येवं स्वाहाकारान्तान् होमान् कुर्य्यात्। श्रुत्यन्तरेष्वग्निविशेषणत्वेन स्विष्टकृतोविधानात्केवलं स्विष्ट कृन्निर्देशेऽपि अग्निविशेषणत्वेनैव प्रयोगः। पाठादेवान्तत्वे सिद्धे स्विष्टकृतेऽन्ततइत्यभिधानं स्मृत्यन्तरीयहोमसमुच्चयेप्यन्तत्वज्ञापनार्थम् ॥ ८६ ॥

एवं सम्यग्घविर्हुत्वा सर्व्वदिक्षु प्रदक्षिणम्। इन्द्रान्तकाप्पतीन्दुभ्यः सानुगेभ्योबलिं हरेत् ॥ ८७ ॥

एवमिति। एवमुक्तप्रकारेण सम्यगनन्यचित्तोदेवताध्यानपर एव होमान् कृत्वा सर्व्वासु प्राच्यादिषु दिक्षु प्रदक्षिणमिन्द्रादिभ्यः सपुरुषेभ्योबलिं हरेत्। तद्यथा प्राच्यामिन्द्राय नमः। इन्द्रपुरुषेभ्योनमः। दक्षिणस्यां यमाय नमः। यमपुरुषेभ्योनमः।

पश्चिमायां वरुणाय नमः। वरुणपुरुषेभ्यो नमः। उत्तरस्यां सोमाय नमः। सोमपुरुषेभ्योनमः। यद्यपि शब्दावगम्यत्वा द्देवतात्वस्यान्तकाप्पतीन्दुशब्दैरेवोद्देशोयुक्तस्तथापि वक्तृवानु ष्ठानसम्वादादङ्कृचगृह्ये च यमाय यमपुरुषेभ्योवरुणाय वरुण पुरुषेभ्यः सोमाय सोमपुरुषेभ्यइति प्रतिदिशमिति पाठात् यथोक्तएव प्रयोगः॥ ८७॥

मरुद्भ्यइति तु द्वारि क्षिपेदप्स्वद्भ्यइत्यपि। वन स्पतिभ्य इत्येवं मुषलोलूखले हरेत्॥ ८८॥

मरुद्भ्यइति। इतिशब्दः स्वरूपविवक्षार्थः। मरुद्भ्योनमइति द्वारे बलिं दद्यात् जलेऽद्भ्यइति। मुषलोलूखलइति द्वन्द्वनिर्दे शात्सहयुक्तयोरन्यतरत्र वनस्पतिभ्यइति बलिं दद्यात्। गुणा नुरोधेन प्रधानबलिकर्म्मावृत्तेरन्याय्यत्वात्॥ ८८॥

उच्छीर्षके श्रियै कुर्य्याद्भद्रकाल्यै च पादतः। ब्रह्मवास्तोःपतिभ्यान्तु वास्तुमध्ये बलिं हरेत्॥ ८९॥

उच्छीर्षेति। वास्तुपुरुषस्य शिरःप्रदेशे उत्तरपूर्व्वस्यां दिशि श्रियै बलिन्दद्यात्। तस्यैव पाददेशे दक्षिणपश्चिमायां दिशि भद्रकाल्यै। अन्ये तु उच्छीर्षकं गृहस्थशयनस्य शिरः

स्या[illegible]भागं पादतइति तस्यैव चरणभूप्रदेशमाहुः। ब्रह्मणे वास्तोःपतयइति गृहमध्ये। द्वन्द्वनिर्देशेऽपि ब्रह्मवास्तोःपत्योः पृथगेव देवतात्वम्।यत्र द्वन्द्वे मिलितस्य देवतात्वमपेक्षितं तत्र सहादिशब्दङ्करोति। यथा सहद्यावापृथिव्योश्चेति॥ ८९॥

विश्वेभ्यश्चैव देवेभ्योबलिमाकाश उत्क्षिपेत्। दिवा चरेभ्योभूतेभ्योनक्तञ्चारिभ्य एवच॥ ९०॥

विश्वेभ्यइति। विश्वेभ्यश्चैव देवेभ्यइतिच शब्दादेकेयमाहुतिः विश्वेभ्योदेवेभ्योनमइति गृहाकाशे बलिं दद्यात्। दिवाचरेभ्यो भूतेभ्यइति दिवानक्तञ्चरेभ्यइति नक्तम्। बह्वृचगृह्यदर्शना दियं व्यवस्था॥ ९०॥

पृष्ठवास्तुनि कुर्व्वीत बलिं सर्व्वात्मभूतये। पितृभ्योबलिशेषन्तु सर्व्वं दक्षिणतोहरेत्॥ ९१॥

पृष्ठेति। गृहस्योपरि यद्गृहं तत्पृष्ठवास्तु बलिदातुः पृष्ठदेशे भूभागे वा तत्र सर्व्वात्मभूतये नमइत्येव बलिन्दद्यात्। उक्त बलिदानावशिष्टं सर्व्वमन्नं दक्षिणस्यान्दिशि दक्षिणामुखः स्वधा पितृभ्यइति बलिं हरेत्। प्राचीनावीतिना चायं बलिर्देयः स्वधापितृभ्यइति प्राचीनावीती शेषन्दक्षिणामुखोनिनयेदिति बह्वृचगृह्यवचनात्॥ ९१॥

शुनाञ्च पतितानाञ्च श्वपचाम्पापरोगिणाम्।
वायसानां कृमीणाञ्च शनकैर्निर्वपेद्भुवि ॥ ९२ ॥

शुनाञ्चेति। अन्यदन्नं पात्रे समुद्धृत्य श्वपतितादिभ्यः शनकैर्यथा रजसा न संसृज्यते तथाभुवि दद्यात्। पापरोगी कुष्ठी क्षयरोगी वा ॥ ९२ ॥

एवं यः सर्व्वभूतानि ब्राह्मणोनित्यमर्च्चति। स गच्छति परं स्थानन्तेजोमूर्त्तिं पथर्जुना ॥ ९३ ॥

एवमिति। एवमुक्तप्रकारेण यः सर्व्वभूतान्यन्नदानादिना नित्यं पूजयति स परं स्थानं ब्रह्मात्मकन्तेजोमूर्त्तिं स्वप्रकाशं अवक्रेण वर्त्मनार्च्चिरादिमार्गेण प्राप्नोति ब्रह्मणि लीयत इत्यर्थः। ज्ञानकर्म्मभ्यां मोक्षप्राप्तेः। तेजोमूर्त्तिरिति सविसर्ग पाठे प्रकृष्टब्रह्मबोधस्वभावोभूत्वेति व्याख्या॥ ९३ ॥

कृत्वैतद्बलिकर्म्मैवमतिथिम्पूर्व्वमाशयेत्। भिक्षाञ्च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ॥ ९४ ॥

कृत्वेति। एवमुक्तप्रकारेण एतद्बलिकर्म्म कृत्वा गृहभोक्तृभ्यः सर्व्वमतिथिम्भोजयेत्। भिक्षवे परिव्राजे ब्रह्मचारिणे प्रथमा-

अस्मिन् च विधिवत्स्वस्तिवाच्य भिक्षादानमप्पूर्व्वमिति गौतमा द्युक्तविधिना भिक्षान्दद्यात्। ग्रासप्रमाणा च भिक्षा भवति। ग्रासमात्रा भवेद्भिक्षेति शातातपवचनात्। सम्भवेत्त्वधिकमपि देयम् ॥ ९४ ॥

यत्पुण्यफलमाप्नोति गान्दत्वा विधिवद्गुरोः।
तत्पुण्यफलमाप्नोति भिक्षान्दत्वा द्विजो गृही ॥ ९५ ॥

यदिति। गुरवे गान्दत्वा विधिवत्स्वर्णशृङ्गिकादिविधानेन यत्फलमाप्नोति तद्गृहस्थो विधिना भिक्षादानात्प्राप्नोति ॥ ९५ ॥

भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्व्वकम्।
वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् ॥ ९६ ॥

भिक्षामिति। प्रचुरान्नाभावे ग्रासप्रमाणाम्भिक्षामपि व्यञ्जनादिना सत्कृत्य तदभावे जलपूर्णं पात्रमपि फलपुष्पादिना सत्कृत्य तत्त्वतो वेदतदर्थज्ञानवते ब्राह्मणाय स्वस्तिवाच्येत्यादि विधिपूर्वकन्दद्यात् ॥ ९६ ॥

नश्यन्ति हव्यकव्यानि नराणामविजानताम्।
भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः ॥ ९७ ॥

नश्यन्तीति। मोहात्तत्पात्रानभिज्ञतया देवपित्रुद्देशेन दत्तानि वेदाध्ययनतदर्थज्ञानानुष्ठानतेजःशून्यतया भस्मरूपेष्विव पात्रेषु दत्तानि दातृभिर्निष्फलानि भवन्ति ॥ ९७ ॥

विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु। निस्तारयति दुर्गाच्च महतश्चैव किल्बिषात्॥ ९८॥

विद्यातपःसमृद्धेष्विति। विद्यातपस्तेजःसम्पन्नविप्राणां मुखानि होमाधिकरणत्वेनाग्नितया निरूपितानि तेषु हव्यकव्यादि प्रक्षिप्त मिह लोके दुस्तरात् व्याधिशत्रुराजपीडादिभया न्महतश्चपापादमुत्र नरकात्त्रायते॥ ९८॥

सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके। अन्नञ्चैव यथाशक्ति सत्कृत्य विधिपूर्व्वकम्॥ ९९॥

सम्प्राप्तायेति। स्वयमागताय त्वतिथये आसनम्पादप्रक्षालनाद्युदकं यथासम्भवं व्यञ्जनादिभिः सत्कृतञ्चान्नमासनाव सथावित्यादिवक्ष्यमाणविधिपूर्व्वकन्दद्यात्॥ ९९॥

शिलानप्युञ्छतोनित्यम्पञ्चाग्नीनपि जुह्वतः। सर्व्वं सुकृतमादत्ते ब्राह्मणोनर्चितोवसन्॥ १००॥

शिलानिति। लूनकेदारशेषधान्यानि शिलास्तानपि उञ्छतोवृत्तिसंयमान्वितस्य चेतावसथ्य. सभ्यस्येति पञ्चाग्नयः सभ्योनामाग्निः शीतापनोदाद्यर्थं यस्तत्र प्रणीयते पञ्चस्वग्निषु होमं कुर्व्वाणस्य सर्व्वं वृत्तिसङ्कोचपञ्चाग्निहोमार्ज्जितपुण्यमनर्चितोऽतिथिर्व्वसन् गृह्णाति। अनयाच निन्दयातिथ्यर्चनस्य नित्यतावगम्यते॥ १००॥

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता। एता न्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ १०१ ॥

तृणानीति। अन्नासम्भवे पुनस्तृणविश्रामभूमिपादप्रक्षालनाद्यर्थजलप्रियवचनान्यपि धार्म्मिकगृहेष्वतिथ्यर्थं न कदाचिदुच्छिद्यन्ते। अवश्यदेयानीति विधीयते। तृणग्रहणं शयनीयोपलक्षणार्थम् ॥ १०१ ॥

एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः। अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥१०२॥

अप्रसिद्धत्वादतिथिलक्षणमाह। एकेति। एकरात्रमेव परगृहे निवसन् ब्राह्मणोऽतिथिर्भवति। अनित्यावस्थानान्न विद्यते द्वितीया तिथिरस्येति अतिथिरुच्यते ॥ १०२ ॥

नैकग्रामीणमतिथिं विप्रं साङ्गतिकन्तथा। उपस्थितं गृहे विद्याद्भार्य्या यत्राग्नयोऽपि वा ॥ १०३ ॥

नैकेति। एकग्रामनिवासिनं लौकिकेषु विचित्रपरिहासकथादिभिः सङ्गत्या वृत्त्यर्थिनं भार्य्याग्नियुक्तगृहे वैश्वदेवकालोपस्थितमपि नातिथिं विद्यात्। एतेन भार्य्याग्निरहितस्य प्रवासिनो नातिथिरिति बोधितम् ॥ १०३ ॥

उपासते ये गृहस्थाः परपाकमबुद्धयः । तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनाम् ॥ १०४ ॥

उपासत इति । अतिथिप्रकरणादातिथ्यलोभेन ये गृहस्थाः ग्रामान्तराणि गत्वा परान्नं सेवन्ते ते निषिद्धपरान्नदोषान भिज्ञाः तेन परान्नभोजनेन जन्मान्तरे अन्नादिदायिनां पशुतां व्रजन्ति तस्मादिदं न कुर्य्यादिति निषेधः कल्प्यते ॥१०४॥

अप्रणोद्योऽतिथिः सायं सूर्य्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् ॥ १०५ ॥

अप्रणोद्य इति । सूर्य्येऽस्तमिते गृहस्थेनातिथिर्न प्रत्याख्येयः । सूर्य्येणोढः प्रापितः रात्रौ स्वगृहगमनाशक्तः द्वितीयवैश्वदेव काले प्राप्तः अकाले वा सायंभोजने निवृत्तेपि नास्य गृहे अतिथिरनश्नन् वसेदवश्यमस्मै भोजनन्देयं। प्रत्याख्याने प्रायश्चित्त गौरवार्थोयमारम्भः । अतएव विष्णुपुराणे । दिवातिथौ तु विमुखे गते यत्पातकं नृप । तदेवाष्टगुणम्प्रोक्तं सूर्य्योढे विमुखे गते। गोविन्दराजस्तु प्रतिषिद्धातिथिप्रतिप्रसवार्थत्वमस्याह ॥ १०५ ॥

न वै स्वयन्तदश्नीयादतिथिं यन्न भोजयेत्। धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनम्॥ १०६ ॥

न वै इति। यद्घृतदध्याद्युत्कृष्टमतिथिनं प्रत्याचष्टे तत्तस्मै अदत्वा न स्वयम्भोक्तव्यम्। धनाय हितन्धनस्य निमित्तं वा धन्यं एवं यशस्यादयोपि शब्दाः। अतिथिभोजनफलकथनमिदम्। न चानावश्यकतापत्तिः सर्व्वं सुकृतमादत्ते इत्यादिदोषश्रवणात्॥ १०६ ॥

आसनावसथौ शय्यामनुव्रज्यामुपासनाम्। उत्तमेषूत्तमं कुर्य्याद्धीने हीनं समे समम्॥ १०७॥

आसनेति। आसनम्पीठश्चर्म्म वा। आवसथोविश्रामस्थानम्। शय्या खट्वादिः। अनुव्रज्या गच्छतोऽनुगमनम्। उपासनाम्परिचर्य्या। एतत्सर्व्वं बहुष्वतिथिषु युगपदुपस्थितेषु इतरेतरापेक्षया उत्कृष्टापकृष्टमध्यमं कुर्य्यात्। न पुनः सर्वेषां समम्॥ १०७॥

वैश्वदेवे तु निर्वृत्ते यद्यन्योतिथिराव्रजेत्। तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत्॥ १०८॥

वैश्वेति। अन्यशब्दनिर्द्देशादतिथिभोजनपर्य्यन्ते वैश्वदेवे कृते यद्यपरोऽतिथिरागच्छेत्तदा तदर्थम्पुनःपाकं कृत्वा तस्या

न्नन्दद्यात्। बलिहरणन्ततोन्नाद्य कुर्य्यात् बलिनिषेधादन्नसं स्काराभावोवैश्वदेवस्यावगम्यते। अन्नसंस्कारपक्षे कथमसंस्कृ तान्नभोजनमनुजानीयात्॥ १०८॥

न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत्। भोज नार्थं हि ते शंसन् वान्ताशीत्युच्यते बुधैः॥ १०९॥

नेति। भोजनलाभार्थं ब्राह्मणः स्वकुलगोत्रे न निवेद येत्। यस्माद्भोजनार्थन्ते कथयन् उद्गीर्णाशीति पण्डितैः कथ्यते॥ १०९॥

न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते। वैश्यशूद्रौ सखा चैव ज्ञातयोगुरुरेव च॥ ११०॥

नेति। ब्राह्मणस्य क्षत्रियादयः अतिथयोन भवन्ति। क्षत्रि यादीनाम्ब्राह्मणादपकृष्टजातित्वात् मित्रज्ञातीनामात्मस मत्वाद्गुरोश्च प्रभुत्वात्। अनेनैव न्यायेन क्षत्रियस्य उत्कृष्टो ब्राह्मणः सजातीयश्च क्षत्रियोऽतिथिः स्यात् नापकृष्टौ वैश्य शूद्रौ। एवं वैश्यस्यापि द्विजातयोऽतिथयोन शूद्रः॥ ११०॥

यदि त्वतिथिधर्म्मेण क्षत्रियो गृहमाव्रजेत्। भुक्तवत्सूक्तविप्रेषु कामन्तमपि भोजयेत् ॥ १११ ॥

यदीति। यदि ग्रामान्तरागतत्वादतिथिकालोपस्थितत्वादतिथिधर्म्मेण क्षत्रियो विप्रगृहमागच्छेत्तदा विप्रगृहोपस्थितविप्रेषु कृतभोजनेषु स्थितेषु इच्छातस्तमपि भोजयेत् ॥१११॥

वैश्यशूद्रावपि प्राप्तौ कुटुम्बेतिथिधर्म्मिणौ। भोजयेत्सह भृत्यैस्तावानृशंस्यं प्रयोजयन् ॥ ११२ ॥

वैश्येति। यदि वैश्यशूद्रावपि ब्राह्मणस्य कुटुम्बे गृहे प्राप्तौ ग्रामान्तरादागतत्वाद्यतिथिधर्म्मशालिनौ तदा तावपि क्षत्रियभोजनकालात्परतोदम्पतीभोजनात्पूर्व्वं दासभोजनकाले अनुकम्पामाश्रयन्भोजयेत् ॥ ११२ ॥

इतरानपि सख्यादीन्सम्प्रीत्या गृहमागतान्। सत्कृत्यान्नं यथाशक्ति भोजयेत्सह भार्य्यया ॥११३॥

इतरानिति। उक्तभोजनकाले क्षत्रियादिव्यतिरिक्तान् सखिसहाध्यायिप्रभृतीन सम्प्रीत्या गृहमागतान नत्वतिथि

भावेन तस्य प्रतिषेधात्। यथाशक्ति प्रकृष्टमन्नं कृत्वा भार्य्याभो जनकाले भोजयेत्। गृहस्थस्यापि सएव भोजनकालः अव शिष्टन्तु दम्पतीति वक्ष्यमाणत्वात्। आत्मना सहेति वक्तव्ये वच नवैचित्रीयमाचार्य्यस्य। गुरोस्तु भोजनकालानभिधानं प्रभुत्वेन स्वाधीनकालत्वात्॥ ११३॥

सुवासिनीः कुमारांश्च रोगिणोगर्भिणीस्तथा।
अतिथिभ्योग्रएवैतान्भोजयेदविचारयन्॥ ११४॥

सुवासिनीरिति। सुवासिन्योनवोढाः स्त्रियः स्नुषा दुहित रश्च ताः कुमारान् रोगिणोगर्भिणीश्चातिथिभ्योग्रे पूर्व्वमेवा तिथिभ्योभोजयेत्। कथमतिथिषु अभोजितेषु भोजनमेषामिति विचारमकुर्व्वन्। मेधातिथिस्त्वन्वगेवेति पठित्वानुगतानेवैतान् भोजयेत् अतिथिसमकालमिति व्याख्याय अन्येतु अग्रइति पठन्तीत्युक्तवान्॥ ११४॥

अदत्वा तु यएतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः। स
भुञ्जानोन जानाति श्वगृध्रैर्जग्धिमात्मनः॥ ११५॥

अदत्वेति। एतेभ्योऽतिथ्यादिभृत्यपर्य्यन्तेभ्योऽन्नमदत्वा व्यतिक्रमभोजनदोषमजानन् यः पूर्व्वं भुङ्क्ते स मरणानन्तरं श्वगृध्रैरात्मनोभक्षणन्न जानाति व्यतिक्रमभोजनस्येदम्फलमिति वचनवैदग्ध्येनोक्तम्॥ ११५॥

भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैवहि। भुञ्जीयातान्ततः पश्चादवशिष्टन्तु दम्पती ॥ ११६ ॥

भुक्तेति। विप्रेषु अतिथिषु ज्ञातिषु भृत्येषु दासादिषु कृतभोजनेषु ततोऽन्नादवशिष्टम्भार्य्यापती पश्चादश्नीयाताम् ॥ ११६ ॥

देवानृषीन्मनुष्यांश्च पितॄन् गृह्याश्च देवताः। पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ॥ ११७ ॥

देवानिति। गृह्याश्च देवताइत्यनेन भूतयज्ञ उक्तः। पञ्चयज्ञानुष्ठानस्य अवशिष्टन्तु दम्पतीत्यनेन शेषभोजनस्य च विहितत्वात्। वक्ष्यमाणदोषकथनार्थोयमनुवादः। अथवा देवानित्यनेनैव भूतयज्ञस्यापि सङ्ग्रहः। गृहे भवा गृह्यादेवताः पूजयित्वेति वासुदेवादिप्रतिकृतिपूजाविधानार्थत्वमस्य ॥ ११७ ॥

अघं स केवलम्भुङ्क्ते यः पचत्यात्मकारणात्। यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते ॥ ११८ ॥

अघमिति। यस्त्वात्मार्थमेवान्नं पक्त्वा भुङ्क्ते देवादिभ्योन ददाति स पापहेतुत्वात्पापमेव केवलं भुङ्क्ते नान्नम्। तथाच

श्रुतिः। केवलाघोभवति केवलादीति यस्माद्यदेव पाकयज्ञा वशिष्टमशनमन्नं मन्यते इति। एतदेव साधूनामन्नमुपदिश्यते इति ॥ ११८ ॥

राजर्त्विक् स्नातकगुरून् प्रियश्वशुरमातुलान्।
अर्हयेन्मधुपर्केण परिसंवत्सरात्पुनः ॥ ११९ ॥

अतिथिपूजाप्रसङ्गेन राजादीनामपि गृहागतानान्पूजा विशेषमाह। राजेति। राज्याभिषिक्तः क्षत्रियोराजा ऋत्विक् यज्ञे येन यस्यार्त्विज्यं कृतं स्नातकोविद्याव्रताभ्यां प्रियोजामाता। राजादीनेतान् गृहागतान्सप्त गृह्योक्तेन मधुपर्काख्येन कर्म्मणा पूजयेत्। परिसँव्वत्सरादिति सँव्वत्सरं वर्जयित्वा तदूर्द्धं गृहागतान् पुनर्मधुपर्केण पूजयेत्। पञ्चम्यपाङ्परिभिरिति सूत्रेण वर्जनार्थपरियोगेनेयं पञ्चमी। अतएवैतत्सूत्रव्याख्याने जयादित्येनोक्तं अपेन साहचर्य्यात्परेर्वर्जनार्थस्य ग्रहणमिति। मेधातिथिस्तु परिसँव्वत्सरानिति पठित्वा परिगतोनिष्क्रान्तः संवत्सरोयेषान्तामृ पूजयेदिति व्याख्यातवान्। उभयत्रापि पाठे संवत्सरमध्यागमने न मधुपर्कार्हता ॥ ११९॥

राजाच श्रोत्रियश्चैव यज्ञकर्म्मण्युपस्थितौ।
मधुपर्केण सम्पूज्यौ न त्वयज्ञइति स्थितिः ॥ १२० ॥

राजस्नातकयोः पूजासङ्कोचार्थमाह। राजेति। राजस्नातकौ संवत्सरादूर्द्धमपि यज्ञकर्म्मण्येव प्राप्तौ मधुपर्केण

पूजनीयौ न तु यज्ञव्यतिरेकेण जामात्रादयस्तु संवत्सरादूर्द्धं यज्ञं विनापि मधुपर्कार्हाः संवत्सरमध्ये तु सर्वेषां यज्ञ विवाहयोरेव मधुपर्कः। तदाह गौतमः। ऋत्विगाचार्य्य श्वशुरपितृव्यमातुलादीनामुपस्थाने मधुपर्कः संवत्सरे पुनर्यज्ञ विवाहयोरर्वाक् राज्ञः श्रोत्रियस्य च ॥ १२० ॥

सायन्त्वन्नस्य सिद्धस्य पत्न्यमन्त्रम्बलिं हरेत्। वैश्व देवं हि नामैतत्सायम्प्रातर्विधीयते ॥ १२१ ॥

सायमिति। दिनान्ते सिद्धस्यान्नस्य पत्नी अमन्त्रं बलिहरणं कुर्य्यात्। इन्द्राय नमइति मन्त्रपाठवर्ज्जं मानसस्तु देवतो द्देशोन निषिध्यते। यतएतत् वैश्वदेवं नामान्नसाध्यं होमबलि दानातिथिभोजनात्मकं तत्सायम्प्रातर्गृहस्थस्योपदिश्यते॥१२१॥

पितृयज्ञन्तु निर्व्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्। पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकं॥१२२॥

श्राद्धकल्पश्च शाश्वतमित्यनुक्रमणिकायाम्प्रतिज्ञातं श्राद्ध कल्पमुपक्रमते। पितृयज्ञमिति। साग्निरमावास्यायाम्पिण्ड पितृयज्ञाख्यङ्कर्म्म कृत्वा श्राद्धं कुर्य्यात्। पितृयज्ञपिण्डानामनु पश्चादाह्रियतइति पिण्डान्वाहार्य्यकं श्राद्धं मासानुमासिकं

मासस्यानुमासस्य तयोर्भवं प्रतिमासं कर्त्तव्यमित्यर्थः अनेनास्य नित्यत्वमुक्तं विप्रग्रहणं द्विजातिपरं त्रयाणां प्रकृतत्वात्॥१२२॥

पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः।
तच्चामिषेण कर्त्तव्यम्प्रशस्तेन प्रयत्नतः॥१२२॥

इदानीं नामनिर्वचनेनोक्तमेव पितृयज्ञानन्तर्य्यं दृढयति। पितॄणामिति। इदं मासिकप्रतिमासभवं श्राद्धं यस्मात्पितृयज्ञपिण्डानामनु पश्चादाह्रियते तेन पिण्डान्वाहार्य्यकमिदम्पण्डिता आजन्ति ततो युक्तम्पितृयज्ञानन्तर्य्यमस्य। तच्चामिषेण वक्ष्यमाणमांसेन प्रशस्तेन मनोहरेण पूतिगन्धादिरहितेन प्रयत्नतः कर्त्तव्यं। पिण्डानां मासिकं श्राद्धमिति वा पाठः। पिण्डानां पितृयज्ञपिण्डानां शेषन्तुल्यम्॥१२३॥

तत्र ये भोजनीयाः स्युर्ये च वर्ज्या द्विजोत्तमाः।
यावन्तश्चैव यैश्चान्नैस्तान्प्रवक्ष्याम्यशेषतः॥१२४॥

तत्रेति। तस्मिन् श्राद्धे ये भोजनीयाः येच त्याज्या यत्संख्यकाः यैश्चान्नैस्तत्सर्व्वं प्रवक्ष्यामि॥१२४॥

द्वौ दैवे पितृकार्य्ये त्रीनेकैकमुभयत्र वा। भोजयेत्सुसमृद्धोपि न प्रसज्जेत विस्तरे॥१२५॥

अत्र यद्यप्युद्देशक्रमेण योजनीयादति वक्तुमुचितन्तथाप्यल्पवक्तव्यत्वाद्ब्राह्मणसंख्यामाह। द्वाविति। देवश्राद्धे द्वौ

ब्राह्मणो पितृपितामहप्रपितामहानां त्रीन् ब्राह्मणान् अथवा दैवे एकं पित्रादित्रिके चैकं ब्राह्मणं भोजयेत्। उक्तातिरिक्तभोजनसमर्थोऽपि नाधिकभोजनेषु प्रवर्त्तेत। मेधातिथिस्त्वाह। पितृकार्य्ये त्रीनिति पितुस्त्रीन् ब्राह्मणान् पितामहस्य त्रीन् ब्राह्मणान् प्रपितामहस्य त्रीन् ब्राह्मणान् भोजयेत्। एवैकमुभयत्रेति दैवएकं पित्रादित्रयस्य चैकैकस्यैकैकम् नत्वेकत्वेव पित्रादित्रयस्य। न त्वेकं सर्वेषाम्पिण्डैर्व्याख्यातमित्याश्वलायनगृह्यविरोधात्। यथैकः पिण्डः पित्रादित्रयस्य न निरूप्यते तथैकोब्राह्मणोनभोजयितव्यइत्यर्थः तस्मान्नपित्रादित्रयस्यैकब्राह्मणभोजनं। तदसत्। गृह्यकारेणैव नत्वेकं सर्वेषां पिण्डैर्व्याख्यातमिति पठित्वा काममनाद्ये इत्यभिहितम्। अस्यार्थः बहुपित्रादिदेवताकश्राद्धानामाद्यं सपिण्डीकरणमत्राभिमतं तद्व्यतिरिक्तश्राद्धे काममेकः पित्रादीनाम्ब्राह्मणइत्यर्थः। अथवा अनाद्ये अदनीयद्रव्याभावे एकोपि भोजयितव्यः। उभयत्रापि व्याख्याने पार्वणादौ पित्रादित्रयस्यैकब्राह्मणभोजनं गृह्यकृतैवोक्तम्। वशिष्ठोपि। यद्येकम्भोजयेच्छ्राद्धे दैवं तत्र कथम्भवेत्। अन्नं पात्रे समुद्धृत्य सर्व्वस्य प्रकृतस्य च। देवतायतने कृत्वा यथाविधिप्रवर्त्तयेत्। प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणइति सर्व्वेभ्य एकब्राह्मणभोजनमाह। तस्माद्यथोक्तैव व्याख्याप्रथमे। वाशब्द इत्यनेन विस्तारइति प्राप्ते छन्दःसमानत्वात्स्मृतीनां सर्वे विधयः छन्दसि विकल्प्यन्तेइति विस्तरइतिरूपम्॥ १२५॥

सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः। पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम्॥ १२६॥

सदिति। सत्क्रियां ब्राह्मणस्य पूजां देशं दक्षिणप्रवणत्वादि वक्ष्यमाणं कालमपराह्णं शौचं श्राद्धकर्तृभोक्तृब्राह्मणप्रेष्यगतं गुणवद्ब्राह्मणलाभञ्च ब्राह्मणविस्तारो नाशयति तस्माद्ब्राह्मणविस्तारं न कुर्य्यादिति। सत्क्रियादिविरोधतो ब्राह्मणविस्तारनिषेधात्सत्क्रियादिसम्भवे पिचादेरेकैकस्यापि ब्राह्मणत्रयाभ्यनुज्ञानम्। अतएव गौतमः। न वा वरान्भोजयेदयुजो वा यथोत्साहं। बहृचगृह्यकारोपि अथातः पार्वणश्राद्धं काम्यमाभ्युदयिकमेकोद्दिष्टं ब्राह्मणानित्युपक्रम्य एकैकमेकैकस्य द्वौ द्वौ त्रीन् त्रीन् वा वृद्धौ फलभूयस्त्वमित्याह। द्वौद्वाविति। आभ्युदयिकश्राद्धविषयं स्मृत्यन्तरेषु तथाविधानात्। अत्राप्याभ्युदयिक इत्युपक्रमाच्च॥ १२६॥

प्रथिता प्रेतकृत्यैषा पित्र्यं नाम विधुक्षये। तस्मिन् युक्तस्यैति नित्यं प्रेतकृत्यैव लौकिकी॥ १२७॥

प्रथितेति। यदेतत्पित्र्यं कर्म्म श्राद्धरूपमियं प्रख्याता प्रेतकृत्या पित्रुपकारार्था क्रिया। प्रकर्षेण इतः प्रेतः पितृलोकस्थ

एवोच्यते। विधुक्षये अमावास्यायां तस्मिन्पित्र्ये कर्म्मणि युक्तस्य तत्परस्य लौकिकी स्मार्त्तिकी प्रेतकृत्या पित्रुपकारार्था क्रिया गुणवत्पुत्रपौत्रधनादिफलप्रबन्धरूपेण कर्त्तारमुपतिष्ठते तस्मादिदङ्कर्त्तव्यम्। गोविन्दराजेन तु विधिःक्षयइतिपठितं व्याख्यातञ्च योऽयं पित्र्यो नाम विधिः पित्र्यङ्कर्म्मेति क्षये चन्द्रक्षये गृहे वा। तदसाम्प्रदायिकम्। मेधातिथिप्रभृतिभिर्गोविन्दराजादपि वृद्धतरैरनभ्युपेतत्वात्क्षयइति सम्बन्धश्चाय ॥१२७॥

श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम्॥१२८॥

श्रोत्रियेति। छन्दोमात्राध्यायी श्रोत्रियस्तस्मै देवपित्र्यान्नानि यत्नतो देयानि। अर्हत्तमाय श्रुताचाराभिजनादिभिः पूज्यतमाय तस्मैदत्तं महाफलम्भवति ॥१२८॥

एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत्। पुष्कलम्फलमाप्नोति नामन्त्रज्ञान् बहूनपि॥१२९॥

एकैकमिति। दैवपित्र्ययोरेकैकमपि वेदतत्त्वविदं ब्राह्मणं भोजयेत्। तदापि विशिष्टं श्राद्धफलं प्राप्नोति न त्वविदुषो

वहूनपि एवञ्च फलश्रवणाद्ब्राह्मणभोजनमेव प्रधानं पिण्ड दानादिकन्त्वङ्गमिति गोविन्दराजः। वयन्तु पित्रुद्देशेन द्रव्य त्यागं ब्राह्मणस्वीकारपर्य्यन्तं श्राद्धशब्दवाच्यं प्रधानं ब्रूमः। तदेव मनुना पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यादिति विहितं आपस्तम्बेन तु मन्वर्थस्यैव व्याख्यातत्वात्। तदाह आपस्तम्बः। तथैतन्मनुः श्राद्धशब्दं कर्म्म प्रोवाच प्रजानिःश्रेयसार्थं तत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे मासिमास्यपरपक्षस्याप राह्णः श्रेयानिति। श्राद्धपदं श्राद्धमिति शब्दोवाचकोयस्य तत्तथा ब्राह्मणस्त्वाहवनीयार्थे आहवनीयवत् त्यक्तद्रव्य प्रतिपत्तिस्थानत्वात्। पितरो देवता इति नियमात्पित्रुद्देवता कत्वाच्च श्राद्धस्य। देवश्राद्धादौ श्राद्धशब्दन्तु तद्धर्म्मप्राप्त्य र्थो गौणः कौण्डपायिनामयनइवाग्निहोत्रशब्दः। पुष्कलं फलं प्राप्नोति इतितु पुष्टतरफलार्थिनो गुणफलविधिः। सभोजन स्याङ्गत्वेपि तदाश्रयेन विरुद्धः। आपस्तम्बोभ्यधात् श्राद्धं कर्म्मेनत्पित्रुद्देवतम्। मन्वर्थं कथयंस्तस्मान्नेदं ब्राह्मणभोजनम् ॥ १२९ ॥

दूरादेव परीक्षेत ब्राह्मणं वेदपारगम्। तीर्थन्त द्धव्यकव्यानाम्प्रदाने सोतिथिः स्मृतः ॥ १३० ॥

दूरादिति। दूरादेव पितृपितामहाद्यभिजनशुद्धिनि रूपणेन कृत्स्नशाखाध्यायिनं ब्राह्मणम्परीक्षेत यस्मात्तथाविधो

ब्राह्मणो हव्यादीनान्तीर्थं पात्रं प्रदाने मोऽतिथिरिव महाफल प्राप्तेर्हेतुत्वात् ॥ १३० ॥

सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते।
एकस्तान्मन्त्रवित्प्रीतः सर्व्वानर्हति धर्म्मतः ॥ १३१ ॥

सहेति। यत्र श्राद्धे ब्राह्मणानामवेदविदान्दशलक्षाणि भुञ्जते तत्रैकोवेदवित् भोजनेन परितुष्टोधर्म्मतः धर्म्मोत्पादनेन तान्सर्व्वानर्हति लोकत्तुं योग्योभवति तद्भोजनजन्यं फलञ्जन यतीत्यर्थः। छान्दसत्वादेकवचनम्। अथवा बहुवचनानां स्थाने सहस्रमिति मनोरभिमतं गोविन्दराजस्त्वाह सहस्रं गच्छन्तु भूतानीति वेदे ॥ १३१ ॥

ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च।
नहि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः ॥ १३२ ॥

ज्ञानेति। विद्यया उत्कृष्टेभ्योहव्यानि कव्यानि च देयानि न मूर्खेभ्यः। अर्थान्तरन्यासोनामालङ्कारः। नहि रक्ताक्तौ हस्तौ रक्तेनैव विशुद्धौ भवतः किन्तु विमलजलेन। एवं मूर्ख भोजनेन जनितन्दोषं न मूर्खएव भोजितोपहन्ति किन्तु विद्वान् ॥ १३२ ॥

यावतोग्रसते ग्रासान् हव्यकव्येष्वमन्त्रवित्।
तावतोग्रसते प्रेत्य दीप्तशूलर्ष्ट्ययोगुडान् ॥ १३३ ॥

अविद्वन्निन्दया विद्वद्दानमेवोक्तं वक्रोक्त्या स्तौति। यावत इति। यत्संख्यकान् ग्रासान् हव्यकव्येषु अवेदविद्भुङ्क्ते तत्संख्यकानेव प्रकृतश्राद्धकर्त्ता ज्वलितशूलर्ष्ट्याख्यायुधलोहपिण्डान् ग्रसते श्राद्धकर्त्तुरवेदमविद्वद्दानफलकथनम्। तथाच व्यासः। ग्रसते यावतः पिण्डान् यस्य वै हविषोनृचः। ग्रसते तावतः शूलान् गत्वा वैवस्वतक्षयम् ॥ १३३ ॥

ज्ञाननिष्ठाद्द्विजाः केचित्तपोनिष्ठास्तथापरे।
तपःस्वाध्यायनिष्ठाश्च कर्म्मनिष्ठास्तथापरे ॥ १३४ ॥

ज्ञानेति। केचिदात्मज्ञानपरा ब्राह्मणा भवन्ति अन्ये प्राजापत्यादितपःप्रधानाः। अपरे तपोऽध्ययननिरताः इतरे यागादिपराः ॥ १३४ ॥

ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः।
हव्यानि तु यथान्यायं सर्व्वेष्वेव चतुर्ष्वपि ॥ १३५ ॥

ततःकिमतआह। ज्ञानेति। ज्ञानप्रधानेभ्यः पित्र्यर्थान्नानि यत्नाद्दातव्यानि। दैवान्नानि पुनः न्यायावधृतार्थशास्त्रानुसारेण चतुर्भ्योपि ॥ १३५ ॥

अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः।
अश्रोत्रियो वा पुत्रः स्यात्पिता स्याद्वेदपारगः॥१३६॥

अश्रोत्रियइति। योऽश्रोत्रियपितृकः स्वयञ्च श्रोत्रियः यः श्रोत्रियपितृकः स्वयं वा अश्रोत्रियः॥ १३६॥

ज्यायांसमनयोर्विद्यात् यस्य स्याच्छ्रोत्रियः पिता।
मन्त्रसम्पूजनार्थन्तु सत्कारमितरोऽर्हति॥ १३७॥

तयोः कः श्रेष्ठइत्युपन्यस्य विशेषमाह। ज्यायांसमिति। अनयोः पूर्व्वश्लोकनिर्द्दिष्टयोर्मध्ये श्रोत्रियपुत्रं स्वयमश्रोत्रियमपि ज्येष्ठं जानीयात् पितृविद्यादरपरमिदम्। यः पुनरश्रोत्रियस्य पुत्रः स्वयञ्च श्रोत्रियः स तदधीतवेदपूजनार्थं पूजामर्हति वेदएव तद्द्वारेण पूज्यतइति पुत्रविद्यादरपरमिदम्। तस्माद्वचनभङ्ग्या श्रोत्रियपुत्रः स्वयञ्च श्रोत्रियः श्राद्धे भोजयितव्यइत्युक्तम्। नतु श्रोत्रियपुत्रस्य स्वयमश्रोत्रियस्यैवाभ्यनुज्ञानं श्रोत्रियायैव दद्यानीति विरोधात् एवञ्च दूरादेव परीक्षेतेति विद्याव्यतिरिक्ताचारादिपरीक्षार्थत्वेनावतिष्ठते॥ १३७॥

न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योस्य संग्रहः।
नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्द्विजम्॥१३८॥

नेति। श्राद्धे न मित्रम्भोजयेत् धनान्तरैरस्य मैत्री सम्पाद नीया। न शत्रुनच मित्रं यं जानीयात्तम्ब्राह्मणं श्राद्धे भोजयेत्॥ १३८॥

यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च।
तस्य प्रेत्य फलं नास्ति श्राद्धेषु च हविःषु च॥ १३९ ॥

यस्येति। मित्रशब्दोयम्भावप्रधानः यस्य मैत्रीप्रधानानि हव्यकव्यानि तस्य पारलौकिकम्फलं न भवतीति फलाभाव कथनपरमिदम्। प्रेत्येति परलोके इत्यर्थे शब्दान्तरमव्यय मिदं नतु क्त्वान्तं तेनासमानकर्त्तृकत्वे कथं क्त्वा इति नाश ङ्कनीयम्॥ १३९ ॥

यः सङ्गतानि कुरुते मोहाच्छ्राद्धेन मानवः। स
स्वर्गाच्च्यवते लोकाच्छ्राद्धमित्रोद्विजाधमः ॥ १४० ॥

स्वर्गफलं श्राद्धस्य दर्शयितुम्पूर्व्वोक्तफलाभावमेव विशेषेण कथयति। यइति। योमनुष्यः सङ्गतानि मित्रभावं श्राद्धेन

भिन्नतया श्राद्धेन कुरुते श्राद्धमेव मित्रलाभहेतुत्वान्मित्रं यस्य स श्राद्धमित्रो द्विजापसदः स स्वर्गलोकाच्च्यवते तं न प्राप्नोतीत्यर्थः। श्राद्धस्यापि स्वर्गफलत्वमाह। याज्ञवल्क्यः। आयुःप्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च। प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः॥ १४०॥

सम्भोजनी साभिहिता पैशाची दक्षिणा द्विजैः।
इहैवास्ते तु सा लोके गौरन्धे वैकवेश्मनि॥ १४१॥

सम्भोजनीति। सा दक्षिणादानक्रिया सम्भोजनी सह भुज्यते यया सा सम्भोजनी गोष्ठी बहुपुरुषभोजनात्मिका पिशाचधर्मत्वात् पैशाची मन्वादिभिरुक्ता। सा च मैत्रीप्रयोजनकत्वान्न परलोकफला इह लोके एवास्ते। यथाऽन्धा गौरेकस्मिन्नेव गृहे तिष्ठति न गृहान्तरगमनक्षमा॥ १४१॥

यथेरिणे वीजमुप्त्वा न वप्ता लभते फलम्। तथानृचे हविर्दत्वा न दाता लभते फलम्॥ १४२॥

यथेति। ईरिणमूषरदेशो यत्र वीजमुप्तं न प्ररोहति तत्र यथा वीजमुप्त्वा कर्षकोन फलं प्राप्नोति एवमविदुषे श्राद्धदानफलं दाता न प्राप्नोतीति॥ १४२॥

दातॄन् प्रतिग्रहीतॄंश्च कुरुते फलभागिनः। विदुषे दक्षिणां दत्त्वा विधिवत्प्रेत्य चेह च ॥ १४३ ॥

दातॄनिति। वेदतत्त्वविदे यथाशास्त्रं दत्तं ऐहिकामुष्मिकफलभागिनो दातॄन् करोति ऐहिकं फलं यथाशास्त्रानुष्ठानेन लोके ख्यातिरूपमानुषङ्गिकमिति मेधातिथिगोविन्दराजौ। वयन्त्वायुरादिकमेवैहिकफलं ब्रूमः। आयुः प्रजां धनं विद्यामित्याद्यैहिकामुष्मिकादिफलत्वेनापि श्राद्धस्य याज्ञवल्क्यादिभिरुक्तत्वात्। प्रतिग्रहीतॄंश्च श्राद्धलब्धधनानुष्ठितयागादिफलेन परलोके सफलान् कुरुते। अन्यायार्जितधनानुष्ठितयागादेरफलप्रदत्वात्। इह लोके न्यायार्जितधनारब्धकृष्यादिफलातिशयलाभात्सफलान्कुरुते ॥ १४३ ॥

कामं श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम्। द्विषता हि हविर्भुक्तम्भवति प्रेत्य निष्फलम् ॥ १४४ ॥

काममिति। वरं विद्वद्ब्राह्मणाभावे गुणवन्मित्रं भोजयेत्। नतु विद्वांसमपि शत्रुं यतः शत्रुणा श्राद्धभुक्तम्परलोके निष्फलम्भवति यथोक्तपात्राभावे मित्रप्रतिप्रसवार्थमिदम् ॥ १४४ ॥

यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्। शाखान्तगमथाध्वर्युं छन्दोगन्तु समाप्तिकम्॥ १४५ ॥

श्रोत्रियायैव देयानीत्यनेन छन्दोमात्राध्यायिनि श्रोत्रियशब्दप्रयोगात्तदाश्रयणमावश्यकमुक्तं इदानीन्त्वधिकफलार्थं मन्त्रब्राह्मणात्मकत्स्नशाखाध्यायिनि श्रोत्रिये दानमाह। यत्नेनेति। ऋग्वेदिनं मन्त्रब्राह्मणात्मकशाखाध्यायिनं यत्नतोभोजयेत्। तथाविधमेव यजुर्वेदिनं वेदस्य पारं गच्छतीति वेदपारगः शाखाया अन्तं गच्छतीति शाखान्तगः समाप्तिरस्यास्तीति समाप्तिकः सर्वैरेव शब्दैर्मन्त्रब्राह्मणात्मकत्स्नशाखाध्येताभिहितः॥ १४५ ॥

एषामन्यतमोयस्य भुञ्जीत श्राद्धमर्चितः। पितॄणान्तस्य तृप्तिःस्याच्छाश्वती साप्तपौरुषी॥ १४६ ॥

तद्भोजने अधिकम्फलमाह। एषामिति। एषां संपूर्णशाखाध्यायिनां बह्वृचादीनां मध्यादन्यतमोयस्य सम्यक् पूजितः सन् श्राद्धे भुङ्क्ते तस्य पुत्रादिसप्तपुरुषाणां शाश्वती अविच्छिन्ना पितॄणान्तृप्तिः स्यात्। साप्तपौरुषीति। अनुशतिकादित्वादुभयपदवृद्धिः। तस्य चाकृतिगणत्वात्॥ १४६ ॥

एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः। अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः॥ १४७॥

एष इति। हव्यकव्ययोरुभयोरेव प्रदाने यदसम्बन्धिश्रोत्रियादिभ्यो दीयतइति अयं मुख्यः कल्पउक्तः। 'अयन्तु मुख्याभावे वक्ष्यमाणोऽनुकल्पोज्ञातव्यः सर्व्वदा साधुभिरनुष्ठितः॥ १४७॥

मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम्। दौहित्रं विट्पतिम्बन्धुमृत्विग्याज्यौ च भोजयेत्॥ १४८॥

मातामहमिति। स्वस्रीयोभागिनेयः। गुरुर्विद्यागुरुराचार्य्यादिः। विट् दुहिता तस्याः पतिः विट्पतिर्जामाता। बन्धुर्मातृष्वसृपितृष्वसृपुत्रादिः एतान्मातामहादीन् दश मुख्यश्रोत्रियाद्यसम्भवे भोजयेत्॥ १४८॥

न ब्राह्मणम्परीक्षेत दैवे कर्मणि धर्म्मवित्। पित्र्ये कर्म्मणि तु प्राप्ते परीक्षेत प्रयत्नतः॥ १४९॥

धर्मज्ञोदैवश्राद्धे भोजनार्थं न ब्राह्मणं यत्नतः परीक्षेत लोकप्रसिद्धिमात्रेणासौ साधुतया भोजयितव्यः पित्र्ये पुनः कर्मण्युपस्थिते पितृपितामहाद्याभिजनपरीक्षा कर्त्तव्येति परीक्षाशब्दस्यार्थः॥ १४९॥

ये स्तेनपतितक्लीवा ये च नास्तिकवृत्तयः। तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत्॥ १५०॥

य इति। स्तेनश्चौरः स च सुवर्णचौरादन्यः तस्य पतित शब्देनैव ग्रहणात्। पतितो महापातकी। क्लीवो नपुंसकः। नास्ति कवृत्तिर्नास्ति परलोक इत्येवं वृत्तिः प्रवर्त्तनं यस्य एतान् दैवपित्र्यकृत्ययोरुभयोरेवायोग्यान्मनुरब्रवीदिति मनुग्रहणं निषेधादरार्थं सर्व्वधर्माणामेव मनुनोक्तत्वात्॥ १५०॥

जटिलञ्चानधीयानन्दुर्व्वलङ्कितवन्तथा। याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत्॥ १५१॥

जटिलमिति। जटिलो ब्रह्मचारी। मुण्डो वा जटिलो वा स्यादित्युक्तं ब्रह्मचार्य्युपलक्षणत्वात् जटिलत्वस्य मुण्डोपि निषिध्यते। अनधीयानं वेदाध्ययनरहितं यस्योपनयनमात्रं कृतं न वेदादेशः। नैनास्वीकृतवेदस्यापि ब्रह्मचारिणो वेदाध्ययन कर्त्तुरभ्यनुज्ञानार्थोऽयं निषेधः। अतः श्रोत्रियायैव देयानीति ब्रह्मचारीतरविषयम्। दुर्वलो दुश्चर्मा। मेधातिथिस्तु। दुर्वाल मिति पठित्वा खलतिर्लोहितकेशो वा दुश्चर्मा वा इत्यर्थत्रयमुक्त वान्। कितवो द्यूतकृत्। पूगयाजका वहुयाजकाः पूगः क्रमुक

छन्दयोरित्याभिधानिकाः। अतएव वशिष्ठः। यश्चापि वक्रया ज्यः स्यात् यश्चापनयते वस्त्रूनिति। तान् श्राद्धे न भोजयेदिति न दैवे निषेधो यत्रोभयत्रनिषेधोमनोरभिमतः तत्र हव्यकव्य ग्रहणमुभयत्रेतिवा करोति॥ १५१॥

चिकित्सकान्देवलकान्मांसविक्रयिणस्तथा। विपणेन च जीवन्तोवर्ज्याः स्युर्हव्यकव्ययोः॥ १५२॥

चिकित्सेति। चिकित्सकोभिषक्। देवलः प्रतिमापरिचारकः। वर्त्तनार्थत्वेनैतत्कर्मकुर्वतोयं निषेधः नतु धर्मार्थम् देवकोषोपजीवी च नाम्ना देवलकोभवेदिति देवलवचनात्। मांसविक्रयिणः सकृदपि सद्यः पतति मांसेनेति लिङ्गात्। विपणेनेति। विपणोवणिज्या तया जीवन्तः। हव्यकव्ययोरित्यभिधानात् दैवे पित्र्ये चैते त्याज्याः॥ १५२॥

प्रेष्योग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः। प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषिस्तथा॥ १५३॥

प्रेष्यइति। भृतिग्रहणपूर्व्वकं ग्रामाणां राज्ञश्चाज्ञाकारि कुत्सितनखकृष्णदन्तगुरुप्रतिकूलाचरणशीलत्यक्तश्रौतस्मार्त्ताग्निकलापजीविनश्च हव्यकव्ययोर्वर्ज्या इति पूर्व्वस्यैवायानुषङ्गः उत्तरत्र च॥ १५३॥

यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः।
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च ॥ १५४ ॥

यक्ष्मीति। यक्ष्मी क्षयरोगी। पशुपालो वृत्त्यर्थतया छागं मेषादिपोषकः। परिवेत्तृपरिवित्ती वक्ष्यमाणलक्षणौ। निराकृतिः पञ्चमहायज्ञानुष्ठानरहितः तथा च छन्दोगपरिशिष्टं। निराकर्त्तामरादीनां सविज्ञेयो निराकृतिः। ब्रह्मद्विट् ब्राह्मणानां द्वेष्टा। गणाभ्यन्तरो गणार्थोत्सृष्टमठधनाद्युपजीवी ॥ १५४ ॥

कुशीलवोऽवकीर्णी च वृषलीपतिरेव च। पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥ १५५ ॥

कुशीलवइति। कुशीलवो नर्त्तनवृत्तिः। अवकीर्णी स्त्रीसम्पर्कात् विप्लुतब्रह्मचर्य्यः प्रथमाश्रमी यतिश्च। वृषलीपतिः सवर्णामपरिणीय कृतशूद्राविवाहः। पौनर्भवः पुनर्भूपुत्रो वक्ष्यमाणः। उपपतिर्यस्य जायाजारो गृहेस्ति ॥ १५५ ॥

भृतकाध्यापको यश्च भृतकाध्यापितस्तथा। शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ ॥ १५६ ॥

भृतेति। भृतिर्वेतनं तद्ग्राही भृतकः सन् योऽध्यापकः स तथा एव भृतकाध्यापितः। शूद्रशिष्यो व्याकरणादौ गुरुश्च

तस्यैव। वाग्दुष्टः परुषभाषी। अभिशस्तइत्यन्ये। कुण्डगोलकौ वक्ष्यमाणौ ॥ १५६ ॥

अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा। ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ॥ १५७ ॥

अकारणेति। मातुः पितुर्गुरुणाञ्च परित्यागकारणं विना त्यक्ता शुश्रूषादेरकर्त्ता। पतितैश्चाध्ययनकन्यादानादिभिः सम्बन्धैः सम्पर्कं गतः। पतितत्वादेवास्य निषेधइति चेत् न संवत्सरात्प्रागिदर्भविष्यति संवत्सरेण पततीति वक्ष्यमाणत्वात् ॥ १५७ ॥

आगारदाही गरदः कुण्डाशी सोमविक्रयी। समुद्रयायी वन्दी च तैलिकः कूटकारकः ॥ १५८ ॥

आगारेति। गृहदाहकः। मरणहेतुद्रव्यस्य दाता कुण्डस्य वक्ष्यमाणस्य योऽन्नमश्नाति। प्रदर्शनार्थत्वात्कुण्डस्य गोलकस्यापि ग्रहणम्। अतएव देवलः। अमृते जारजः कुण्डोमृते भर्त्तरि गोलकः। यस्तयोरन्नमश्नाति सकुण्डाशीति कथ्यते। सोमलताविक्रेता। समुद्रे योवहित्रादिना दीपान्तरङ्गच्छति। वन्दी स्तुतिपाठकः। तैलार्थं तिलादिवीजानाम्पेष्टा। साक्षिवादे कूटस्य मृषावादकस्य कर्त्ता ॥ १५८ ॥

पित्रा विवदमानश्च कितवोमद्यपस्तथा। पापरोग्यभिशस्तश्च दाम्भिकोरसविक्रयी॥१५९॥

पित्रेति। पित्रा सह शास्त्रार्थे लौकिके वा वस्तुनि निरर्थं योविवदते। कितवोद्यः स्वयन्देवितुमनभिज्ञः स्वार्थं परान् देवयति न स्वयन्देविता तस्योक्तत्वात्। नच सभिकः तस्य द्यूतवृत्तिपदेनाभिधास्यमानत्वात्। केकरइतिपाठे तिर्य्यग्दृष्टिः। सुराव्यतिरिक्तमद्यपाता। कुष्ठी। अनिर्णीतेपि तस्मिन्महापातकादौ जाताभिशापः। छद्मना धर्मकारी। इक्ष्वादिरसविक्रेता॥१५९॥

धनुःशराणां कर्त्ता च यश्चाग्रेदिधिषूपतिः। मित्रध्रुक् द्यूतवृत्तिश्च पुत्राचार्य्यस्तथैव च॥१६०॥

धनुरिति। धनूंषि शरांश्च यः करोति। ज्येष्ठायां सोदरभगिन्यामनूढायां या कनिष्ठा विवाहेन दीयते साग्रेदिधिषूस्तस्याःपतिः तथाच लौगाक्षिः। ज्येष्ठायां यद्यनूढायाङ्कन्यायामुह्यतेनुजा। साचाग्रेदिधिषूर्ज्ञेया पूर्व्वा तु दिधिषूः स्मृता। गोविन्दराजस्तु भ्रातुर्मृतस्य भार्य्यायामित्यनेनाग्रेदिधिषूपतिरेव वृत्तिवशादग्रेपदलोपेन दिधिषूपतिरिति मनुना

वक्ष्यते स इह गृह्यत इत्याह। मित्रध्रुक् योमित्रस्यापकारे वर्त्तते। द्यूतवृत्तिः सभिकः। पुत्रेणाध्यापितः पिता मुख्येन पुत्राचार्य्यत्वासम्भवात्॥ १६० ॥

भ्रामरी गण्डमालीच श्वित्र्यथोपिशुनस्तथा। उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च॥ १६१॥

भ्रामरीति। अपस्मारी। गण्डमालाख्यव्याध्युपेतः श्वेत कुष्ठयुक्तः दुर्जनः उन्मादवान् अचक्षुर्वेदनिन्दाकरः॥ १६१॥

हस्तिगोश्वोष्ट्रदमकोनक्षत्रैर्यश्च जीवति। पक्षिणा म्पोषकोयश्च युद्धाचार्य्यस्तथैव च॥ १६२॥

हस्तीति। हस्तिगवाश्वोष्ट्राणां विनेता। नक्षत्रशब्देन ज्योतिः शास्त्रमुपलक्ष्यते तेन योवर्त्तते। पक्षिणाम्पञ्जरबद्धानां क्रीड़ाद्यर्थं पोषिता। युद्धार्थमायुधविद्योपदेशकः॥ १६२॥

स्रोतसाम्भेदकोयश्च तेषाञ्चावरणे रतः। गृह सम्वेशकोदूतोवृक्षारोपकएव च॥ १६३॥

स्रोतसामिति। प्रवहज्जलानां सेतुभेदादिना देशान्तर नेता। तेषामेवावरणकर्त्ता निजगतिप्रतिबन्धकः गृहसनि.

वेश्मोपदंशकोवास्तुविद्योपजीवी। दूतोराजग्रामप्रेष्यव्यतिरिक्तोपि। वृक्षरोपयिता वेतनग्रहणेन नतु धर्मार्थी पश्चात्तरोपी नरकन्नयातीति विधानात्॥१६३॥

श्वक्रीडी श्येनजीवी च कन्यादूषकएव च।
हिंस्रोवृषलवृत्तिश्च गणानाञ्चैव याजकः॥१६४॥

श्वक्रीडीति। क्रीडार्थं शुनः पोषयति। श्येनैर्जीवति क्रयविक्रयादिना। कन्याभिगन्ता। हिंसारतः। शूद्रोपकृष्टवृत्तिः। वृषलनुचइति पाठान्तरम् वृषला एव केवलाः पुत्रायस्येत्यर्थः। विनायकादिगणयागकृत्॥१६४॥

आचारहीनः क्लीवश्च नित्यं याचनकस्तथा।
कृषिजीवी श्लीपदी च सद्भिर्निन्दितएव च॥१६५॥

आचारेति। गुर्वतिथिप्रत्युत्थानाद्याचारवर्जितः। क्लीवो धर्मकृत्यादौ निरुत्साहः नपुंसकस्योक्तत्वात्। नित्यं याचनेन परोद्वेजकः। स्वयं कृतया कृष्या योजीवति वृत्त्यन्तरेपि वा सम्भवत्यस्वयंकृतयापि। श्लीपदी व्याधिना स्थूलचरणः। केनापि निमित्तेन साधूनां निन्दाविषयः॥१६५॥

औरभ्रिको माहिषिकः परपूर्व्वापतिस्तथा।
प्रेतनिर्हारकश्चैव वर्जनीयाः प्रयत्नतः ॥ १६६ ॥

औरभ्रिकेति। मेषमहिषजीवनः। परपूर्व्वा पुनर्भूस्तस्याः पतिः प्रेतनिर्हारको धनग्रहणेन नतु धर्म्मार्थं। एतद्वै परमन्तपायत्प्रेतमरण्यं हरन्तीति श्रुत्या विहितत्वात् ॥ १६६ ॥

एतान्विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान्।
द्विजातिप्रवरो विद्वानुभयत्र विवर्ज्जयेत् ॥ १६७ ॥

एतानिति। एतान् स्तेनादीनिह जन्मनि निन्दिताचारान् काणादींश्च पूर्व्वजन्मार्ज्जितनिन्दितकर्म्मशेषलब्धकाणादिभावान् साधुभिः सहैकत्र भोजनाद्यनर्हान् ब्राह्मणाधमान् ब्राह्मणश्रेष्ठः शास्त्रज्ञो दैवे पित्र्ये त्यजेत् ॥ १६७ ॥

ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति। तस्मै हव्यं न दातव्यं नहि भस्मनि हूयते ॥ १६८ ॥

ब्राह्मण इति। तृणाग्निर्यथा न हविर्द्दहनसमर्थो हविषि प्रक्षिप्ते शाम्यति निष्फलस्तत्र होमः एवं वेदाध्ययनशून्यो ब्राह्मणस्तृणाग्निसमस्तस्मै दैवोद्देशेन त्यक्तं हविर्न दातव्यं यतो भस्मनि

मङ्क्यते। श्रोत्रियायैव देयानीत्यनेनैवानधीयानस्यापि प्रतिषेध सिद्धौ स्तेनादिवत्पङ्क्तिदूषकत्वज्ञापनार्थं पुनर्वचनम्। अन्येतु दैवे अनधीयान एव वर्जनीयः। अधीयानस्तु काणादिरपि शारीरदोषयुक्तोग्राह्य इत्येतदर्थम्पुनर्वचनम्। अतएवविशिष्टः। अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः। अदूष्यन्तं यमः प्राह पङ्क्तिपावनएव सः। शारीरैः काणत्वादिभिर्नतु स्वय मत्याद्यैस्तेनत्वादिभिः॥ १६८॥

अपाङ्क्तदाने योदातुर्भवत्यूर्ध्वम्फलोदयः। दैवे हविषि पित्र्ये वा तं प्रवक्ष्याम्यशेषतः॥ १६९॥

अपाङ्क्तदाने इति। पङ्क्तिभोजनानर्हब्राह्मणाय दैवे हविषि पित्र्ये वा दत्ते दातुर्योदानादूर्ध्वं फलोदयस्तमशेषमभिधा स्यामि॥ १६९॥

अव्रतैर्यद्द्विजैर्भुक्तम्परिवेत्त्रादिभिस्तथा। अपाङ्क्तेयैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते॥१७०॥

अव्रतैरिति। वेदग्रहणार्थव्रतरहितैस्तथा परिवेत्त्रादिभि रन्यैश्च अपाङ्क्तेयैः स्तेनादिभिर्यत् हव्यं कव्यं भुक्तं तत् रक्षांसि भुञ्जते। निष्फलन्तच्छ्राद्धं भवतीत्यर्थः॥ १७०॥

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥ १७१ ॥

अप्रसिद्धत्वात्परिवेत्त्रादिलक्षणमाह। दारेति। अग्निहोत्रशब्दोऽयमग्निहोत्राद्याधानपरः। यः सहोदरे ज्येष्ठे भ्रातरि अनूढे अनग्निके च दारपरिग्रहं श्रौतस्मार्त्ताग्निग्रहणञ्च कुरुते स परिवेत्ता ज्येष्ठश्च परिवित्तिर्भवति ॥ १७१ ॥

परिवित्तिः परिवेत्ता यया च परिविद्यते। सर्व्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥ १७२ ॥

प्रसङ्गात्परिवेदनसम्बन्धिनां पञ्चानामप्यनिष्टं फलमाह। परीति। परिवित्तिः परिवेत्ता च यया च कन्यया परिवेदनं क्रियते कन्याप्रदाता याजकश्च तद्विवाहहोमकर्त्ता स पञ्चमो येषां ते सर्व्वे नरकं व्रजन्ति ॥ १७२ ॥

भ्रातुर्मृतस्य भार्य्यायां योऽनुरज्येत कामतः। धर्म्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥१७३॥

भ्रातुरिति। मृतस्य भ्रातुर्वक्ष्यमाणनियोगधर्म्मेणापि नियुक्तायां भार्य्यायां सकृत्सकृदृतावृतावित्यादिविधिं हित्वा

कामेनानुरागमभावयेदाश्लेषचुम्बनादि कुर्य्यात्। असक्तदा प्रवर्त्तेत स दिधिषूपतिर्ज्ञातव्यः। अतः श्राद्धनिषिद्धपाचमध्य पाठादस्यापि हव्यकव्यपाचतया निषेधः कल्पनीयः॥ १७३॥

परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ। पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः॥ १७४॥

परति। परदारेषु कुण्डगोलकाख्यौ द्वौ सुतावुत्पद्येते तच जीवत्पतिकायामुत्पन्नः कुण्डोमृतपतिकायाञ्च गोलकः ॥ १७४॥

तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च। दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम्॥१७५॥

ताविति। तौ परभार्य्यायां जातौ कुण्डगोलकावदृष्टाद्य नुपयोगात् प्राणिनाविति व्यपदिष्टौ ब्राह्मणत्वेपितत्कार्य्या भावात्। श्राद्धफलाभावात्परलोके इहलोके चानुषङ्गिक कीर्त्त्यादिफलाभावाद्दत्तानि हव्यकव्यानि दातृणां नाशयेते नाशयतः। प्रदायिभिर्दत्तानि हव्यकव्यानि निष्फलानि कुरुतः॥ १७५॥

अपाङ्क्त्यो यावतः पांक्त्यान्भुञ्जानाननुपश्यति।
तावतां न फलन्तत्र दाता प्राप्नोति बालिशः॥१७६॥

अपामिति। सद्भिः सहैकपङ्क्तिभोजनानर्हः स्तेनादिर्यत्संख्यान् पङ्क्तिभोजनार्हान्पश्यति तावत्संख्यानाम्भोजनस्य फलन्तत्र श्राद्धे दाता न प्राप्नोति। बालिशोऽज्ञः अतः स्तेनादिर्यथा न पश्यति तथा कर्त्तव्यम्॥१७६॥

वीक्ष्यान्धो नवतेः काणः षष्टेः श्वित्री शतस्य तु।
पापरोगी सहस्रस्य दातुर्नाशयते फलम्॥१७७॥

वीक्ष्येति। अन्धस्य वीक्षणासम्भवात् वीक्षणयोग्यदेशसन्निहितोऽसौ पांक्त्यानां नवतेर्भोजनफलं नाशयति एवं काणः षष्टेः श्वेतकुष्ठी शतस्य पापरोगी रोगराजोपहतः सहस्रस्य इत्यन्धादिसन्निधिनिरासार्थं वचनम्। गुरुलघुसंख्याभिधानञ्चेह संख्योपचये दोषगौरवं तत्र च प्रायश्चित्तगौरवमिति दर्शयितुम्॥१७७॥

यावतः संस्पृशेदङ्गैर्ब्राह्मणान् शूद्रयाजकः।
तावतां न भवेद्दातुः फलं दानस्य पौर्त्तिकम्॥१७८॥

यावत इति। शूद्रस्य यज्ञादौ ऋत्विक् यावत्सङ्ख्यान् ब्राह्मणान् स्पृशति आसनेषूपकॢप्तेष्विति आसनभेदस्य वक्ष्यमाणत्वात्

मुख्यस्यासम्भवे यावतां श्राद्धभोजिनाम्पङ्क्तावुपविशति तावतां सम्बन्धि पौर्त्तिकं फलं श्राद्धीयन्दातुर्न भवति। तावताम्पौर्त्तिकं फलं वहिर्वेदिदानाच्च यत्फलंतन्न भवति इतिमेधातिथि गोविन्दराजौ। अतस्तथैव निन्दया निषिद्धगणापठितस्यापि शूद्रयाजकस्यभोजननिषेधः कथ्यते॥ १७८॥

वेदविच्चापि विप्रोऽस्य लोभात्कृत्वा प्रतिग्रहम्।
विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि॥ १७९॥

प्रसङ्गाच्च शूद्रयाजकप्रतिग्रहन्निषेधयति लाघवार्थमन्यत्र निषेधकरणे शूद्रयाजकशब्दोच्चारणङ्कर्त्तव्यं स्यात्। वेदेति। वेदज्ञोपि ब्राह्मणः शूद्रयाजकस्य लोभात्प्रतिग्रहं कृत्वा शीघ्रं शरीरादिना विनाशङ्गच्छति। सुतरामवेदवित्। अपक्वम्मयशरावादिकमिवोदके॥ १७९॥

सोमविक्रयिणे विष्ठा भिषजे पूयशोणितम्। नष्ट न्देवलके दत्तं अप्रतिष्ठन्तु वार्द्धुषौ॥ १८०॥

सोमविक्रयिणइति। सोमविक्रयिणे यद्दत्तं तद्दातुर्भोजनार्थं विष्ठा सम्पद्यते जन्मान्तरे विष्ठाभोजिनाञ्जातौ जायते

इत्यर्थः। एवं पूयशोणितेपि व्याख्येयम्। नष्टं नाशभागितया निष्फलं विवक्षितम्। अप्रतिष्ठमनाश्रयतया निष्फलमेव ॥ १८० ॥

यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत्। भस्मनीव हुतं हव्यन्तथा पौनर्भवे द्विजे ॥ १८१ ॥

यत्त्विति। वाणिजकाय यद्दत्तं श्राद्धे तन्नेहानुषङ्गिककीर्त्यादिफलाय नापि पारलौकिकफलाय भवति। पुनर्भूपुत्राय यद्दत्तं तद्भस्महुतहविःसमन्निष्फलमित्यर्थः॥ १८१

इतरेषु त्वपांक्त्येषु यथोद्दिष्टेष्वसाधुषु। मेदोसृङ्मांसमज्जास्थि वदन्त्यन्नं मनीषिणः॥ १८२ ॥

इतरेष्विति। इतरेभ्योविशेषेणानुक्तफलेभ्यः पङ्क्तिभोजनानर्हेभ्यः स्तेनादिभ्योयथाकीर्त्तितेभ्योयद्दत्तमन्नं तद्दातुर्भोजनार्थं मेदोरुधिरमांसमज्जास्थि भवतीति पण्डितावदन्ति। अत्रापि जन्मान्तरे मेदःशोणितादिभुजां जातिषु जायन्त इत्यर्थः॥ १८२ ॥

अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः। तान्नि
बोधत कार्त्स्न्येन द्विजाग्र्यान्पङ्क्तिपावनान्॥१८३॥

अपाङ्क्त्य इति। एकपङ्क्त्युपविष्टस्तेनादिदूषिता पङ्क्तिर्यैर्ब्राह्मणैः पवित्रीक्रियते तान् पवित्रीकारकान् ब्राह्मणानशेषेण यूयं शृणुत। निषेधादेकपङ्क्तिभोजनासम्भवेपि स्तेनादीनां रहस्य कृताज्ञातदोषविषयत्वेन साधकताऽस्य वचनस्य ॥१८३॥

अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च। श्रोत्रि
यान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः॥१८४॥

अग्र्या इति। सर्व्वेषु वेदेषु चतुर्ष्वपि अग्र्याः श्रेष्ठाः सम्यग्गृहीतवेदाः ब्राह्मणाः पङ्क्तिपावनाः। अतएव यमः। पङ्क्तिपावन गणनायां चतुर्वेदविदेचैवेति पठितवान्। तथा प्रकर्षेणैव उच्यते वेदार्थएभिरिति प्रवचनान्यङ्गानि तेष्वप्यग्र्याः षडङ्ग विदस्तेच चतुर्वेदिनोपि पङ्क्तिपावनाः। न्यायविच्च षडङ्गविदिति पङ्क्तिपावनमध्ये यमेन पृथक् पठितत्वात्। तथा छन्दसा शुद्ध दशपरुषदत्युशनोवचनाद्दशपुरुषपर्य्यन्तमविच्छिन्नवेदसम्प्रदाय वंशजाः पङ्क्तिपावनाः॥१८४॥

त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्।
ब्रह्मदेयात्मसन्तानोज्येष्ठसामग एव च॥१८५॥

त्रिणेति। त्रिणाचिकेतः अध्वर्युवेदभागः तद्व्रतञ्च तद्योगात्पुरुषोपि त्रिणाचिकेतः। पञ्चाग्निरग्निहोत्री। तथाच हारीतः।

पवनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे। सायम्प्रातः प्रदीप्यन्ते सविप्रः पङ्क्तिपावनः। पवमन्यावसथ्याग्निः। पावनः सभ्योग्निः यः शीतापनोदनाद्यर्थमृतुषु देशेष्वपि विधीयते। त्रिसुपर्णावह्वृचां वेदभागः तद्व्रतञ्च तद्योगात्पुरुषोपि त्रिसुपर्णः। षडङ्गानि शिक्षादीनि योव्याचष्टे स षडङ्गवित्। सर्व्वप्रवचनेष्वित्यनेन षडङ्गाध्येतोक्तः। ब्राह्मदेया ब्राह्मविवाहोढा तस्या आत्मसन्तानः पुत्रः। ज्येष्ठसामानि आरण्यके गीयन्ते तेषां गाता एते षट् विज्ञेयाः पंक्तिपावना इत्युत्तरश्लोकेन सम्बन्धः॥ १८५॥

वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः। शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः॥ १८६॥

वेदेति। अनधीत्यापि वेदाङ्गानि गुरूपदेशाधिगतवेदार्थः। प्रवक्ता वेदार्थस्यैव। ब्रह्मचारी प्रथमाश्रमी। सहस्रद इति देयविशेषानुपादानेपि गावाह्वै यज्ञस्य मातर इत्यादिविशेष प्रवृत्तश्रुतिदर्शनात् गोसहस्रदाता वह्वप्रदो वा। शतायुः शतवर्षवयाः। श्रोत्रियायैव देयानीति नियमात्सति श्रोत्रियत्वे उक्तगुणयोगात्पङ्क्तिपावनत्वम्॥ १८६॥

पूर्वेद्युरपरेद्युर्वा श्राद्धकर्म्मण्युपस्थिते। निमन्त्रयेत त्र्यवरान्सम्यग्विप्रान्यथोदितान्॥ १८७॥

पूर्वेद्युरिति। श्राद्धकर्मणि प्राप्ते श्राद्धाहात्पूर्वदिने तदसम्भवे श्राद्धदिन एवोक्तलक्षणान् ब्राह्मणान्सम्यगिति सत्कृत्य

निमन्त्रयेत्। त्र्योवरान्न्यूनायेषां ते त्र्यवराः नतु तानेव एकैक भोजनस्याप्युक्तत्वात्॥ १८७ ॥

निमन्त्रितोद्विजः पित्र्ये नियतात्मा भवेत्सदा। नच छन्दांस्यधीयीत यस्य श्राद्धञ्च तद्भवेत्॥ १८८ ॥

निमन्त्रितइति। श्राद्धे निमन्त्रितोब्राह्मणोनिमन्त्रणादारभ्य श्राद्धाहोरात्रं यावत् मैथुननिवृत्तिसंयमनियमवान् स्यात्। अवश्यकर्त्तव्यजपादिवर्ज्जं वेदाध्ययनञ्च न कुर्य्यात्। श्राद्धकर्त्तापि तथैव स्यात्॥ १८८ ॥

निमन्त्रितान् हि पितरउपतिष्ठन्ति तान् द्विजान्। वायुवच्चानुगच्छन्ति तथासीनानुपासते ॥ १८९ ॥

निमन्त्रितानिति। पूर्व्वनियमविधेरयमनुवादः यस्मात्तान् ब्राह्मणान्निमन्त्रितानदृश्यरूपेण पितरोऽधितिष्ठन्ति। प्राणवायुवत् गच्छतोऽनुगच्छन्ति तथोपविष्टेषु तेषु समीपउपविशन्ति तस्मान्नियता भवेयुः॥ १८९ ॥

केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः। कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत्॥ १९० ॥

केतितइति। हव्यकव्ये यथाशास्त्रं निमन्त्रितोब्राह्मणः स्वीकृत्य केनापि प्रकारेण भोजनमकुर्व्वाणः तेन पापेन जन्मान्तरे शूकरोभवति॥ १९० ॥

आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते। दातु
र्यत् दुष्कृतङ्किञ्चित्तत्सर्वं प्रतिपद्यते ॥ १९१ ॥

नियतात्मा भवेत्सदेत्यनेन मैथुननिषेधे कृतेपि वृषलीगमन
स्याधिकदोषज्ञापनायाह। आमन्त्रितस्त्विति। वृषली शूद्रा
तत्र मूढत्वात् श्राद्धे निमन्त्रितः सन् यो वृषल्या सार्द्धं स्त्रीपुंस
धर्मेण सुरतादिना रमते स दातुर्यत्पापं तत्प्राप्नोति पापो
त्पत्तिमात्रं विवक्षितम्। अन्यथा दातरि अपापे पापं न जायते।
नचेदं दातुः प्रायश्चित्ततया विहितं येनासौ पापान्मुच्यते।
मेधातिथिगोविन्दराजौ तु सामान्येन ब्रह्मचर्य्यस्य विधानात्
वृषस्यन्ती वृषलयति भर्त्तारमिति योगाश्रयणेन श्राद्धभोक्तु
रूढा ब्राह्मण्यपि वृषल्यभिमतात्याहतुः ॥ १९१ ॥

अक्रोधनाः शौचपराः सततम्ब्रह्मचारिणः।
न्यस्तशस्त्रामहाभागाः पितरः पर्व्वदेवताः ॥ १९२ ॥

अक्रोधना इति। क्रोधरहिताः बहिःशौचं मृदादिभ्यां
अन्तःशौचं रागद्वेषादित्यागस्तद्युक्ताः सर्व्वदा स्त्रीसंयोगादि
शून्याः त्यक्तयुद्धाः दयाद्यष्टगुणयोगो महाभागता तद्वन्तः
अनादिदेवतारूपाः पितरस्तस्मात्क्रोधादिरहितेन भोक्त्रा
कर्त्रा च भवितव्यम् ॥ १९२ ॥

यस्मादुत्पत्तिरेतेषां सर्वेषामप्यशेषतः। ये च
यैरुपचर्य्याः स्युर्नियमैस्तान्निबोधत ॥ १९३ ॥

यस्मादिति। एतेषां सर्व्वेषाम्पितॄणां यस्य सकाशादुत्पत्तिर्ये च पितरो यैर्ब्राह्मणादिभिर्यैर्नियमैः शास्त्रोक्तकर्मभिरुपचरणीया भवेयुः तान्साकल्येन शृणुत ॥ १९३ ॥

मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः। तेषा
मृषीणां सर्वेषाम्पुत्राः पितृगणाः स्मृताः ॥ १९४ ॥

मनोरिति। हिरण्यगर्भापत्यस्य मनोर्ये मरीच्यादयः पुत्राः पूर्वमुक्ताः मरीचिमत्र्यङ्गिरसावित्यादिना तेषामृषीणां सर्वेषां सोमपादयः पितृगणाः पुत्रामन्वादिभिः स्मृताः ॥ १९४ ॥

विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः। अ
ग्निष्वात्ताश्च देवानां मारीच्यालोकविश्रुताः॥१९५॥

विराडिति। विराट्सुताः सोमसदोनाम साध्यानाम्पितरः। अग्निष्वात्ता मरीचेः पुत्रा लोकविख्याता देवानाम्पितरः ॥ १९५ ॥

दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम्। सुपर्ण किन्नराणाञ्च स्मृतावर्हिषदोऽत्रिजाः ॥ १९६ ॥

दैत्येति। दैत्यादीनाम्प्रथमाध्यायोदितभेदानां अत्रिपुत्रा वर्हिषदोनाम पितरः स्मृताः ॥ १९६ ॥

सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः। वैश्या नामाज्यपा नाम शूद्राणान्तु सुकालिनः ॥ १९७ ॥

सोमेति। ब्राह्मणप्रभृतीनाञ्चतुर्णां वर्णानां सोमपाप्रभृतय श्चत्वारः पितरः स्मृताः ॥ १९७ ॥

सोमपास्तु कवेः पुत्राहविष्मन्तोङ्गिरः सुताः। पुल स्त्यस्याज्यपाः पुत्रावशिष्ठस्य सुकालिनः ॥ १९८ ॥

सोमेति। कवेर्भृगोः सोमपाः पुत्राःहविर्भुजएव हविष्मन्तः अङ्गिरसः पुत्राः। आज्यपाः पुलस्त्यसुताः। सुकालिनोवशिष्ठ सुताः ॥ १९८ ॥

अग्निदग्धानग्निदग्धान् काव्यान्वर्हिषदस्तथा। अ ग्निष्वात्तांश्च सौम्यांश्च विप्राणामेवनिर्दिशेत्॥१९९॥

अग्नीति। अग्निदग्धानग्निदग्धकाव्यवर्हिषदग्निष्वात्त सौम्याख्यान्पराग्नितन् विप्राणामेव जानीयात् ॥ १९९ ॥

यएते तु गणामुख्याः पितृणाम्परिकीर्त्तिताः।
तेषामपीह विज्ञेयम्पुत्रपौत्रमनन्तकम् ॥ २०० ॥

यइति। य एते प्रधानभूताः पितृगणाउक्तास्तेषामपीह जगति पितर एव पुत्रपौत्राद्यनन्ताविज्ञेयाः पुत्रपौत्रमिति गवाश्वप्रभृतीनि चेत्येकवद्भावः। एतच्छ्लोकसूचिताएव वरोवरेण्यइत्यादयोऽन्येपि पितृगणामार्कण्डेयादिपुराणादिषु श्रूयन्ते ॥ २०० ॥

ऋषिभ्यः पितरोजाताः पितृभ्योदेवदानवाः।
देवेभ्यस्तु जगत्सर्व्वं चरं स्थाण्वनुपूर्व्वशः ॥ २०१ ॥

ऋषिभ्यइति। ऋषिभ्योमरीच्यादिभ्य उक्तक्रमेणपितरोजाताः पितृभ्योदेवदानवाजाताः देवेभ्यश्च जङ्गमस्थावरञ्जगत्क्रमेण जातं तस्मात्सोमपादिप्रभवत्वात् स्वपितृपितामहप्रपितामहानां श्राद्धे सोमपादयोपि पूजनीयाः तेपूजिताःसन्त श्राद्धफलदानाय कल्पन्तइति। प्रकृतस्य पित्रादिश्राद्धस्तुत्यर्थोयं सोमपादिपितृगणोपन्यासः। अथवा आवाहनकाले निजपित्रादयोब्राह्मणादिभिः सोमपादिरूपेण ध्येया एवं व्यवस्था ज्ञानमनुष्ठानपरता च स्यात् ॥ २०१ ॥

राजतैर्भाजनैरेषामथोवा राजतान्वितैः। वार्य्यपि श्रद्धया दत्तमक्षयायोपकल्पते॥ २०२॥

राजतैरिति। एषाम्पितॄणां रूप्यमयपात्रैरूप्ययुक्तैर्व्वा ताम्रादिपात्रैर्जलमपि श्रद्धया दत्तमक्षयसुखहेतुः सम्पद्यते किम्पुनः प्रशस्तपायसादीति॥ २०२॥

देवकार्य्याद्द्विजातीनाम्पितृकार्य्यं विशिष्यते। दैवं हि पितृकार्य्यस्य पूर्व्वमाप्यायनं स्मृतम्॥ २०३॥

देवेति। देवानुद्दिश्य यत्क्रियते तद्देवकार्य्यं। ततः पितृकार्य्यं द्विजातीनां विशेषेण कर्त्तव्यमुपदिश्यते। अनेन पितृश्राद्धस्य प्राधान्यं दैवन्त्वाङ्गमित्याह। एतदेव स्पष्टयति। यतो दैवं कर्म्म पितृकृत्यस्य पूर्व्वं सदाप्यायनं परिपूरकं स्मृतम्॥ २०३॥

तेषामारक्षभूतन्तु पूर्व्वं दैवं नियोजयेत्। रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम्॥ २०४॥

तेषामिति। आरक्षो रक्षा तेषाम्पितॄणां रक्षाभूतं दैवं विश्वेदेव ब्राह्मणम्पूर्व्वं निमन्त्रयेत् यस्मात् रक्षावर्जितं श्राद्धं राक्षसा आच्छिन्दन्ति॥ २०४॥

दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद्भवेत्।
पित्राद्यन्तन्त्वीहमानः क्षिप्रं नश्यति सान्वयः ॥२०५॥

दैवेति। यतएवमतः तच्छ्राद्धं दैवाद्यन्तं दैवे कर्म्मणी आद्यन्तावारम्भावसाने यस्य तत्तथा। एतेनेदमुक्तं निम न्त्रणादौ सर्व्वं दैवपूर्व्वं विसर्ज्जनन्तु देवानां शेषे। अतएव देवलः। यत्तत्र क्रियते कर्म्म पैतृके ब्राह्मणान्प्रति। तत्सर्व्वं [illegible]व कर्त्तव्यं वैश्वदेविकपूर्व्वकम्। नतु तच्छ्राद्धं पित्रुपक्रमा वसानम्। पित्राद्यन्तं तदनुतिष्ठन्सन्तानः शीघ्रं विनश्यति ॥२५॥

शुचिन्देशं विविक्तञ्च गोमयेनोपलेपयेत्।
दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत् ॥ २०६ ॥

शुचिमिति। अस्थ्यङ्गाराद्यनुपहतं देशन्निर्जनञ्च गोमये नोपलेपयेत्। दक्षिणादिगवनतञ्च प्रयत्नतः सम्पादयेत् ॥२०६॥

अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि।
विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥ २०७॥

अवेति। चोक्षाः स्वभावशुचयोऽरण्यादिप्रदेशास्तेषु नद्यादितीरेषु तथा निर्जनप्रदेशेषु दत्तेन श्राद्धादिना सर्व्वदा पितरस्तुष्यन्ति ॥२०७॥

आसनेषूपक्लृप्तेषु बर्हिष्मत्सु पृथक्पृथक्। उपस्पृष्टोदकान् सम्यग्विप्रांस्तानुपवेशयेत्॥ २०८॥

आसनेति। तत्र च देशे आसनेषु पृथक्पृथक् विन्यस्तेषु सकुशेषु प्रागामन्त्रितब्राह्मणान्सम्यक् कृतस्नानाचमनानुपवेशयेत्। अत्र दैवब्राह्मणासने कुशद्वयं पित्रासनेषु च प्रत्येकन्दक्षिणाय एकः कुशो देयः। तदाह देवलः। येचात्र विश्वेदेवानां विप्राः पूर्व्वनिमन्त्रिताः। प्राङ्मुखान्यासनान्येषां द्विदर्भोपहृतानि च। दक्षिणामुखयुक्तानि पितॄणामासनानि च। दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः। दक्षिणामुखयुक्तानि दक्षिणाग्राणि अग्रं कुशमूलापेक्षया॥ २०८॥

उपवेश्य तु तान्विप्रानासनेष्वजुगुप्सितान्। गन्धमाल्यैः सुरभिभिरर्च्चयेद्देवपूर्व्वकम्॥ २०९॥

उपेति। तान्विप्रानिन्दितानासनेषूपवेश्य कुङ्कुमादिगन्धमाल्यधूपादिभिः स्पृहणीयगन्धैर्दैवपूर्व्वमर्चयेत्॥ २०९॥

तेषामुदकमानीय सपवित्रांस्तिलानपि। अग्नौ कुर्य्यादनुज्ञातो ब्राह्मणो ब्राह्मणैः सह॥ २१०॥

तेषामिति। तेषां ब्राह्मणानामर्घोदकपवित्रतिलान् संमिश्रान् दत्वा तैर्ब्राह्मणैः सहानुज्ञातोऽग्नौ वक्ष्यमाणं होमं

कुर्य्यात्। अनुज्ञासामर्थ्याच्च प्रार्थनापि पूर्व्वङ्कर्त्तव्या। साच स्वगृह्यानुसारेण करवाणि करिष्य इत्यादिका अनुज्ञापि ओं नित्यंवंरूपा कुरुष्वेति वा ॥ २१० ॥

अग्नेः सोमयमाभ्याञ्च कृत्वाप्यायनमादितः।
हविर्दानेन विधिवत्पश्चात्सन्तर्पयेत्पितॄन् ॥ २११ ॥

अग्नेरिति। अग्नेः सोमयमयोश्च विधिवत्पर्य्युक्षणादिपूर्व्वं हविर्दानेन प्रीणनमादौ कृत्वा पश्चादन्नादिना पितॄंस्तर्पयेत्। सोमयमयोर्द्वन्द्वनिर्द्देशेपि पृथगेव देवतात्वं सहादिशब्दप्रयोगाभावात्। यत्र साहित्यं विवक्षितं तत्र सहादिशब्दङ्करोतीत्युक्तंप्राक् ॥ २११ ॥

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्।
योह्यग्निः सद्विजोविप्रैर्म्मन्त्रदर्शिभिरुच्यते ॥ २१२ ॥

अग्न्यभावेत्विति। अग्न्यभावे पुनर्ब्राह्मणहस्तएव उक्ता हुतिश्चयन्द्द्यात्। यस्माद्य एवाग्निः सएवब्राह्मणइति वेदविद्भिर्ब्राह्मणैरुक्तः। अग्न्यभावश्चानुपनीतस्य सम्भवति उपनीतस्य समावृत्तस्य च पाणिग्रहणात्पूर्व्वं मृतभार्य्यस्य वा ॥ २१२ ॥

अक्रोधनान्सुप्रसादान्वदन्त्येतान्पुरातनान्। लोकस्याप्यायने युक्तान् श्राद्धदेवान्द्विजोत्तमान् ॥ २१३ ॥

अक्रोधेति। क्रोधशून्यान्सुप्रसादान् प्रसन्नमुखान् प्रवाहानादितया पुरातनान् अग्नौ प्रास्ताहुतिरितिन्यायेन लोकवृद्धये उद्युक्तान् श्राद्धपात्रभूतान्मन्वादयोवदन्ति तस्माद्देवतुल्यत्वाच्छ्राद्धब्राह्मणस्य तद्धस्ते दातव्यमिति पूर्व्वविध्यनुवादः ॥ २१३ ॥

अपसव्यमग्नौ कृत्वा सर्व्वमावृत्यरिक्रमम्। अपसव्येन हस्तेन निर्व्वपेदुदकम्भुवि ॥ २१४ ॥

अपेति। अग्नौ पर्य्युक्षणाद्यक्तमुक्तं अग्नौकरणहोमानुष्ठानक्रममपसव्यं दक्षिणसंस्थं कृत्वा ततोपसव्येन दक्षिणहस्तेन पिण्डाधारभूतायाम्भुव्युदकं क्षिपेत् ॥ २१४ ॥

त्रींस्तु तस्माद्धविः शेषात्पिण्डान्कृत्वा समाहितः। औदकेनैव विधिना निर्व्वपेद्दक्षिणामुखः ॥ २१५ ॥

त्रीनिति। तस्मादग्न्यादिहोमादुद्धृतादन्नादुद्धृतावशिष्टान् त्रीन्पिण्डान् कृत्वा औदकेनैव विधिना दक्षिणहस्तेन समाहितोऽनन्यमना दक्षिणामुखस्तेषु दर्भेष्विति वक्ष्यमाणत्वाद्दर्भेषु दद्यात् ॥ २१५ ॥

न्युप्य पिण्डांस्ततस्तांस्तु प्रयतो विधिपूर्व्वकम्। तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्॥ २१६॥

न्युप्येति। विधिपूर्वकं स्वगृह्योक्तविधिना दर्भेषु तान्पिण्डान्दत्वा दर्भमूलेषु करावघर्षणमिति विष्णुवचनात् तेषु दर्भेषु मूलदेशे हस्तं निर्लेपं कुर्य्यात्प्रपितामहपित्रादीनां त्रयाणां लेपभुजां तृप्तये॥ २१६॥

आचम्योदक्परावृत्त्य त्रिरायम्य शनैरसून्। षड्ऋतूंश्च नमस्कुर्य्यात्पितॄनेव च मन्त्रवित्॥ २१७॥

आचम्येति। अनन्तरमुपस्पृश्योदङ्मुखोभूत्वा यथाशक्ति प्राणायामत्रयं कृत्वा वसन्ताय नमस्तुभ्यमित्यादिना षड्ऋतून्नमस्कुर्य्यात्पितॄंश्च नमोवः पितर इत्यादिमन्त्रमुक्तं अद्भिः पर्य्यावृत्येति गृह्यदर्शनात् दक्षिणामुखो नमस्कुर्य्यात्॥ २१७॥

उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः। अवजिघ्रेच्च तान्पिण्डान् यथा न्युप्तान्समाहितः॥२१८॥

उदकमिति। पिण्डदानात्पूर्वम्पिण्डाधारदेशदत्तोदकशेषमुदकपात्रस्थमतिपिण्डसमीपे देशे क्रमेण पुनरुत्सृजेत् तांश्च

पिण्डान् यथान्युप्तान् येनैव क्रमेण दत्तान् तेनैव क्रमेणावजिघ्रेत् समाहितोनन्यमनाः ॥ २१८ ॥

पिण्डेभ्यस्त्वल्पिकां मात्रां समादायानुपूर्व्वशः।
तानेव विप्रानासीनान् विधिवत्पूर्व्वमाशयेत्॥२१९॥

पिण्डेभ्यइति। अल्पिकेति अत्राल्पमात्रा अवयवभागाः। पिण्डेभ्य उत्पन्नानल्पभागान्पितृपिण्डक्रमेणैव गृहीत्वा तानेव पित्रादिब्राह्मणान्भोजनकाले भोजनात्पूर्वम्भोजयेत् विधिवत्पिण्डानुष्ठानवत्पितरमुद्दिश्य यः पिण्डोदत्तस्तदवयवम्पितृब्राह्मणम्भोजयेत्। एवम्पितामहप्रपितामहपिण्डयोरपि॥२१९॥

ध्रियमाणे तु पितरि पूर्व्वेषामेव निर्व्वपेत्। विप्रवद्वापि तं श्राद्धे स्वकम्पितरमाशयेत् ॥ २२० ॥

ध्रियमाणेत्विति। ध्रियमाणे जीवति पितरि मृतानां पितामहादित्रयाणां श्राद्धं कर्त्तव्यम्। अथवा पितृविप्रस्थाने तमेव स्वपितरम्भोजयेत्। पितामहप्रपितामहयोश्च ब्राह्मणौ भोजयेत्पिण्डद्वयञ्च दद्यात् ॥ २२० ॥

पिता यस्य तु वृत्तः स्याज्जीवेद्वापि पितामहः।
पितुः स नाम संकीर्त्त्य कीर्त्तयेत्प्रपितामहम्॥२२१॥

पितेति। नामकीर्त्तनमत्र श्राद्धोपलक्षणार्थं पितृजीवना पेक्षोयं वाशब्दः। यस्य पुनः पिता मृतः स्यात्पितामहोजीवति स पितृप्रपितामहयोः श्राद्धं कुर्य्यात्। गोविन्दराजस्तु। यस्य पितृप्रपितामहौ प्रेतौ स्यातां स पित्रे पिण्डन्निधाय पितामहा त्परं द्वाभ्यां दद्यात्। इति विष्णुवचनात्प्रपितामहतत्पितृभ्या न्दद्यादिति व्याख्यातवान्॥ २२१॥

पितामहोवा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः।
कामं वा समनुज्ञातः स्वयमेव समाचरेत्॥ २२२॥

पितेति। यथा जीवन्पिता भोज्यस्तथा पितामहोपि पिता महब्राह्मणस्थाने भोज्यः पितृप्रपितामहयोश्च ब्राह्मणभोजनं पिण्डदानञ्च कुर्य्यात्। अथ वा जीवता पितामहेन त्वमेव यथारुचि कुर्व्विति दत्तानुज्ञः स्वरुच्या पितामहम्वा भोजयेत् पितृप्रपितामहयोर्व्वा श्राद्धद्वयं कुर्य्यादिति। विष्णुवचनात्पितृ प्रपितामहवृद्धप्रपितामहानां श्राद्धत्रयं कुर्य्यात्॥ २२२॥

तेषान्दत्वा तु हस्तेषु सपवित्रन्तिलोदकम्।
तत्पिण्डाग्रम्प्रयच्छेत स्वधैषामस्त्विति ब्रुवन् ॥२२३॥

तेषामिति। पिण्डेभ्यस्त्वल्पिकां मात्रामिति यदुक्तं तस्यायं कालविधिः प्रदेशविधिस्तु तेषां ब्राह्मणानां हस्तेषु सदर्भतिलोदकन्दत्वा तदिति पूर्व्वनिर्दिष्टम्पिण्डाग्रं पित्रे स्वधास्त्वित्येवमादि ब्रुवन् पित्रादिब्राह्मणेभ्यस्त्रिभ्यः क्रमेण दद्यात्॥ २२३॥

पाणिभ्यान्तूपसंगृह्य स्वयमन्नस्य वर्द्धितं। विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत्॥ २२॥

पाणिभ्यामिति। अन्नस्येति तृतीयार्थे षष्ठी। वर्द्धितमन्नपूर्णम्पिठरादिपात्रं स्वयम्पाणिभ्यां गृहीत्वा पितॄंश्च चिन्तयन् रन्धनशालाकागारादानीय ब्राह्मणानां समीपे परिवेषणार्थमत्वरया स्थापयेत्॥ २२४॥

उभयोर्हस्तयोर्मुक्तं यदन्नमुपनीयते। तद्विप्रलुम्पन्त्यसुराः सहसा दुष्टचेतसः॥ २२५॥

उभयोरिति। अधिकरणे सप्तमीयम्। उभयोः करयोर्मुक्तमस्थितं यदन्नं ब्राह्मणान्तिकमानीयते तदसुरा दुष्टबुद्धय आछिन्दन्ति। तस्मान्नैकहस्तेनानीय परिवेष्टव्यम्॥२२५॥

गुणांश्च सूपशाकाद्यान् पयोदधिघृतम्मधु।
विन्यसेत्प्रयतः सम्यक् भूमावेव समाहितः ॥ २२६ ॥

गुणानिति। गुणान् व्यञ्जनानि अन्नापेक्षयाऽप्राधान्यात् गुणयुक्तान् वा सूपशाकाद्यान् प्रयतः शुचिः समाहितः अनन्यमनाः सम्यक् यथा न विशीर्य्यन्ति तथा भूमावेव स्थापयेन्न दारुफलकादौ ॥ २२६ ॥

भक्ष्यम्भोज्यञ्च विविधं मूलानि च फलानि च
हृद्यानि चैव मांसानि पानानि सुरभीणि च ॥ २२७ ॥

भक्ष्यमिति। भक्ष्यङ्खरविशदमभ्यवहरणीयमोदकादि। भोज्यम्पायसादि नानाप्रकारं फलमूलानि हृदयस्य प्रियाणि मांसानि पानानि सुगन्धीनि भूमावेव विन्यसेदिति पूर्व्वेण सम्बन्धः ॥ २२७ ॥

उपनीय तु तत्सर्व्वं शनकैः सुसमाहितः। परिवेषयेत प्रयतो गुणान्सर्व्वान्प्रचोदयन् ॥ २२८ ॥

उपेति। एतत्सर्वमन्नादिकं ब्राह्मणसमीपमानीय प्रयतः शुचिः अनन्यमनाः क्रमेण परिवेषयेत् इदम्मधुरमिदमम्लमित्येवं माधुर्य्यादिगुणान् कथयन् ॥ २२८ ॥

नास्त्रमापातयेज्जातु न कुप्येन्नानृतं वदेत्। न पादेन स्पृशेदन्नं नचैतदवधूनयेत् ॥ २२९ ॥

नास्रमिति। रोदनक्रोधमृषाभाषणानि न कुर्य्यात्। पादेन चान्नं न स्पृशेत्। नचोच्छ्रित्योच्छ्रित्यान्नभाजने क्षिपेत् पुरुषार्थतया प्रतिषिद्धयोरपि क्रोधानृतयोः श्राद्धाङ्गत्वज्ञापनार्थोऽयन्निषेधः॥ २२९ ॥

अस्रङ्गमयति प्रेतान् कोपोऽरीननृतं शुनः। पादस्पर्शस्तु रक्षांसि दुष्कृतीनवधूननम् ॥ २३० ॥

अस्रमिति। अश्रुक्रियमाणं प्रेतान् भूतविशेषान् श्राद्धान्नानि प्रापयति न पितॄणामुपकारकम्भवति। क्रोधः शत्रून् मृषावादः कुक्कुरान् पादस्पर्शोऽन्नस्य राक्षसान् अवधूननम्पापकारिणः तस्मान्न रोदनादि कुर्य्यात् ॥ २३० ॥

यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरः। ब्रह्मोद्याश्च कथाः कुर्य्यात्पितॄणामेतदीप्सितम् ॥ २३१ ॥

यदिति। यद्यद्विप्राणामीप्सितं अन्नव्यञ्जनादि तत्तदमत्सरो दद्यात्। परमात्मनिरूपणपराः कथाश्च कुर्य्यात। यतः पितॄणामेतदपेक्षितम् ॥ २३१ ॥

स्वाध्यायं श्रावयेत्पित्र्ये धर्म्मशास्त्राणि चैव हि।
आख्यानानीतिहासांश्च पुराणानि खिलानि च॥२३२॥

स्वाध्यायमिति। स्वाध्यायं वेदं मानवादीनि धर्म्मशास्त्राणि आख्यानानि सौपर्णमैत्रावरुणादीनि इतिहासान्महाभारतादीन् पुराणानि ब्रह्मपुराणादीनि खिलानि श्रीसूक्तशिवसङ्कल्पादीनि श्राद्धे ब्राह्मणान् श्रावयेत्॥ २३२ ॥

हर्षयेद्ब्राह्मणांस्तुष्टो भोजयेच्च शनैःशनैः। अन्नाद्येनासकृच्चैतान् गुणैश्च परिचोदयेत्॥ २३३ ॥

हर्षयेदिति। स्वयं हृष्टो भूत्वा प्रियवचनादिभिर्ब्राह्मणान् परितोषयेत्। अनत्वरयाभोजयेत् मिष्टान्नेन पायसादिभिः पायसमिदं स्वादु मोदकोऽयं हृद्यो गृह्यतामित्यादि गुणाभिधानैश्च पुनःपुनर्ब्राह्मणान् प्रेरयेत्॥ २३३ ॥

व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्।
कुतपञ्चासने दद्यात्तिलैश्च विकिरेन्महीम्॥ २३४॥

व्रतेति। ब्रह्मचारिणमपि दौहित्रं श्राद्धे प्रयत्नतो भोजयेत्। अपिशब्दादब्रह्मचारिणमपि आनुकल्पिकमध्यपठि

तस्यापि ब्रह्मचारिणोऽध्ययनवचनाच्छ्रेष्ठत्वङ्कथयति। नेपाल कम्बलञ्चासने दद्यात् दौहित्रमन्तरेणापि। तिलांश्च श्राद्धं भूमौ विकिरेत्॥ २३४॥

त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम्॥२३५॥

त्रीणीति। पूर्व्वोक्तान्येव त्रीणि दौहित्रादीनि श्राद्धे पवित्राणीति ज्ञाप्यन्ते। त्रीणि चात्र शौचादीनि प्रशंसन्ति॥ २३५॥

अत्युष्णं सर्व्वमन्नं स्याद्भुञ्जीरंस्ते च वाग्यताः।
नच द्विजातयो ब्रूयुर्दात्रा पृष्टा हविर्गुणान्॥ २३६॥

अत्युष्णमिति। उष्णमेवात्युष्णं यच्चोष्णस्यान्नादेर्भोजनमुचितं तदुष्णन्दद्यात् नतु फलाद्यपि। अतएव शङ्खः। उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत्। अन्यत्र फलमूलेभ्यः पानकेभ्यश्च पण्डितः। संयतवाचश्च ब्राह्मणा अश्नीयुः किमिदं स्वादुस्वादुर्वेति दात्रा अन्नादिगुणान् पृष्टाः वक्त्राद्यभिनयेनापि न ब्रूयुः। वाक्‌यतस्यैव विधानात्॥ २३६॥

यावदुष्णम्भवत्यन्नं यावदश्नन्ति वाग्यताः।
पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः॥ २३७॥

यावदिति। यावदन्ने उष्णता भवति। यावच्च मौनिनो भुञ्जते यावच्च हविर्गुणा नोच्यन्ते तावत्पितरोऽश्नन्तीति पूर्व्वोक्तस्यैवार्थस्य प्रशंसा॥ २३७॥

यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः। सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते॥ २३८॥

यदिति। वस्त्रादिवेष्टितशिरा यदन्नम्भुङ्क्ते तथा दक्षिणामुखः सपादुकश्च तत् राक्षसा भुञ्जते न पितरस्तस्मादेवं रूपं न कर्त्तव्यम्॥ २३८॥

चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च।
रजस्वला च षण्ढश्च नेक्षेरन्नश्नतो द्विजान्॥ २३९॥

चाण्डाल इति। चाण्डालग्राम्यशूकरकुक्कुटकुक्कुरोदक्यानपुंसकानि यथा ब्राह्मणान्भोजनकाले न पश्येयुस्तथा कार्य्यम्॥ २३९॥

होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते।
दैवे कर्म्मणि पित्र्ये वा तद्गच्छत्ययथातथम्॥ २४०॥

होमइति। यस्मात् होमेऽग्निहोत्रादौ प्रदाने गोहिरण्यादौ भोज्ये स्वाभ्युदयार्थब्राह्मणभोजने दैवे हविषि दर्शपौर्णमासादौ पित्र्ये श्राद्धादौ यदेभिर्वीक्ष्यते क्रियमाणं कर्म्म तत् यदर्थं क्रियते तन्न साधयति॥ २४०॥

घ्राणेन शूकरोहन्ति पक्षवातेन कुक्कुटः।
श्वा तु दृष्टिनिपातेन स्पर्शेनावरवर्णजः॥ २४१॥

घ्राणेनेति। शूकरस्तदन्नादेर्गन्धं घ्रात्वा कर्म्म निष्फलं करोति तस्मादन्नघ्राणयोग्यदेशात् निरसनीयः। कुक्कटः पक्षवातेन तेन सोपि पक्षपवनयोग्यदेशादपगमनीयः। श्वा दर्शनेन शुनोऽन्नादिदर्शनं निषिद्धमपि दोषभूयस्त्वज्ञापनार्थं पुनरभिहितम्। अथवा दृष्टिनिपातेनेति श्राद्धकर्त्तृभोक्तॄणां दृष्टिनिपातविषयत्वेन। अवरवर्णः शूद्रस्तस्माज्जातोऽवरवर्णजः शूद्र एव। असावन्नादिस्पर्शेन द्विजातिश्राद्धं निष्फलयति नात्मीयं आवश्यकत्वात्॥ २४१॥

खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत्।
हीनातिरिक्तगात्रो वा तमप्यपनयेत्ततः ॥ २४२ ॥

खञ्जो वेति। यदि गतिविकलः काणो वा दातुर्दासः शूद्रस्यैव प्रेष्यत्वविधानात्। अपिशब्दादन्योऽपि शूद्रो न्यूनाधिकाङ्गुल्यादिर्वा स्यात्तदा तमपि ततः श्राद्धदेशादपसारयेत् ॥ २४२ ॥

ब्राह्मणं भिक्षुकं वापि भोजनार्थमुपस्थितम्।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत् ॥ २४३ ॥

ब्राह्मेति। ब्राह्मणमतिथिरूपं अन्यं वा भिक्षणशीलं भोजनार्थं तत्कालोपस्थितं श्राद्धपात्रब्राह्मणैरनुज्ञातो यथाशक्त्यन्नभोजनेन भिक्षादानेन वार्हयेत् ॥ १२३ ॥

सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा।
समुत्सृजेद्भुक्तवतामग्रतो विकिरन् भुवि ॥ २४४ ॥

सार्वेति। वर्णशब्दः प्रकारवाची। सर्वप्रकारमन्नादिकं व्यञ्जनादिभिरेकीकृत्य उदकेन प्लावयित्वा कृतभोजनानां ब्राह्मणानामग्रतो भूमौ दर्भेषु विकिरंश्च यदिति वक्ष्यमाणत्वात् दर्भोपरि निक्षिपन् त्यजेत् ॥ २४४ ॥

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः॥ २४५॥

असंस्कृतेति। नास्य कार्य्योऽग्निसंस्कार इति निषेधात् संस्कारानर्हबालानान्तथा कुलस्त्रीणां अदुष्टदोषाणां ये त्यक्ता स्तेषां पात्रस्थमुच्छिष्टं दर्भेषु योविकिरः सभागः स्यात् अन्येतु त्यागिनामिति गुर्वादित्यागिनां कुलयोषितामिति स्वातन्त्र्येण तु कुलयोषितामनूढकन्यानामिति व्याचक्षते। गोविन्दराजस्तु त्यागिनां कुलयोषितामिति सामान्योपक्रमा दिदं विशेषाभिधानं संस्कृतभक्ष्यमितिवत्ततः स्वकुलं त्यक्का गतानां कुलस्त्रीणामित्याह॥ २४५॥

उच्छेषणं भूमिगतमजिह्मस्याशठस्य च। दास वर्गस्य तत्पित्र्ये भागधेयम्प्रचक्षते॥ २४६॥

उच्छेषणमिति। उच्छिष्टं यद्भूमिगतं तद्दासवर्गस्या तत्र्यानलसस्याकुटिलस्य च पित्र्ये श्राद्धकर्मणि भागधेयं मन्वादयोवदन्ति॥ २४६॥

आसपिण्डक्रियाकर्म्म द्विजातेः संस्थितस्य तु।
अदैवम्भोजयेच्छ्राद्धं पिण्डमेकन्तु निर्व्वपेत्॥ २४७॥

आसपिण्डेति। मर्य्यादायामाङ् नाभिविधौ सपिण्डीकरण श्राद्धपर्य्यन्तमचिरमृतस्य द्विजातेः वैश्वदेवब्राह्मणभोजन

रहितं श्राद्धार्थमन्नं ब्राह्मणम्भोजयेत् एकञ्च पिण्डन्दद्यात्। अस्य च श्राद्धस्यानुष्ठानं। एकोद्दिष्टन्दैवहीनमेकार्घैकपवित्रकम्। आवाहनाग्नौकरणरहितं ह्यपसव्यवदिति याज्ञवल्क्यादिस्मृतिष्ववगन्तव्यम्॥ २४७ ॥

सहपिण्डक्रियायान्तु कृतायामस्य धर्म्मतः।
अनयैवावृता कार्य्यम्पिण्डनिर्व्वपनं सुतैः॥ २४८ ॥

सहेति। अस्येति यस्येदमेकोद्दिष्टं विहितन्तस्य धर्म्मतः स्वगृह्यादिविधिना सपिण्डीकरणश्राद्धे कृते अनयैवावृता उक्तामावास्याश्राद्धेतिकर्त्तव्यतया पिण्डनिर्व्वपनम्पार्व्वणविधिना श्राद्धं पुत्रैः सर्व्वत्र मृताहादौ कर्त्तव्यम्। ननु अनयैवावृता इत्यनेन प्रकृतमेकोद्दिष्टमेवहि किमिति न परामृश्यते। उच्यते। तर्हि सपिण्डीकरणात्पूर्व्वमेकोद्दिष्टं सपिण्डीकरणे कृते पुनः अनयैवावृता इति भेदनिर्द्देशोन स्यात्। ततोऽमावास्येतिकर्त्तव्यतैव प्रतीयते॥ २४८ ॥

श्राद्धं भुक्त्वा यउच्छिष्टं वृषलाय प्रयच्छति। स
मूढोनरकं याति कालसूत्रमवाक्शिराः॥ २४९ ॥

श्राद्धमिति। आश्रितशूद्राय उच्छिष्टदानप्रसक्तावयं निषेधः श्राद्धभोजनोच्छिष्टं यः शूद्राय ददाति स मूर्खः कालसूत्रं नाम नरकमधोमुखोगच्छति॥ २४९॥

श्राद्धभुग्वृषलीतल्पन्तदहर्योऽधिगच्छति। तस्याः पुरीषे तन्मासम्पितरस्तस्य शेरते॥ २५०॥

श्राद्धेति। वृषलीशब्दोऽत्र स्त्रीपरइत्याह:। निरुक्तञ्च कुर्व्वन्ति। वृषस्यन्ती चपलयति भर्त्तारमिति वृषली ब्राह्मण्य परिणीता ब्राह्मण्यपि वृषलीति। श्राद्धम्भुक्ता तदहोरात्रे यः स्त्रीसंयोगं करोति तस्य पितरस्तस्याः पुरीषे मासं शेरतइति निवृत्त्यर्था निन्दा॥ २५०॥

पृष्ट्वा स्वदितमित्येवं तृप्तानाचामयेत्ततः। आचान्तांश्चानुजानीयादभि भोरम्यतामिति॥ २५१॥

पृष्टेति। तृप्तान् ब्राह्मणान् बुद्धा स्वदितमिति पृष्ट्वा तेषामाचमनं कारयेत्। कृताचमनांश्च भोइति सम्बोध्य अभिरम्यतामिति ब्रूयात्। अभिलइतिपाठे अभितउभयतइह वा स्वगृहे वास्यतामित्यर्थः॥ २५१॥

स्वधास्त्वित्येव तं ब्रूयुर्ब्राह्मणास्तदनन्तरम्। स्वधाकारः पराह्याशीः सर्व्वेषु पितृकर्म्मसु॥ २५२॥

स्वधेति। अनुज्ञानन्तरं ब्राह्मणाः श्राद्धकर्त्तारं स्वधास्तु इतिब्रूयुः। यस्मात्सर्व्वेषु श्राद्धतर्पणादिपितृकर्मसु स्वधाशब्दोच्चारणमुत्कृष्टा आशीः॥ २५२॥

ततोभुक्तवतां तेषामन्नशेषं निवेदयेत्। यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्ततोद्विजैः ॥ २५३ ॥

तत इति। स्वधाशब्दोच्चारणानन्तरं कृतभोजनानां ब्राह्मणानां शेषमन्नमप्यस्तीत्यवशिष्टमन्नं निवेदयेत्। तैर्ब्राह्मणैरिदमनेनान्नेन क्रियतामित्यनुज्ञातोयथा ते ब्रूयुः तथान्नशेषविनियोगं कुर्य्यात् ॥ २५३ ॥

पित्र्ये स्वदितमित्येव वाच्यङ्गोष्ठे तु सुश्रुतम्। सम्पन्नमित्यभ्युदये दैवे रुचितमित्यपि ॥ २५४ ॥

इदानीं प्रसङ्गाच्छ्राद्धान्तरेषु विशेषविधिमाह। पित्र्येइति। पित्र्ये निरपेक्षपितृमातृदेवताकएकोद्दिष्टश्राद्धे तृप्तिप्रश्नार्थं स्वदितमिति वाच्यम्। तथाच गोभिलसांख्यायनौ। स्वदितमिति तृप्तिप्रश्नः। मेधातिथिगोविन्दराजौ तु। श्राद्धकालागतेनान्येनापि स्वदितमित्येव कर्त्तव्यमिति व्याचचतुः। श्राद्धे स्वदितमित्येतद्वाच्यमन्येन केनचित्। नानुरुद्धमिदं विद्वद्भिर्न श्रद्धीमहि। गोष्ठे गोष्ठीश्राद्धे सुश्रुतमिति वाच्यं गोष्ठ्यां शुद्धार्थमष्टमकमिति द्वादशविधश्राद्धगणनायां गोष्ठीश्राद्धमपि विश्वामित्रेण पठितम। अभ्युदये वृद्धिश्राद्धे सम्पन्नमिति

वाच्यम्। दैवे देवतोद्देशेनश्राद्धे रुचितमिति वचनीयम्। दैव श्राद्धन्तु भविष्यपुराणोक्तम्। देवानुद्दिश्य यच्छ्राद्धन्तत्तु दैविकमुच्यते। हविष्येन विशिष्टेन सप्तम्यादिषु यत्नतः ॥ २५४ ॥

अपराह्णस्तथा दर्भा वास्तुसम्पादनं तिलाः।
सृष्टिर्मृष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्मसु सम्पदः ॥२५५॥

अपराह्ण इति। अमावास्याश्राद्धस्य प्रकृतत्वात्तद्विषयोऽयमपराह्णकालः। प्रातर्वृद्धिनिमित्तकमित्यादिना वृद्धिश्राद्धादौ स्मृत्यन्तरे प्रातःकालादिविधानात्। विष्टरार्थे दर्भाः गोमयादिना श्राद्धदेशसंशोधनम्। तिलाश्च विकिरणाद्यर्थाः सृष्टिरकार्पण्येनान्नादिविसर्गः। मृष्टिरन्नादेश्च संस्कारविशेषः। पङ्क्तिपावनादयश्च ब्राह्मणाः। एताः श्राद्धे संपत्तय इत्यभिधानादङ्गान्तरापेक्षप्रकृष्टत्वमेषां बोधितम् ॥ २५५ ॥

दर्भाः पवित्रं पूर्वाह्णो हविष्याणि च सर्वशः।
पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसम्पदः ॥ २५६ ॥

दर्भा इति। पवित्रं मन्त्राः पूर्वाह्णः कालः हविष्याणि मुन्यन्नादीनि सर्वाणि यच्च पवित्रम्पावनं वास्तुसम्पादनादि पूर्वमुक्तम्। एताश्च देवार्थस्य कर्मणः समृद्धयः। हव्यशब्दो दैवकर्मोपलक्षणार्थः ॥ २५६ ॥

मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम्।
अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते ॥ २५७ ॥

मुन्यन्नानीति। मुनेर्वानप्रस्थस्यान्नानि नीवारादीनि पयः क्षीरं सोमलतारसः। अनुपस्कृतमविकृतम्पूतिगन्धादिरहितं मांसम्। अक्षारलवणमकृत्रिमलवणं सैन्धवादि एतत्स्वभावतो हविर्मन्वादिभिरभिधीयते ॥ २५७ ॥

विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः। दक्षिणां दिशमाकाङ्क्षन् याचेतेमान् वरान्पितॄन् ॥ २५८ ॥

विसृज्येति। तान् ब्राह्मणान्विसृज्यानन्यमनाः मौनी पवित्रो दक्षिणान्दिशं वीक्षमाणएतान्वक्ष्यमाणान् अभिलषितान् थान् पितॄन् प्रार्थयेत् ॥ २५८ ॥

दातारो नोभिवर्द्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो माव्यगमद्‌बहु देयञ्च नोस्त्विति ॥ २५९ ॥

दातारइति। अस्मत्कुले दातारः पुरुषावर्द्धन्तां वेदाश्चाध्ययनाध्यापनतदर्थबोधतदर्थयागाद्यनुष्ठानैर्वृद्धिमाप्नुवन्तु पुत्रपौत्रादिकञ्च वर्द्धताम्। वेदार्थश्रद्धा चास्मत्कुले न व्यपैतु दातव्यञ्च धनादिकम्बहु भवतु ॥ २५९ ॥

एवं निर्वपनं कृत्वा पिण्डांस्तांस्तदनन्तरम्।
गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत् ॥ २६० ॥

एवमिति। एवमुक्तप्रकारेण पिण्डानाम्प्रदानं कृत्वा अक्षनवरयाचनानन्तरं तान् पिण्डान् गां ब्राह्मणञ्छागं वा भोजयेत् अग्नौ जले वा क्षिपेत् ॥ २६० ॥

पिण्डनिर्वपनं केचित्पुरस्तादेव कुर्वते। वयोभिः खादयन्त्यन्ये प्रक्षिपन्त्यनलेप्सु वा ॥ २६१ ॥

पिण्डेति। पिण्डप्रदानङ्केचिदाचार्य्या ब्राह्मणभोजनानन्तरं कुर्व्वते। अन्ये पक्षिभिः पिण्डान् खादयन्ति। इयञ्च पक्षिभोजनरूपा प्रतिपत्तिरग्न्युदकप्रक्षेपयोर्वैकल्पिकीति दर्शयितुमुक्तयोरप्यभिधानम् ॥ २६१ ॥

पतिव्रता धर्म्मपत्नी पितृपूजनतत्परा। मध्यमन्तु ततः पिण्डमद्यात्सम्यक् सुतार्थिनी ॥ २६२ ॥

पतिव्रतेति। धर्म्मार्थकामेषु मनोवाक्कायकर्म्मभिः पतिरेव मया परिचरणीयइति व्रतं यस्याः सा पतिव्रता धर्म्मपत्नी

सवर्णा प्रथमोढा श्राद्धक्रियायां श्रद्धाशालिनी. पुत्रार्थिनी तेषाम्पिण्डानां मध्यमम्पितामहपिण्डम्भक्षयेत्। आधत्तपितरो गर्भमित्यादि गृह्योक्तमन्त्रेण ॥ २६२ ॥

आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम्। धन वन्तं प्रजावन्तं सात्विकं धार्म्मिकन्तथा ॥ २६३ ॥

आयुष्मन्तमिति। तेन पिण्डभक्षणेन दीर्घायुषं कीर्त्ति धारणात्मकबुद्धियुक्तं धनपुत्रादिसन्ततिधर्म्मानुष्ठानसत्ताख्य गुणान्वितम्पुत्रञ्जनयति ॥ २६३ ॥

प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत्। ज्ञातिभ्यः सत्कृतन्दत्वा बान्धवानपि भोजयेत्॥२६४॥

प्रक्षाल्येति। तदनु हस्तौ प्रक्षाल्य ज्ञातिप्रायमन्नं कुर्य्यात्। ज्ञातीन्प्रैति गच्छतीति ज्ञातिप्रायम्। कर्म्मण्यण्। ज्ञातीनभो जयेदित्यर्थः। तेभ्यः पूजापूर्व्वकमन्नं दत्वा मातृपक्षानपि सार्द्ध णभोजयेत् ॥ २६४ ॥

उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्राविसर्जिताः। ततो गृहबलिं कुर्य्यादिति धर्म्मोव्यवस्थितः ॥ २६५ ॥

उच्छेषणमिति। तद्ब्राह्मणोच्छिष्टं तावत्कालं तिष्ठेत् यावत् ब्राह्मणानां विसर्जनं ब्राह्मणेषु तु निर्गतेषु मार्ष्टव्य

मित्यर्थः। ततः सम्यक् श्राद्धकर्म्मणि वैश्वदेवबलिहोमकर्म्मनित्य श्राद्धातिथिभोजनानि कर्त्तव्यानि। बलिशब्दस्य प्रदर्शनार्थ त्वात्। अतएव मत्स्यपुराणे। निर्वर्त्त्य प्रणिपत्याथ पर्युक्ष्याग्निञ्च मन्त्रवित्। वैश्वदेवञ्च कुर्वीत नैत्यकं विधिमेव चेति ॥ २६५ ॥

हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते। पितृभ्योविधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः ॥ २६६ ॥

येस्त्वन्नैरिति पूर्व्वमुक्तमपि व्यवधानादबुद्धिस्थं शिष्यसुख प्रतिपत्तये पुनर्वक्तव्यतया प्रतिजानीते। हविरिति। चिररात्रायपदमव्ययञ्चिरकालवाचि। अतएव चिरायचिररात्रायचिरस्यायाश्चिरार्थकाइत्याभिधानिकाः। यद्यत् हविः पितृभ्योयथाविधि दत्तञ्चिरकालतृप्तये अनन्ततृप्तये च सम्पद्यते तन्निःशेषेणाभिधास्यामि ॥ २६६ ॥

तिलैर्व्रीहियवैर्म्माषैरद्भिर्मूलफलेन वा। दत्तेन मासं प्रीयन्ते विधिवत्पितरोनृणाम् ॥ २६७ ॥

तिलैरिति। तिलधान्ययवमाषजलमूलफलानामन्यतमेन यथाशास्त्रं श्रद्धया दत्तेन मनुष्याणां मासम्पितरस्तृप्यन्ति। कृष्णामाषास्तिलाश्चैव श्रेष्ठाः सुर्य्यवशालयइति वायुपुराण वचनान्माषैरिति कृष्णमाषाबोद्धव्याः ॥ २६७ ॥

द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु।
औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥ २६८ ॥

द्वाविति। पाठीनादिमत्स्यानां मांसेन द्वौ मासौ पितरः प्रीयन्त इति पूर्व्वेण सम्बन्धः। त्रीन्मासान् हारिणेन मांसेन। चतुरो मेषमांसेन। पञ्च द्विजातिभक्ष्यपक्षिमांसेन ॥ २६८ ॥

षण्मासांश्छागमांसेन पार्षतेन च सप्त वै। अष्टा वेणस्य मांसेन रौरवेण नवैव तु ॥ २६९ ॥

षण्मासानिति। षण्मासान् छागमांसेन प्रीयन्ते। पृषतश्चित्रमृगस्तन्मांसेन सप्त। एणमांसेनाष्टौ। रुरुमांसेन नव। एणरुरू हरिणजातिविशेषौ ॥ २६९ ॥

दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः। शश कूर्म्मयोस्तु मांसेन मासानेकादशैव तु ॥ २७० ॥

दशेति। दशमासानारण्यसूकरमहिषमांसैस्तृप्यन्ति। एकादश शशकच्छपमांसेन ॥ २७० ॥

संवत्सरन्तु गव्येन पयसा पायसेन च। वार्द्ध्री
णसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ २७१ ॥

संवत्सरमिति। वर्षम्पुनर्गोभवक्षीरेण तत्साधितोदनेन
चतुर्यान्ति तत्रैव पायसशब्दप्रसिद्धेः। वार्द्ध्रीणसस्य मांसेन द्वाद
शवर्षपर्य्यन्तम्पितृतृप्तिर्भवति। वार्द्ध्रीणसस्य निगमे व्याख्यातः
त्रिपिवन्त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम्। वार्द्ध्रीणसन्तु तम्पा
ऊर्य्याज्ञिकाः पितृकर्म्मणि। नद्यादौ पयःपिवतोयस्य त्रीणि
जलं स्पृशन्ति कर्णौजिह्वाच त्रिभिः पिवतीति त्रिपिवः॥ २७१ ॥

कालशाकं महाशल्काः खड्गलोहामिषं मधु।
आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्व्वशः॥ २७२ ॥

कालेति। कालशाकाख्यं शाकं महाशल्काः सशल्कादति
मेधातिथिः। मत्स्यविशेषादति, युज्यते महाशल्कालिनोमत्स्या
इतिवचनात्। खड्गोगण्डकः लोहोलोहितवर्णः छागएव।
छागेन सर्व्वलोहेनानन्त्यमिति पैठीनसिवचनात्तयोरामिषं मांसं
मधु माक्षिकं मुन्यन्नानि नीवारादीनि आरण्यानि सर्वाणि
एतान्यनन्ततृप्तये सम्पद्यन्ते॥ २७२ ॥

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीं।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च ॥ ७३ ॥

यदिति। ऋतुनक्षत्रतिथीनामयं समुच्चयः। यत्किञ्चि दित्यप्रसिद्धम्। मधुसंयुक्तं वर्षाकाले मघात्रयोदश्यां दीयते तदप्यक्षयतृप्तये भवति। त्रयोदश्या अधिकरणत्वेपीप्सि तत्वविवक्षया प्राप्येत्यध्याहाराद्वा द्वितीया ॥ २७३ ॥

अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीं।
पायसं मधुसर्प्पिर्भ्यां प्राक्छाये कुञ्जरस्य च ॥ २७४ ॥

अपीति। वर्षासु मघायुक्तत्रयोदशी पूर्व्वोक्ता विवक्षिता। तत्रापि प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्। प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन चेति शङ्खवचनात्। भाद्र कृष्णत्रयोदशी पूर्व्वेह च गृह्यते। पितरः किलैव माशासते अपिनाम तथाविधः कश्चिदस्माकं कुले भूयात्। योऽस्मभ्यं प्रकृतायान्त्रयोदश्यां तथा तिथ्यन्तरेऽपि हस्तिनः पूर्व्वादिगङ्गतायां छायायां मधुघृतसंयुक्तं पायसन्दद्यात्। नतु त्रयोदशीहस्तिच्छाययोः समुच्चयः यथाह विष्णुः। अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः। प्रावृट्काले ऽसिते

पक्षे त्रयोदश्यां समाश्रितः। मधुप्लुतेन यः श्राद्धं पायसेन समाचरेत्। कार्त्तिकं सकलं वापि प्राक्छाये कुञ्जरस्य च ॥ २७४ ॥

यद्यद्ददाति विधिवत्सम्यक् श्रद्धासमन्वितः।
तत्तत्पितॄणाम्भवति परत्रानन्तमक्षयम् ॥ २७५ ॥

यदिति। यद्यदिति वीप्सार्थां सर्व्वमन्नमप्रतिषिद्धं यथा शास्त्रं सम्यक्प्रश्रद्धायुक्तः पितृभ्यो ददाति तदनन्तं सर्व्वं कालमक्षयमनपचितं परलोके पितृतृप्तये भवति अतस्त त्फलार्थिना श्रद्धया देयमिति विधीयते ॥ २७५ ॥

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्द्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥ २३६ ॥

कृष्णेति। कृष्णपक्षे दशमीमारभ्य चतुर्द्दशीन्त्यक्त्वा श्राद्धे यथा तिथयः श्रेष्ठामहाफलाः न तथैतदन्याः प्रतिपदादयः ॥ २७६ ॥

युक्षु कुर्व्वन् दिनर्क्षेषु सर्व्वान् कामान्समश्नुते।
अयुक्षु तु पितॄन्सर्व्वान्प्रजां प्राप्नोति पुष्कलां ॥२७७॥

युक्ष्विति। दिनशब्दोऽत्र तिथिपरः। युक्षु युग्मासु तिथिषु द्वितीयाचतुर्थ्यादिषु युग्मेषु नक्षत्रेषु भरणीरोहिण्यादिषु

श्राद्धं कुर्व्वन् सर्व्वाभिलषिताम्प्राप्नोति। अयुग्मास्तु तिथिषु प्रतिपत्तृतीयाप्रभृतिषु अयुग्मेषु च नक्षत्रेषु अश्विनीकृत्तिकादिषु श्राद्धेन पितॄन्पूजयन्पुत्रादिसन्ततिं लभते पुष्कलां धनविद्यापरिपुष्टाम्॥ २७७॥

यथाचैवापरः पक्षः पूर्व्वपक्षाद्विशिष्यते। तथा श्राद्धस्य पूर्व्वाह्णादपराह्णोविशिष्यते॥ २७८॥

यथेति। चैत्रसिताद्यामावास्यान्तमिति ज्योतिःशास्त्रविधानात् शुक्लपक्षोपक्रमत्वान्मासानां अपरः पक्षः कृष्णपक्षः स यथा शुक्लपक्षात् श्राद्धस्य सम्बन्धी विशिष्टफलदोभवति एवम्पूर्व्वार्द्धदिवसादुत्तरार्द्धदिवसः प्रकृष्टफलोविशिष्यतइतिवचनात्पूर्व्वार्द्धेपि श्राद्धकर्त्तव्यताम्बोधयति। ननु शुक्लपक्षादनुत्कर्षस्यापरपक्षस्य कथं दृष्टान्तता प्रसिद्धोहि दृष्टान्तोभवति। उच्यते। कृष्णपक्षे दशम्यादावित्यत्रैव विशिष्टविधावुत्कर्षाभिधानात्॥ २७८॥

प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा। पित्र्यमानिधनात्कार्य्यं विधिवद्दर्भपाणिना॥ २७९॥

प्राचीति। दक्षिणांसस्थितयज्ञोपवीतेनानलसेन दर्भहस्तेन अपसव्यं पितृतीर्थेन यथाशास्त्रं सर्व्वं पितृकर्म्मास्मि कार्य्यं आनि

धनादासमाप्तेः कर्त्तव्यम्। आनिधनाद्यावज्जीवमिति मेधातिथिगोविन्दराजौ ॥ २७९ ॥

रात्रौ श्राद्धं न कुर्व्वीत राक्षसी कीर्त्तिता हि सा।
सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते ॥ २८० ॥

रात्राविति। रात्रौ श्राद्धं न कर्त्तव्यम्। यस्माच्छ्राद्धविनाशनगुणयोगात् राक्षसी मन्वादिभिरसौ कथिता। सन्ध्ययोश्च न कुर्य्यात्। आदित्ये चाचिरोदिते। अचिरोदितादित्यकालस्यापेक्षायां त्रिमुहूर्त्तः प्रातःकालो ग्राह्यः। यथोक्तं विष्णुपुराणे। रेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तङ्गते रवौ। प्रातस्तनः स्मृतः कालो भागः सोऽह्नस्तु पञ्चमः। अपराह्णस्य श्राद्धाङ्गतया विधानात् कथमयमप्रसक्तप्रतिषेध इति चेन्न। नायम्प्रतिषेधः सहि रागप्राप्तस्य वा स्यात् विधिप्राप्तस्य वा। नाद्यः। नात्र रागतोनित्यस्य दर्शश्राद्धस्य प्राप्तत्वात्। विधिप्राप्तस्य निषेधे षोडशिग्रहणाग्रहणवत् विकल्पः स्यात्। तस्मात्पर्य्युदासोऽयं। रात्र्यादिपर्य्युदस्तेतरकाले श्राद्धं कुर्य्यात् अनुयाजेतरयजतिषु येयजामहइति मन्त्रवत्। अपराह्णविधिश्च प्राशस्त्यार्थः। अतएवोक्तम्। यथा श्राद्धस्य पूर्व्वाह्णादपराह्णोविशिष्यतइति ॥ २८० ॥

अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत्।
हेमन्तग्रीष्मवर्षासु पाञ्चयज्ञिकमन्वहम् ॥ २८१ ॥

अनेनेति। कुर्य्यान्मासानुमासिकमिति प्रतिमासं श्राद्धं विहितं तदसम्भवे विधिरयं चतुर्भिर्मासैर्ऋतुरेकः। ऋतुः संवत्सर इतीमं पक्षमाश्रित्योच्यते। अनेनोक्तविधानेन संवत्सरमध्ये त्रीन् वारान् हेमन्तग्रीष्मवर्षासु श्राद्धं कर्त्तव्यम्। तच्च समयाचारात्कुम्भवृषकन्यास्थेऽर्के। पञ्चमहायज्ञान्तर्गतञ्च एकमप्याशयेद्विप्रमित्यनेन विहितमप्यहन्तु कुर्य्यादिति पूर्व्वोक्तदार्ढ्यार्थम् ॥ २८१ ॥

न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते। न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ॥ २८२ ॥

नपैचिति। अग्नेः सोमयमाभ्याञ्चेत्यनेन विहितपितृयज्ञाङ्गभूतो होमोन लौकिके श्रौतस्मार्त्तव्यतिरिक्ताग्नौ शास्त्रेण विधीयते। तस्मान्न लौकिकाग्नावग्नौकरणहोमः कर्त्तव्यः। निरग्निना तु अग्न्यभावे तु विप्रस्य पाणावित्यभिधानात्। विप्रपाण्यादौ करणीयः। आहिताग्नेर्द्विजस्य नामावास्याव्यतिरेकेण कृष्णपक्षे दशम्यादौ श्राद्धं विधीयते। मृताहश्राद्धन्तु नियतत्वात्कृष्णपक्षेपि तिथ्यन्तरे न निषिध्यते ॥ २८२ ॥

यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः।
तेनैव कृत्स्नमाप्नोति पितृयज्ञक्रियाफलम् ॥२८३॥

यदिति। पाञ्चयज्ञिकश्राद्धासम्भवे विधिरयम्। यत्र स्नानानन्तरमुदकतर्पणं द्विजः करोति तेनैव सर्व्वं नित्यश्राद्ध फलमाप्नोति। द्विजोत्तमपदं द्विजपरम् ॥ २८३ ॥

वसून्वदन्ति वै पितॄन्रुद्रांश्चैव पितामहान्। प्रपितामहांस्त्वादित्यान् श्रुतिरेषा सनातनी ॥ २८४ ॥

वसूनिति। यस्मात्पित्रादयोवस्वादयइति एषाऽनादिभूताश्रुतिरस्ति अतः पितॄन् वस्वाख्यदेवान्पितामहान् रुद्रान्प्रपितामहानादित्यान्मन्वादयोवदन्ति ततश्च सिद्धबोधन वैयर्थ्यात् श्राद्धे पित्रादयोवस्वादिरूपेण ध्येयाइति विधिः कल्प्यते। अतएव पैठीनसिः। य एवं विद्वान् पितॄन् यजते वसवोरुद्रा आदित्याश्चास्य प्रीताभवन्ति। मेधातिथिगोविन्दराजौ तु। पितृद्वेषान्नास्तिक्याद्वा यः पितृकर्मणि न प्रवर्त्तेत तस्यैतत्प्रवर्त्तनार्थं देवतात्वाध्यारोपेण पितॄणां स्तुतिवचनम् ॥ २८४ ॥

विघसाशी भवेन्नित्यं नित्यं वामृतभोजनः। विघसोभुक्तशेषन्तु यज्ञशेषन्तथामृतम् ॥ २८५ ॥

विघसाशीति। सर्वदा विघसभोजनः स्यात्सर्वदा वामृतभोजनोभवेत्। विघसामृतपदयोरप्रसिद्धत्वादर्थं व्याकुरुते।

विप्रादिभुक्तशेषं विघसउच्यते। दर्शपौर्णमासादियज्ञशिष्टं पुरोडाशाद्यमृतं। सामान्याभिधानेपि प्रकृतत्वात् श्राद्धे विप्र भुक्तशेषभोजनार्थोयं विधिः। अतएव भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितमिति स्मृत्यन्तरम्। अतिथ्यादिविशेषभोजनन्त्ववशिष्टन्तु दम्पती इत्यनेनैव विहितन्तस्यैव यज्ञशेषतुल्यत्वा पादनेन स्तुत्यर्थम्पुनर्वचनमिति तु गोविन्दराजव्याख्यानमनुष्ठानविशेषानर्हं अप्राकरणिकञ्च ॥ २८५ ॥

एतद्वोभिहितं सर्व्वं विधानम्पाञ्चयज्ञिकम्।
द्विजातिमुख्यवृत्तीनां विधानं श्रूयतामिति ॥२८६॥

इतिमानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां तृतीयोऽध्यायः॥

एतदिति इदम्पञ्चयज्ञभवमनुष्ठानं सर्व्वं युष्माकमुक्तं पार्वणश्राद्धव्यवहितैरपि पञ्चयज्ञैरुपसंहारस्तेषामभ्यर्हितत्व ज्ञापनार्थः। मङ्गलार्थइति तु मेधातिथिगोविन्दराजौ। इदानीं द्विजानां मुख्योब्राह्मणस्तस्य वृत्तीनां मृतादीना मनुष्ठानं श्रूयतामिति वक्ष्यमाणाध्यायैकदेशोपन्यासः॥ २८६ ॥

इति वारेन्द्रनन्दनवासीयभट्टदिवाकरात्मजश्रीकुल्लूक भट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तौ तृतीयोऽध्यायः॥

## ॥ ४ अध्यायः ॥

चतुर्थमायुषोभागमुषित्वाद्यं गुरौ द्विजः। द्वितीय मायुषोभागं कृतदारोगृहे वसेत् ॥ १ ॥

आद्धकल्पानन्तरं वृत्तीनां लक्षणञ्चैवेति वृत्तिषु वक्तव्यतया प्रतिज्ञातासु वृत्त्यधीनत्वात् गार्हस्थ्यस्यानन्तरं वक्तव्यासु ब्रह्म चर्य्यपूर्व्वकमेव गार्हस्थ्यं तत्रैव वक्ष्यमाणावृत्तयइति दर्शयितुं ब्रह्मचर्य्यकालं गार्हस्थ्यकालञ्चात्र वदति। चतुर्थमिति। चतुर्थमायुषोभागमित्युक्तब्रह्मचर्य्यकालोपलक्षणार्थम्। अनि यतपरिमाणत्वादायुषश्चतुर्थभागस्य दुर्ज्ञानत्वात् नच शतायुर्वै पुरुषइति श्रुतेः पञ्चविंशतिवर्षपरत्वम्। षट्त्रिंशदाब्दिकं चर्य्यमित्यादि विरोधात्। आश्रमसमुच्चयपक्षमाश्रितोब्राह्मणो युक्तब्रह्मचर्य्यकालं जन्मापेक्ष्याद्यं यथाशक्ति गुरुकुले स्थित्वा द्वितीयमायुषश्चतुर्थभागं कृतदारोगृहस्थाश्रममनुतिष्ठेत्। गृहस्थस्तु यदा पश्येदित्यनियतत्वात् द्वितीयमायुषोभाग मित्यपि गार्हस्थ्यकालमेव ॥ १ ॥

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः। या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥ २॥

अद्रोहेणेति। परस्यापीडाशिलोञ्छायाचितादिरद्रोहः ईषत्पीडायाचितादिरल्पद्रोहः। ननु हिंसैव द्रोहः तस्यानिषिद्धत्वात्। अद्रोहेण तदसम्भवेऽल्पद्रोहेणवा या वृत्तिर्जीवनोपायः तदाश्रयणेन भार्य्यादिभृत्यपञ्चयज्ञानुष्ठानयुक्तो ब्राह्मणो न तु क्षत्रियादिरनापदि जीवेत्। आपदि दशमे विधिर्भविष्यति। अयञ्च सामान्योपदेशो याजनाध्यापनविशुद्ध प्रतिग्रहादिसंग्रहार्थः। वक्ष्यमाणऋतादिविशेषमात्रनिष्ठत्वे संकुचितत्वस्वरक्षाहानिरनधिकारार्थत्वं याजनादेर्वृत्तिप्रकरणानिवेशश्च स्यात् तथापि जीवेत् ॥ २ ॥

यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः अक्लेशेन शरीरस्य कुर्व्वीत धनसञ्चयम् ॥ ३ ॥

यात्रेति। यात्रा प्राणस्थितिः। शास्त्रीयकुटुम्बसंवर्द्धन नित्यकर्म्मानुष्ठानपूर्व्वकप्राणस्थितिमात्रार्थं न भोगार्थं स्वसम्बन्धितया शास्त्रविहितार्जनरूपैः कर्म्मभिः ऋतादिवक्ष्यमाणैः कायक्लेशं विनाऽर्थसंग्रहं कुर्य्यात् ॥ ३ ॥

ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥ ४ ॥

कैः कर्म्मभिरित्यत आह। ऋतामृताभ्यामिति। अनापदीत्यनुवर्त्तते। ऋतादिभिरनापदि जीवेत्। सेवया त्वनापदि कदाचिन्न वर्त्तेत अप्रसिद्धत्वादृतादीनि व्याचष्टे ॥ ४ ॥

ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतन्तु याचितं भैक्षम्प्रमृतङ्कर्षणं स्मृतम् ॥ ५ ॥

ऋतमुञ्छशिलमिति। अबाधितस्थानेषु पथि वा क्षेत्रेषु वा अप्रतिहतावकाशेषु यत्र यत्रौषधयो विद्यन्ते तत्र तत्राङ्गुलीभ्यां एकैककणं समुच्चिनुयादिति बौधायनदर्शनात्। एकैकधान्यादिगुडकोच्चयनमुञ्छः। मञ्जर्य्यात्मकानेकधान्योच्चयनं शिलः। उञ्छस्य शिलस्यैकवद्भावः तत्सत्यसमानफलत्वादृतमित्युच्यते। अयाचितापस्थितममृतमिव सुखहेतुत्वादमृतम्। प्रार्थितम्पुनर्भैक्षं भिक्षासमूहरूपं मरणसमपीडाजननान्मृतं। एतच्च साधुगृहस्थस्य भैक्षमपक्वतण्डुलादिरूपं न तु सिद्धान्नं पराग्निपक्वस्याशनप्रतिषेधात्। कर्षणञ्च भूमिगतप्रचुरप्राणिमरणनिमित्तत्वात् बहुदुःखफलकत्वात्कर्षणं मृतमिव प्रमृतम् ॥ ५ ॥

सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते। सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्॥ ६॥

सत्यानृतं त्विति। प्रायेण सत्यानृतव्यवहारसाध्यत्वात्सत्यानृतं वाणिज्यम् नतु वाणिज्ये शास्त्रेण सत्यानृताभ्यनुज्ञानं तेन चैवापिजीव्यतइति च शब्देन वाणिज्यसमशिष्टत्वात् कुसीदमपि गृह्यते। पूर्वश्लोकोक्ता कृषिरेतत्श्लोके च वाणिज्यकुसीदे। अनापदीत्यनुवृत्तेरस्वयं कृतान्येतानि बोद्धव्यानि। यथाह गौतमः। कृषिवाणिज्ये स्वयञ्चाकृते कुसीदञ्च। सेवा तु दीनदृष्टिसन्दर्शनस्वामितर्जननीचक्रियादिधर्मयोगात् शुन इव वृत्तिरतः श्ववृत्तिरुक्ता तस्मात्तामकृतो ब्राह्मणस्त्यजेत् ॥ ६ ॥

कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव वा। त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा॥ ७॥

कुशूलधान्यकइति। कुशूलो ब्रीह्यगारं स्यादित्याभिधानिका इष्टकादिनिर्म्मितागारधान्यसञ्चयोभवेत्। अत्र कालविशेषापेक्षायां यस्य त्रैवार्षिकमन्नं पर्य्याप्तं भृत्यवृत्तये। अधिकं वापि विद्येत स सोमं पातुमर्हतीति मनूक्त एव कालोयाज्ञः।

तेन नित्यनैमित्तिकधर्मकृत्यपोष्यवर्गसहितस्य गृहिणो यावता धान्यादिधनेन वर्षत्रयं समधिकं वा निर्व्वाहो भवति तावद्धनः कुशूलधान्यक उच्यते। वर्षनिर्वाहोचितधान्यादिधनः कुम्भीधान्यः। प्राक्सौमिकीः क्रियाः कुर्य्यात् यस्यान्नं वार्षिकं भवेदिति याज्ञवल्क्येन गृहस्थस्य वार्षिकसञ्चयाभ्यनुज्ञानात्। मनुरपि यदा वानप्रस्थस्यैव समानिचयएव वेत्यनेन समासञ्चयं वक्ष्यति। तदपेक्षया बहुपोष्यवर्गस्य गृहिणः समुचितः संवत्सरसञ्चयः। मेधातिथिस्तु। यावता धान्यादिधनेन बहुभृत्यदारादिमतः त्रिसंवत्सरस्थितिर्भवति तावत्सुवर्णादिधनवानपि कुशूलधान्यइत्यभिधाय कुम्भी उष्ट्रिका षाण्मासिकधान्यादिनिचयः कुम्भीधान्यकइति व्याख्यातवान्। गोविन्दराजस्तु कुशूलधान्यकइत्येतद्व्याचक्ष्य कोष्ठप्रमाणधान्यसञ्चयो वा स्यात् द्वादशाहमात्रपर्य्याप्तधनः कुम्भीधान्यकइत्येतद्व्याचष्टे। उष्ट्रिकाप्रमाणधान्यादिसञ्चयो वा षडहमात्रपर्य्याप्तधनः। द्वादशाहं कुशूलेन वृत्तिः कुम्भ्या दिनानि षट्। इमाममूलां गोविन्दराजोक्तिं नानुरुन्ध्महे। ईहा चेष्टा तस्याभवं ऐहिकं व्यहपर्य्याप्तमैहिकन्धनं यस्य स त्र्यहैहिकः तथा वा स्यात्। दिनत्रयनिर्वाहोचितधनमित्यर्थः। श्वोभवं श्वस्तनं भक्तन्दस्यास्तीति मत्वर्थीयमिकं कृत्वा नश्वस्तनः तथा वा भवेत्॥ ७॥

चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम्।
ज्यायान् परः परोज्ञेयो धर्म्मतोलोकजित्तमः॥ ८॥

चतुर्णामपीति। एषाञ्चतुर्णामपि कुशूलधान्यकादीनां गृहस्थानां ब्राह्मणानां मध्ये यो यः शेषे पठितः सश्रेष्ठो ज्ञातव्यः यतोऽसौ वृत्तिसङ्कोचधर्म्मेण स्वर्गादिलोकजित्तमो भवति॥ ८॥

षट्कर्म्मैकोभवत्येषां त्रिभिरन्यः प्रवर्त्तते। द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति॥ ९॥

षट्कर्मेति। एषां गृहस्थानां मध्ये कश्चिद्गृहस्थोयोबहुपोष्यवर्गः स प्रकृतैर्ऋतायाचितभैक्षकृषिवाणिज्यैः पञ्चभिस्तेन चैवेत्यनेनैव चशब्दसमुच्चितेन कुसीदेनेत्येवं षड्भिः कर्म्मभिः षट्कर्मा भवति षड्भिरेतैर्जीवति। कृषिवाणिज्यकुसीदान्येतान्यस्वयंकृतानि गौतमोक्तानीत्युक्तम्। अन्यः पुनस्ततोऽल्पपरिकरः त्रिभिर्याजनाध्यापनप्रतिग्रहैरद्रोहेणेत्येतत् श्लोकसंगृहीतैः प्रवर्त्तते प्रशब्दोऽनर्थकोवर्त्तत इत्यर्थः अपरः पुनः प्रतिग्रहः प्रत्यवर इति वक्ष्यमाणत्वात् तत्परित्यागेन द्वाभ्यां याजनाध्यापनाभ्यां प्रवर्त्तते। उक्तत्रयापेक्षया चतुर्थः पुनर्ब्रह्मसत्रेणाध्यापनेन जीवति। मेधातिथिस्तु। एषां कुशूलधान्यकादीनां मध्यादेकः कुशूल

धान्यकः प्रवृत्तेरुञ्छशिलायाचितकृषिवाणिज्यैः षट्कर्मा भवति। षड्भिर्जीवति अन्योद्वितीयः कुम्भीधान्यकः। कृषिवाणिज्ययो र्निन्दितत्वात्। तत्त्यागे उञ्छशिलयाचितायाचितानां मध्या दिच्छातस्त्रिभिर्वर्त्तेत। एकस्य्वहिकोयाचितलाभं विहाय उञ्छशिलायाचितानां मध्यादिच्छयाद्वाभ्यां वर्त्तेत। चतुर्थः पुनरय्यस्तनिकोब्रह्मसत्रेण जीवति। ब्रह्मसत्रं शिलोञ्छयोरन्य तरा वृत्तिः। ब्रह्मणोब्राह्मणस्य सततभवत्वात् सत्रमिव सत्रमित्याह॥ ९॥

वर्त्तयंश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः। इष्टीः पार्व्वायणान्तीयाः केवलानिर्व्वपेत्सदा॥ १०॥

वर्त्तयंश्चेति। शिलोञ्छाभ्याञ्जीवन् धनसाध्यकर्मान्तरानु ष्ठानासामर्थ्यात् अग्निहोत्रनिष्ठएव स्यात्। पार्व्वायणान्ती याश्च इष्टीः केवला अनुतिष्ठेत्। पर्व्वंच अयनञ्च पर्व्वायणे तयो रन्तास्तत्र भवा दर्शपौर्णमासाग्रयणात्मिकाः॥ १०॥

न लोकवृत्तं वर्त्तेत वृत्तिहेतोः कथञ्चन। अजि ह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम्॥ ११॥

न लोकवृत्तमिति। लोकवृत्तमसत्प्रियाख्यानं विचित्रपरि हासकथादिकञ्जीविकार्थं न कुर्य्यात्। अजिह्मां स्वपात्मगणा

भिमानादिपापरहिताम्। अशठां दम्भादिव्याजशून्यां शुद्धां वैश्यादिवृत्तिरसङ्कीर्णां ब्राह्मणजीविकामनुतिष्ठेत्। अनेकार्थत्वाद्धातूनां अनुष्ठानार्थोऽयं जीवतिरिति सकर्मता ॥ ११ ॥

सन्तोषं परमास्थाय सुखार्थी संयतो भवेत्। सन्तोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥ १२ ॥

सन्तोषमिति। यथासम्भवभृत्यात्मप्राणधारणावश्यकपञ्च यज्ञाद्यनुष्ठानसमर्थोचितधनाऽधिकाऽस्पृहा सन्तोषः तमतिश यितमाश्रित्य प्रभूतधनार्जने संयमं कुर्यात्। यतः सन्तोषहेतु कमिह सुखं परत्र चाव्ययस्य विहितानुष्ठानात् स्वर्गादिसुखं विपर्ययस्त्वसन्तोषो दुःखमूलं बहुधनार्जनप्रयासेन प्रचुर दुःखो दृष्टादृष्टसंपत्तौ विपत्तौ न क्षमात् ॥ १२ ॥

अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः। स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत् ॥ १३ ॥

अतोन्यतमयेति। अबहुभृत्यस्यैकवृत्त्या निर्वाहसम्भवे सत्यन्य तमयेति विधीयते बहुभृत्यस्य त्वसम्भवे षट्कर्मैको भवत्येषामिति विहितत्वात्। अथवा एकवाक्यतावगमात् व्रतविधायकत्वाच्चा न्यतमया वृत्त्येत्यनुवादकत्वादेकत्वमविवक्षितम्। उक्तवृत्तीना

मन्यनमया वृत्त्या जीवन् स्नातको ब्राह्मण इमानि वक्ष्यमाणानि यथासम्भवं स्वर्गायुर्यशसां हितानि व्रतानि कुर्य्यात्। इदं मया कर्त्तव्यमिदं न कर्त्तव्यमित्येवं विधः संकल्पविशेषो व्रतम्॥ १३॥

वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः। तद्धि कुर्व्वन् यथाशक्ति प्राप्नोति परमां गतिम्॥ १४॥

वेदोदितमिति। वेदोक्तं स्मार्त्तमपि वेदमूलत्वाद्वेदोक्तमेव स्वकं स्वाश्रमोक्तं यावज्जीवमतन्द्रितोऽनलसः कुर्य्यात्। हि हेतौ यस्मात्तत्कुर्व्वन् यथासामर्थ्यं परमाङ्गतिं मोक्षलक्षणां प्राप्नोति नित्यकर्म्मानुष्ठानात्पापक्षये सति निष्पापान्तःकरणेन ब्रह्मसाक्षात्कारान्मोक्षावाप्तिः। तदुक्तं मोक्षधर्म्मे। ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्म्मणः। तत्रादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि। आत्मनि अन्तःकरणे॥ १४॥

नेहेतार्थान्प्रसङ्गेन न विरुद्धेन कर्म्मणा। न विद्यमानेष्वर्थेषु नार्त्त्यामपि यतस्ततः॥ १५॥

नेहेतार्थानिति। प्रसज्यते यत्र पुरुषः स प्रसङ्गो गीतवादित्रादिः। तेनार्थान्नार्ज्जयेत्। नापि शास्त्रनिषिद्धेन कर्म्मणा

अयाज्ययाजनादिना। नच विद्यमानेषु धनेषु। नचाप्यवि द्यमानेष्वपि प्रकारान्तरसम्भवे यतस्ततः पतितादिभ्योपि ॥ १५ ॥

इन्द्रियार्थेषु सर्व्वेषु न प्रसज्येत कामतः। अति प्रसक्तिञ्चैतेषाम्मनसा सन्निवर्त्तयेत् ॥ १६ ॥

इन्द्रियार्थेष्विति। इन्द्रियाणामर्थाः रूपरसगन्धस्पर्शा दयः तेष्वनिषिद्धेष्वपि स्वदारसुरतादिषु न प्रसज्येत नाति प्रसक्तिमत्यन्तसेवनात्मिकां कुर्य्यात्। कामतउपभोगार्थं अति प्रसक्तिनिवृत्त्युपायमाह। अतिप्रसक्तिं चैतेषामिति। विषयाणा मस्थिरत्वस्वर्गापवर्गात्मकश्रेयोविरोधित्वादिभावनया मनसा सम्यक् निवर्त्तयेत् ॥ १६ ॥

सर्व्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः। यथातथाध्यापयंस्तु सा ह्यस्य कृतकृत्यता ॥ १७ ॥

सर्वानिति। ये वेदाभ्यासविरोधिनः अर्था अत्यन्तोत्थरगृहोप सर्पणकृषिलोकयाचादयः। तान्सर्वान्परित्यजेत्। कथन्तर्हि भृत्यात्मपोषणमित्याशङ्क्याह। यथातथा केनाप्युपायेन स्वाध्या याविरोधिना भृत्यात्मानौ जीवयन् यस्मात्साऽस्य स्नातकस्य कृतकृत्यता कृतार्थता यन्नित्यं स्वाध्यायपरता ॥ १७ ॥

वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च। वेष
वाग्बुद्धिसारूप्यमाचरन् विचरेदिह ॥ १८ ॥

वयसइति। वयसः क्रियायाधनस्य श्रुतस्य कुलस्यानुरू
पेण वेषवाग्बुद्धीराचरन् लोके प्रवर्त्तेत। यथा यौवने स्रग्ग
न्धलेपनादिधारणन्निवर्ग्गानुसारिणी वाग्बुद्धिश्च एवं कर्म्मादि
ष्वप्युन्नेयम् ॥ १८ ॥

बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥ १९ ॥

बुद्धीति। वेदाविरुद्धानि शीघ्रं बुद्धिवृद्धिजनकानि व्याक
रणमीमांसास्मृतिपुराणन्यायादीनि शास्त्राणि तथा धन्यानि
धनाय हितानि अर्थशास्त्राणि वार्हस्पत्यौशनसादीनि तथा
हितानि दृष्टोपकारकाणि वैद्यकज्योतिषादीनि तथा पर्य्याय
कथनेन वेदार्थावबोधकान्निगमाख्यांश्च ग्रन्थान्नित्यं पर्य्यालो
चयेत् ॥ १९ ॥

यथायथा हि पुरुषः शास्त्रं समधिगच्छति।
तथातथा विजानाति विज्ञानञ्चास्य रोचते ॥ २० ॥

यथायथेति। यस्माद्यथायथा पुरुषः शास्त्रं सम्यगभ्य
स्यति। तथातथा विशेषेण जानाति शास्त्रान्तरविषयमपि

चास्य विज्ञानं रोचते उक्तञ्चभवति दीप्यर्थत्वाद्रुचेरभिला षायत्वाभावाद्रुच्यर्थानाम्प्रीयमाणइति न संप्रदानसंज्ञा ॥२०॥

ऋषियज्ञन्देवयज्ञम्भूतयज्ञञ्च सर्व्वदा। नृयज्ञम्पितृयज्ञञ्च यथाशक्ति न हापयेत् ॥ २१ ॥

ऋषियज्ञमिति। स्वाध्यायादीन् पञ्चयज्ञान् यथाशक्ति न त्यजेत्। तृतीयाध्यायविहितानामपि पञ्चयज्ञानामिह निर्द्देशउत्तरत्र विशेषविधानार्थः। स्नातकव्रतत्वबोधनार्थश्च ॥ २१ ॥

एतानेके महायज्ञान् यज्ञशास्त्रविदोजनाः। अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥ २२ ॥

एतानेकइति। एके गृहस्थावाह्यान्तरयज्ञानुष्ठान शास्त्रज्ञा एतान् पञ्चमहायज्ञान् ब्रह्मयज्ञाद्याख्यान् ब्रह्मज्ञानप्रकर्षात् वहिरचेष्टमानाः पञ्चसु बुद्धीन्द्रियेष्वेव पञ्चरूपज्ञानादिसंयमं कुर्व्वन्तः सम्पादयन्ति यज्ञानां होमत्वानुपपत्तेः सम्पादनार्थोजुहोतिः ॥ २२ ॥

वाच्येके जुह्वति प्राणम्प्राणे वाचञ्च सर्व्वदा।
वाचि प्राणे च पश्यन्तो यज्ञनिर्वृत्तिमक्षयाम् ॥ २३ ॥

वाचीति। एके गृहस्था ब्रह्मविदो वाचि, प्राणवायौ च यज्ञनिर्वृत्तिमक्षयफलां जानन्तः सततं वाचि प्राणं जुह्वति वाचञ्च प्राणे। भाषमाणेन वाचि प्राणं जुहोमीति अभाषमाणेनोच्छ्वसता प्राणे वाचं जुहोमीति ध्यातव्यमित्यनेन विधीयते। यथा कौषीतकिरहस्यब्राह्मणं। यावद्वै पुरुषो भाषते न तावत्प्राणितुं शक्नोति प्राणं तदा वाचि जुहोति यावद्धि पुरुषः प्राणिति न तावद्भाषितुं शक्नोति वाचन्तदा प्राणे जुहोति एतेऽनन्तेऽमृते आहुती जाग्रत्स्वपंश्च सततं जुहोति। अथ वै अन्या आहुतयः अनन्तवन्त्यस्ताः कर्म्ममय्यो हि भवन्त्येवं हि तस्यैतत्पूर्व्वे विद्वांसोऽग्निहोत्रं जुहवाञ्चक्रुरिति ॥ २३ ॥

ज्ञानेनैवापरे विप्रा यजन्त्येतैर्मखैः सदा। ज्ञानमूलां क्रियामेषाम्पश्यन्तो ज्ञानचक्षुषा ॥ २४ ॥

ज्ञानेनैवेति। अपरे विप्रा ब्रह्मनिष्ठाः सर्व्वथा ब्रह्मज्ञानेनैव एतैर्मखैर्यजन्ति एतांश्च यज्ञाननुतिष्ठन्ति। कथमेतदित्याह ज्ञानं ब्रह्म सत्यं ज्ञानमनन्तमित्यादिश्रुतिषु प्रसिद्धं। ज्ञान

कृत्वाऽमेषां यज्ञानां क्रियामुत्पत्तिं जानन्तः। ज्ञायतेऽनेनेति ज्ञानं चक्षुरिव चक्षुः। ज्ञानचक्षुषा उपनिषदा सर्व्वं खल्विदं ब्रह्म तज्जलानित्यादिकया पञ्चयज्ञानपि ब्रह्मोत्पत्तिकान् ब्रह्मात्मकान् ध्यायन्तः सम्पादयन्ति पञ्चयज्ञफलमश्नुवत इत्यर्थः। श्लोकत्रयेण ब्रह्मनिष्ठानां वेदसंन्यासिनां गृहस्थानाममी विधयः॥ २४॥

अग्निहोत्रञ्च जुहुयादाद्यन्ते द्युनिशोः सदा।
दर्शेन चार्द्धमासान्ते पौर्णमासेन चैव हि॥ २५॥

अग्निहोत्रमिति। द्युशब्दोऽत्र दिनपर्य्यायः। उदितहोमपक्षे दिनस्यादौ निशायास्त्वादौ। अनुदितहोमपक्षे दिनस्यान्ते निशायास्त्वन्ते। यद्वा। उदितहोमपक्षे दिनस्यादौ दिनान्ते च। अनुदितहोमपक्षे निशादौ निशान्ते च अग्निहोत्रं कुर्य्यात्। कृष्णपक्षात्मकार्द्धमासान्ते दर्शाख्येन कर्म्मणा। शुक्लपक्षात्मकार्द्धमासान्ते च पौर्णमासाख्येन यजेत॥ २५॥

शस्यान्ते नवशस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः।
पशुना त्वयनस्यादौ समान्ते सौमिकैर्मखैः॥ २६॥

शस्यान्त इति। पूर्व्वार्जितधान्यादिशस्ये समाप्ते। शरदि नवानामिति सूत्रकारवचनात् असमाप्तेपि पूर्व्वशस्ये नवशस्ये

त्पत्तौ आग्रयणेन यजेत। शस्यक्षयस्यानियतत्वात् धनिना बहुहायनजीवनोचितधान्यसम्भवाच्च शस्यान्तग्रहणाच्च नव शस्योत्पत्तिरेवाभिप्रेता नियतत्वात्तस्याः प्रत्यब्दं निमित्ततो त्पत्तेः। व्यृतुः संवत्सर इत्येतन्मतावयणेन चत्वारश्चत्वारो मासा ऋतवस्तदन्तेऽध्वरैश्चातुर्मास्याख्यैर्यागैर्यजेत। अयनयो रुत्तरदक्षिणयोरादौ पशुना यजेत पशुबन्धाख्य यागमनु तिष्ठेत्। ज्योतिःशास्त्रे चैत्रशुक्लप्रतिपदादिवर्षगणनात्। शिशिरेण समाप्ते वर्षे वसन्ते सोमरससाध्यैरग्निष्टोमादिया गैर्यजेत्॥ २६॥

नानिष्ट्वा नवशस्येष्ट्या पशुना चाग्निमान् द्विजः।
नवान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः॥ २७॥

नानिष्ट्वेति। आहिताग्निर्द्विजो दीर्घमायुर्जीवितुमिच्छन् आग्रयणमकृत्वा नवान्नं न भक्षयेत्। नच पशुयागमकृत्वा मांसमश्नीयात्॥ २७॥

नवेनानर्चिता ह्यस्य पशुहव्येन चाग्नयः। प्राणा नेवात्तुमिच्छन्ति नवान्नामिषगर्द्धिनः॥ २८॥

नवेनेति। दोषं कथयन् नित्यतामनयोराह यस्मान्नव हव्येन पशुदानेन चानर्चिता अकृतयागा अग्नयो नवान्नमांस

भिलाषिणोऽस्याहिताग्नेः प्राणानेव खादितुमिच्छन्ति। गर्द्धो ऽभिलाषातिशयः गृधेर्धात्वर्थस्य रूपं सोऽस्यास्तीति गर्द्धी मत्वर्थीयइनिः॥ २८॥

आसनाशनशय्याभिरद्भिर्मूलफलेन वा। नास्य कश्चिद्वसेद्गेहे शक्तितोऽनर्चितोऽतिथिः॥ २९॥

आसनाशनेति। यथाशक्त्यासनभोजनादिभिरनर्चितोऽतिथिरस्य गृहस्थस्य गृहे न वसेत्। अनेन शक्तितोऽतिथिं पूजयेदित्युक्तमपि उत्तरार्थमनूद्यते॥ २९॥

पाषण्डिनोविकर्मस्थान्वैडालव्रतिकान् शठान्। हैतुकान्वकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्॥ ३०॥

पाषण्डिनइति। पाषण्डिनोवेदवाह्यव्रतलिङ्गधारिणः शाक्यभिक्षुक्षपणकादयः। विकर्मस्थाः प्रतिषिद्धवृत्तिजीविनः। वैडालव्रतिकवकवृत्ती वक्ष्यमाणलक्षणौ। शठावेदष्वश्रद्धानाः। हैतुकावेदविरोधितर्कव्यवहारिणः। एतानतिथिकालोपस्थितान् वाङ्मात्रेणापि न पूजयेत्। पूजारहिते अन्नदानमात्रन्तु शक्तितोऽपचमानेभ्यइत्यनज्ञातमेव॥ ३०॥

वेदविद्याव्रतस्नातान् श्रोत्रियान् गृहमेधिनः।
पूजयेद्धव्यकव्येन विपरीतांश्च वर्जयेत् ॥ ३१ ॥

वेदविद्येति। वेदविद्याव्रतस्नातानिति विद्यास्नातक व्रतस्नातकोभयस्नातकास्त्रयोपि गृह्यन्ते। यथाह हारीतः। यः समाप्य वेदानसमाप्य व्रतानि समावर्त्तते सविद्यास्नातकः। यः समाप्यव्रतानि असमाप्यवेदान्समावर्त्तते सव्रतस्नातकः। उभयं समाप्य यः समावर्त्तते स विद्याव्रतस्नातकः। यद्यपि स्नातकधर्म्मत्वेनैव स्नातकमात्रप्राप्तिस्तथापि श्रोत्रियत्वं विवक्षितम्। तान् स्नातकान् श्रोत्रियान् हव्यकव्येन पूजयेत्। विपरीतान्पुनर्व्वर्ज्जयेत् ॥ ३१ ॥

शक्तितोऽपचमानेभ्यो दातव्यं गृहमेधिना। संविभागश्च भूतेभ्यः कर्त्तव्योऽनुपरोधतः ॥ ३२ ॥

शक्तित इति। अपचमाना ब्रह्मचारिपरिव्राजकाः पाषण्डादयः। ब्रह्मचारिपरिव्राजकानामुक्तमपि अन्नदानं पचमानापेक्षयातिशयार्थं स्नातकव्रतत्वार्थञ्च पुनरुच्यते। मेधातिथिगोविन्दराजौ तु। भिक्षाञ्च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिण इति ब्रह्मचारिपरिव्राजकयोरुक्तत्वात्। पाषण्ड्यादिविषयत्वमेवास्य वचनस्य इत्यूचतुः। स्वकुटुम्बानुरोधेन वृक्षादिपर्य्यन्तं प्राणिभ्योपि जलादिनापि संविभागः कर्त्तव्यः ॥ ३२ ॥

राजतो धनमन्विच्छेत्संसीदन् स्नातकः क्षुधा।
याज्यान्तेवासिनोर्व्वापि न त्वन्यत इति स्थितिः॥३३॥

राजतइति। न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतित इति निषेधात् राजशब्दोऽत्र क्षत्रियनृपतिपरः। स्नातकः क्षुधा अवसीदन् द्विजातिप्रतिग्रहसम्भवेपि यथाशास्त्रवर्त्तिनः क्षत्रियाद्राज्ञो याज्यशिष्याभ्यां वा प्रथमं धनमभिलषेत्। राज्ञो महाधनत्वेन पीडाविरहात्। याज्यशिष्ययोश्च कृतोपकार तया प्रत्युपकारप्रवणत्वात्। तदसम्भवेत्वन्यस्मादपि द्विजाद्धन माददीत। तदभावे तु सर्व्वतः प्रतिगृह्णीयादिति आपद्धर्मं वक्ष्यति। एवञ्चानापदि प्रथमं क्षत्रियनृपयाज्यशिष्येभ्यः प्रति ग्रहनियमार्थं वचनं। अतएवाह नत्वन्यतइति स्थितिः शास्त्र मर्य्यादा। नच संसीदन्नित्यभिधानादापद्विषयत्वमस्यवाच्यं अव्यभिचारादनापत्प्रकरणात्। संसीदन्नित्यस्य चोपात्त धनाभावपरत्वात्। नच धनाभावमात्रमापत्। किन्तु तस्मिन् सति विहितोपायासम्भवात्। अन्यथा सद्यः प्रक्षालको प्यापद्वृत्तिः स्यात्। यदि चापद्विषयत्वमस्य भवेत् तदा नत्व न्यतइत्यनेन सर्व्वतः प्रतिगृह्णीयादिति विरुध्येत। यच्चापत्प्रक रणे। सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः। याच्यः स्यादित्युक्तं तच्छूद्रनृपतिविषयम्। एवं राजादिप्रतिग्रहा सम्भव॥ ३३॥

न सीदेत् स्नातको विप्रः क्षुधा शक्तः कथञ्चन।
न जीर्णमलवद्वासा भवेच्च विभवे सति ॥ ३४ ॥

नसीदेदिति। विद्यादियोगात्प्रतिग्रहशक्तोपि स्नातको ब्राह्मणउक्तराजादिप्रतिग्रहलाभे सति न क्षुधावसन्नोभवेत् नच धने सम्भवति जीर्णे मलिने च वाससी बिभृयात् ॥ ३४ ॥

कॢप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः।
स्वाध्याये चैव युक्तः स्यान्नित्यमात्महितेषु च ॥ ३५ ॥

कॢप्तकेशेति। कल्पनञ्छेदनं लूनकेशनखश्मश्रुस्तपः क्लेशसहः शुक्लवासा बाह्याभ्यन्तरशौचसम्पन्नोवेदाभ्यासयुक्तश्रौषधोपयोगादिना चात्महितपरः स्यात् ॥ ३५ ॥

वैणवीन्धारयेद्यष्टिं सोदकञ्च कमण्डलुम्। यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले ॥ ३६ ॥

वैणवीमिति। वेणुदण्डमुदकसहितञ्च कमण्डलुम् यज्ञोपवीतं कुशमुष्टिं शोभने च सौवर्णकुण्डले धारयेत् ॥ ३६ ॥

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन।
नोपसृष्टं न वारिस्थं न मध्यंनभसोगतम् ॥ ३७ ॥

नेक्षेतेति। उद्यन्तमस्तमयन्तञ्च सूर्य्यविम्बमसम्पूर्णं नेक्षेत। उपसृष्टं ग्रहोपरक्तम् रञ्ज्वाद्युपसर्गयुक्तञ्च वारिस्थञ्जलप्रतिविम्बितम्। नभोमध्यं गतं मध्यन्दिनसमये ॥ ३७ ॥

न लङ्घयेद्वत्सतन्त्रीं न प्रधावेच्च वर्षति। नचो
दके निरीक्षेत स्वं रूपमिति धारणा ॥ ३८ ॥

नलङ्घयेदिति। वत्सबन्धनं रज्जुं न लङ्घयेत्। वर्षति मेघे
न धावेत। नच स्वदेहप्रतिबिम्बं जले निरीक्षेत इतिशास्त्रे
निश्चयः। ३८ ॥

मृदङ्गान्दैवतं विप्रं घृतं मधु चतुष्पथम्। प्रद
क्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन् ॥ ३९ ॥

मृदमिति। प्रस्थितः सन् संमुखावस्थितान् उद्धृतमृत्तिका
गोपाषाणादिदेवताब्राह्मणघृतक्षौद्रचतुष्पथमहाप्रमाणज्ञात
वृक्षान् दक्षिणहस्तमार्गेण कुर्य्यात्। प्रदक्षिणानीति नपुंसकम
नपुंसकैनैकवच्चास्यान्यतरस्यामिति नपुंसकत्वम् ॥ ३९ ॥

नोपगच्छेत्प्रमत्तोपि स्त्रियमार्त्तवदर्शने। समान
शयने चैव न शयीत तया सह ॥ ४० ॥

नोपगच्छेदिति। प्रमत्तः कामार्त्तोपि रजोदर्शने निषिद्ध
स्पर्शदिनत्रये स्त्रियं नोपगच्छेत्। स्पर्शनिषेधनैव तासामा
शास्त्रतस्तदति निषेधसिद्धौ प्रायश्चित्तगौरवार्थं स्नातकव्रत
त्वार्थञ्च पुनरारम्भः। नचागच्छन्नपि तया सहैकशय्यायां
स्वप्यात् ॥ ४० ॥

रजसाभिप्लुतां नारीं नरस्य ह्युपगच्छतः। प्रज्ञा तेजोबलञ्चक्षुरायुश्चैव प्रहीयते॥ ४१॥

रजसाभिप्लुतामिति। यस्माद्रजस्वलां स्त्रियं पुरुषस्योपगच्छतः प्रज्ञावीर्य्यबलचक्षुरायूंषि नश्यन्ति तस्मात्तां नोपगच्छेत्॥ ४१

तां विवर्जयतस्तस्य रजसा समभिप्लुताम्। प्रज्ञा तेजोबलञ्चक्षुरायुश्चैव प्रवर्द्धते॥ ४२॥

तामिति। तान्तु रजस्वलामगच्छतस्तस्य प्रज्ञादयो वर्द्धन्ते तस्मात्तां नोपेयात्॥ ४२॥

नाश्नीयाद्भार्य्यया सार्द्धं नैनामीक्षेत चाश्नतीम्। क्षुवतीं जृम्भमाणां वा नचासीनां यथा सुखम्॥ ४३॥

नाश्नीयादिति। भार्य्यया सह एकपात्रे नाश्नीयात्। एनाञ्च भुञ्जानां क्षुतञ्जृम्भञ्च कुर्व्वतीं यथासुखं निर्य्यन्त्रणप्रदेशावस्थिताञ्च नेक्षेत॥ ४३॥

नाञ्जयन्तीं स्वके नेत्रे नचाभ्यक्तामनावृताम्।
न पश्येत्प्रसवन्तीञ्च तेजस्कामो द्विजोत्तमः ॥ ४४ ॥

नाञ्जयन्तीमिति। तथा स्वनेत्रयोरञ्जनं कुर्व्वतीन्तैलाद्यभ्यक्तां अनावृतां स्तनावरणरहितां नतु नग्नाम्। नग्नां नेचेत च स्त्रियमिति वक्ष्यमाणत्वात्। अपत्यञ्च प्रसवन्तीं ब्राह्मणो न निरीक्षेत ॥ ४४ ॥

नान्नमद्यादेकवासा न नग्नः स्नानमाचरेत्।
न मूत्रम्पथि कुर्व्वीत न भस्मनि न गोव्रजे ॥ ४५ ॥

नान्नमद्यादिति। एकवस्त्रोनान्नं भुञ्जीत। उपस्थाच्छादनवासोरहितो न स्नायात्। मूत्रग्रहणमधःकायमलविसर्गोपलक्षणार्थम्। तेन मूत्रपुरीषे वर्त्मनि भस्मनि गोष्ठे च न कुर्यात् ॥ ४५ ॥

न फालकृष्टे न जले न चित्यां नच पर्व्वते।
न जीर्णदेवायतने न वल्मीके कदाचन ॥ ४६ ॥

नफालकृष्टइति। तथा फालकृष्टे क्षेत्रादावुदके अन्यार्थकृतेष्टकाचये पर्व्वते चिरन्तनदेवतागारे कृमिकृतमृत्तिकाचये च विण्मूत्रोत्सर्गं न कदाचन कुर्यात् ॥ ४६ ॥

न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि च स्थितः। न नदीतीरमासाद्य नच पर्व्वतमस्तके॥ ४७॥

न ससत्त्वेष्विति। तथा न सप्राणिषु बिलेषु न अजन्नचोत्थितो न नदीतटमाश्रित्य नापि पर्व्वतशृङ्गे मूत्रपुरीषे कुर्य्यात्। पर्व्वतनिषेधादेव तच्छृङ्गनिषेधे सिद्धे पुनः पर्व्वतशृङ्गनिषेधस्तदितरपर्व्वते विकल्पार्थः। तच्चेच्छाविकल्पस्यान्यथापि प्राप्तौ सामान्यनिषेधवैयर्थ्यात्। व्यवस्थितोऽत्र विकल्पः अत्यन्तार्त्तस्य पर्व्वते न दोषोऽन्यस्य तु दोषः॥ ४७॥

वाय्वग्निविप्रमादित्यमपः पश्यंस्तथैव गाः। न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्जनं॥ ४८॥

वाय्वग्निविप्रमिति। वायुमग्निं ब्राह्मणं सूर्य्यं जलं गाश्च पश्यन्न कदापि मूत्रपुरीषोत्सर्गं कुर्य्यात्। वायोरदृष्टत्वेन दर्शनासम्भवे वायोरितद्रव्यकाष्ठादिनिषेधोयम्॥ ४८॥

तिरस्कृत्योच्चरेत्काष्ठलोष्टपत्रतृणादिना। नियम्य प्रयतोवाचं सम्वीताङ्गोऽवगुण्ठितः॥ ४९॥

तिरस्कृत्योच्चरेदिति। अन्तर्द्धाय काष्ठादिना भूमिं अवागनुच्छिन्नः प्रच्छादिताङ्गोऽवगुण्ठितशिरा मूत्रपुरीषोत्सर्गं

कुर्य्यात्। शुष्कैस्तृणैर्व्वा काष्ठैर्व्वा पर्णैर्व्वेणुदलेन वा। मृण्मये भाजनेनापि अन्तर्द्धाय वसुन्धरामिति वायुपुराणवचनात्। शुष्काणि काष्ठपत्रतृणानि ज्ञेयानि ॥ ४९ ॥

मूत्रोच्चारसमुत्सर्गन्दिवा कुर्य्यादुदङ्मुखः। दक्षिणाभिमुखोरात्रौ सन्ध्ययोश्च यथा दिवा ॥ ५० ॥

मूत्रोच्चारसमुत्सर्गमिति। मूत्रपुरीषोत्सर्गमहनि सन्ध्ययोश्चोत्तराभिमुखोरात्रौ चेद्दक्षिणामुखः कुर्य्यात्। धरणीधरस्तु। स्वस्थोऽनाशाय चेतसइति चतुर्थपदम्पठित्वा चेतसो बुद्धेरनाशायेति व्याख्यातवान्। पारम्परीयमाम्नायं हित्वा विद्वद्भिरादृतम्। पाठान्तरं व्यरचयत्सुखेन धरणीधरः ॥५०॥

छायायामन्धकारे वा रात्रावहनि वा द्विजः। यथासुखमुखः कुर्य्यात्प्राणबाधभयेषु च ॥ ५१ ॥

छायायामिति। रात्रौ छायायामन्धकारे वा अहनि छायायां नीहाराद्यन्धकारे वा दिग्विशेषाज्ञाने सति चौरव्याघ्रादिकृतप्राणविनाशभयेषु च यथेप्सितमुखोमूत्रपुरीषे कुर्य्यात् ॥ ५१ ॥

प्रत्यग्निम्प्रतिसूर्य्यञ्च प्रतिसोमोदकद्विजान्। प्रतिगाम्प्रतिवातञ्च प्रज्ञा नश्यति मेहतः ॥ ५२॥

प्रत्यग्निमिति। वाय्वग्निविप्रमित्यनेन मेहतोऽग्न्यादीनान्दर्शनं निषिद्धं अनेन त्वपश्यतोपि संमुखीनत्वं निषिध्यते। अग्निसूर्य्यचन्द्रजलब्राह्मणगोवाताभिमुखं मूत्रपुरीषे कुर्व्वतः प्रज्ञा नश्यति तस्मादेतन्न कर्त्तव्यं प्रतिवातमित्यस्य स्थाने प्रतिसन्ध्यमित्यन्ये पठन्ति ॥ ५२ ॥

नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम्। नामेध्यम्प्रक्षिपेदग्नौ नच पादौ प्रतापयेत् ॥ ५३ ॥

नाग्निमिति। नाग्निर्मुखेन ध्मातव्यः किन्तर्हि व्यजनादिना। न नग्नां स्त्रियमीक्षेत मैथुनादन्यत्रेति सांख्यायनदर्शनात्। मैथुनव्यतिरेकेण नग्नां स्त्रियं न पश्येत्। अमेध्यं मूत्रपुरीषादिकं नाग्नौ क्षिपेत्। नच पादौ प्रतापयेत्। प्रशब्दादग्नौ पादावुत्क्षिप्य साक्षान्न तापयेत्। वस्त्रादितापस्वेदेऽविरोधः ॥ ५३ ॥

अधस्तान्नोपदध्याच्च नचैनमभिलङ्घयेत्। नचैनम्पादतः कुर्य्यान्न प्राणाबाधमाचरेत्॥ ५४॥

अधस्तादिति। खट्वादिभ्योऽधस्तादङ्गारशकट्यादिकं न कुर्य्यात्। नचाग्निमुत्प्लुत्य गच्छेत् नच सुप्तः पाददेशेऽग्निं स्थापयेत्। नच प्राणपीडाकरं कर्म्म कुर्य्यात्॥ ५४॥

नाश्नीयात्सन्धिवेलायां न गच्छेन्नापि संविशेत्। नचैव प्रलिखेद्भूमिं नात्मनोपहरेत्स्रजम्॥ ५५॥

नाश्नीयादिति। सन्ध्याकाले भोजनं ग्रामान्तरगमनं निद्राञ्च न कुर्य्यात्। नच रेखादिना भूमिमुल्लिखेत्। नच मालान्धृतां स्वयमेवापनयेत्। अर्थादन्येनापनयेदित्युक्तम् ॥ ५५॥

नाप्सु मूत्रम्पुरीषं वा ष्ठीवनं वा समुत्सृजेत्। अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा॥ ५६॥

नाप्सु मूत्रमिति। मूत्रम्पुरीषं श्लेष्माणं मूत्राद्यमेध्यलिप्तवस्त्रं अन्यद्वा भुक्तोच्छिष्टाद्यमेध्यं रुधिरं विषाणि च हनिमात्रात्त्रिमभेदभिन्नानि न जले प्रक्षिपेत्॥ ५६॥

नैकः स्वप्याच्छून्यगेहे शयानं न प्रबोधयेत्।
नोदक्ययाभिभाषेत यज्ञं गच्छेन्नचावृतः॥ ५७॥

नैकइति। उत्सन्नजनवासगेहे नैकः शयीत वित्तविद्यादिभिरधिकञ्च सुप्तं न प्रबोधयेत्। रजस्वलया सम्भाषणं न कुर्य्यात्। यज्ञं चाकृतवरणोऽनृत्विक् न गच्छेत्। दर्शनार्थे च्छया गच्छेत्। दर्शनार्थं काममिति गौतमवचनात्॥ ५७॥

अग्न्यागारे गवां गोष्ठे ब्राह्मणानाञ्च सन्निधौ।
स्वाध्याये भोजने चैव दक्षिणम्पाणिमुद्धरेत्॥ ५८॥

अग्न्यागारइति। अग्निगृहे गवां निवासे ब्राह्मणानां बहूनां समीपे स्वाध्यायभोजनकालयोश्च दक्षिणपाणिं सवाङ्गं वास सउद्धरेत् बहिष्कुर्य्यात्॥ ५८॥

न वारयेद्गां धयन्तीं नचाचक्षीत कस्यचित्। न दिवीन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुधः॥ ५९॥

न वारयेदिति। गाञ्जलं क्षीरं वा पिबन्तीं न निवारयेत्। दोहनार्थं वत्सपानादन्यत्र निषेधः। नापि परकीयक्षीरादि पिबन्तीं तस्य कथयेत्। नचेन्द्रधनुराकाशे दृष्ट्वा निषिद्धदर्शनदोषज्ञः कस्यचिद्दर्शयेत्॥ ५९॥

नाधार्म्मिके वसेद्ग्रामे न व्याधिबहुले भृशम्।
नैकः प्रपद्येताध्वानं न चिरम्पर्व्वते वसेत्॥ ६० ॥

नाधार्म्मिकइति। अधार्म्मिकइत्यनेन यत्राधार्म्मिकावसन्ति न तत्र वासोयुक्तः। यत्र वा निन्दितदुश्चिकित्सितव्याधिपीडिताबहवोजनास्तत्र भृशमत्यर्थं वासो न युक्तः। पन्थानं एकः कदापि न गच्छेत् पर्व्वते च दीर्घकालं न वसेत्॥ ६० ॥

न शूद्रराज्ये निवसेन्नाधार्म्मिकजनावृते। न पाषण्डिगणाक्रान्ते नोपसृष्टेऽन्त्यजैर्नृभिः॥ ६१ ॥

न शूद्रराज्यइति। यत्र देशे शूद्रोराजा तत्र न वसेत्। अधार्म्मिकजनैश्च वाह्यतः परिवृते ग्रामादौ न वसेत्। नाधार्म्मिकइत्यनेन यत्राधार्म्मिकावसन्ति तत्र वासोनिषिद्धः अनेन वाह्यतोपि परिवृतइत्यपुनरुक्तिः। पाषण्डिभिश्च वेदवाह्यलिङ्गधारिभिर्व्वशीकृते। चाण्डालादिभिश्चान्त्यजैरुपद्रुते न वसेत् ॥ ६१ ॥

न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत्।
नातिप्रगे नातिसायं न सायम्प्रातराशितः॥ ६२ ॥

न भुञ्जीतेति। उद्धृतस्नेहम्पिण्याकादि न भुञ्जीत। अतितृप्तिं वारद्वयेपि न कुर्य्यात्। जठरम्पूरयेदर्द्धमन्नैर्भागञ्जले

नच। वार्य्यः सञ्चरणार्थन्तु चतुर्थमवशेषयेदित्यादिविष्णु पुराणवचनात्। सूर्य्योदयकाले सूर्य्यास्तमये च भोजनं न कुर्य्यात्। प्रातराशितोऽतितृप्तः सायन्न भुञ्जीत॥ ६२॥

न कुर्वीत वृथाचेष्टां न वार्य्यञ्जलिना पिवेत्।
नोत्सङ्गे भक्षयेद्भक्ष्यान्न जातु स्यात्कुतूहली॥ ६३॥

नकुर्वीतेति। दृष्टादृष्टार्थशून्यं व्यापारन्न कुर्य्यात्। अञ्जलिना च जलं न पिवेत्। ऊर्वोरुपरि विन्यस्य मोदकादीन्न भक्षयेत्। असति प्रयोजने किमेतदिति जिज्ञासाकुतूहलं तन्न कदाचित् कुर्य्यात्॥ ६३॥

न नृत्येदथ वा गायेन्न वादित्राणि वादयेत्।
नास्फोटयेन्न च क्ष्वेडेन्नच रक्तोविरावयेत्॥ ६४॥

न नृत्येदिति। अशास्त्रीयाणि नृत्यगीतवाद्यानि नाचरेत्। पाणिना बाहौ ध्वनिरूपमास्फोटनं न कुर्य्यात्। अव्यक्त शब्दात्मकं क्ष्वेडनं न कुर्य्यात्। न च सानुरागोरासभादिरावं कुर्य्यात्॥ ६४॥

न पादौ धावयेत्कांस्ये कदाचिदपि भाजने। न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते॥ ६५ ॥

नपादाविति। कांस्यपात्रे कदाचित्पादौ न प्रक्षालयेत्। ताम्ररजतसुवर्णानाम्भिन्नमभिन्नमिति न दोषइति पैठीनसि वचनादेतद्व्यतिरिक्तभिन्नभाण्डे न भोजनं कुर्य्यात् यत्र मनोवि चिकित्सति तद्भावदुष्टं न तत्र भुञ्जीत॥ ६५॥

उपानहौ च वासश्च धृतमन्यैर्न धारयेत्। उप वीतमलङ्कारं स्रजङ्करकमेव च॥ ६६ ॥

उपानहाविति। उपानद्वस्त्रयज्ञोपवीतालङ्कारपुष्पमा लाकमण्डलून्यरोपभुक्तान्न धारयेत्॥ ६६॥

नाविनीतैर्व्रजेद्धुर्य्यैर्न च क्षुद्व्याधिपीडितैः। न भिन्नशृङ्गाक्षिखुरैर्न वालधिविरूपितैः॥ ६७॥

नाविनीतैरिति। अश्वगजादिभिर्वाहनैरदमितैः क्षुधा व्याधिना च पीडितैर्भिन्नशृङ्गाक्षिखुरैश्छिन्नवालधिभिश्च न यायात्॥६७॥

विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणान्वितैः। वर्ण रूपोपसम्पन्नैः प्रतोदेनातुदन्भृशम्॥ ६८॥

विनीतैस्त्विति। दमितैः शीघ्रगामिभिः शुभसूचकलक्षणो पेतैः शोभनवर्णैर्मनोज्ञाकृतिभिः प्रतोदेनात्यर्थमपीडयन् गच्छेत्॥ ६८॥

बालातपः प्रेतधूमो वर्ज्यम्भिन्नन्तथासनम्। न च्छिन्द्यान्नखलोमानि दन्तैर्नोत्पाटयेन्नखान्॥६९॥

बालातपइति। प्रथमोदितादित्यतापोबालातपः स च मूहूर्त्तत्रयं यावदिति मेधातिथिः। कन्यार्कातपइत्यन्ये। प्रेत धूमोदह्यमानशवधूमः। भग्नासनञ्च एतानि वर्जनीयानि। नखानि रोमाणि चाप्रवृद्धानि न छिन्द्यात् दन्तैश्च नखान्नो त्पाटयेत्॥ ६९॥

न मृल्लोष्टञ्च मृद्गीयान्न च्छिन्द्यात्करजैस्तृणम्। न कर्म्म निष्फलं कुर्य्यान्नायत्यामसुखोदयं॥ ७०॥

नमृल्लोष्टमिति। नाकारणं मृल्लोष्टं मृद्गीयात् तृणानि च नच्छिन्द्यादित्यापस्तम्बवचनात्। निष्प्रयोजनं मृल्लोष्टमर्दनं नखैश्च तृणच्छेदनं न कुर्य्यात्। न कुर्वीत वृथाचेष्टामित्यनेनै वास्यापि प्रतिषेधसिद्धौ दोषभूयस्त्वं प्रायश्चित्तगौरवञ्च दर्श यितुं विशेषेण निषेधः। अतएवानन्तरं लोष्टमर्द्दीति निन्दि ष्यति। दृष्टादृष्टफलशून्यं च कर्म्म न कुर्य्यात्। ननु न कुर्वीत वृथा चेष्टामित्यनेनास्य पुनरुक्तिः। उच्यते। चेष्टा देहव्यापारः स वृथाचेष्टाशब्देन निषिद्धः अनेन तु निष्फलं मनोराज्यादि सङ्कल्पात्मकं कर्म्म मानसं निषिध्यते। यच्च आयत्यामागामि काले कर्म्मासुखावहम् यथा अजीर्णे भोजनादि तदपि न कुर्य्यात्॥ ७०॥

लोष्टमर्द्दी तृणच्छेदी नखखादी च यो नरः।
स विनाशं व्रजत्याशु सूचकोऽशुचिरेव च ॥ ७१ ॥

लोष्टमर्द्दीति। लोष्टमर्द्दिता तृणच्छेत्ता नखखादिता च यो मनुष्यः तथा सूचकः खलोयः परस्य दोषानसतः सतो वा ख्यापयति बाह्याभ्यन्तरशौचरहितः शीघ्रमेते देहधनादिना विनश्यन्ति ॥ ७१ ॥

न विगर्ह्यकथां कुर्य्याद्बहिर्म्माल्यं न धारयेत्।
गवाञ्च यानं पृष्ठेन सर्व्वथैव विगर्हितम् ॥ ७२ ॥

नविगर्ह्यकथामिति। नचाभिनिवेशेन कथां शास्त्रीयेष्व र्थेषु लौकिकेषु वा कुर्य्यात्। केशकलापाद्बहिर्म्माल्यं न धारयेत्। गवाञ्च पृष्ठेन यानं। सर्व्वथेति प्रवण्यादिव्यवधानेनाप्यधर्म्मा वहं। पृष्ठेनेत्यभिधानाद्दारुशकटादिना न दोषः॥ ७२ ॥

अद्वारेण च नातीयाद्ग्रामं वा वेश्म वावृतम्।
रात्रौ च वृक्षमूलानि दूरतः परिवर्ज्जयेत् ॥ ७३ ॥

अद्वारेण चेति। प्राचीराद्यावृतं ग्रामं गृहञ्च द्वारव्यतिरिक्त प्रदेशेन प्राकारादिलङ्घनं कृत्वा न विशेत्। रात्रौ च वृक्षमूला वस्थानं दूरतस्त्यजेत्॥ ७३ ॥

नाक्षैः क्रीडेत्कदाचित्तु स्वयं नोपानहौ हरेत्।
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ॥ ७४ ॥

नाक्षैरिति। द्यूतं विना कदाचिदपि परिहासेनापि नाक्षादिभिः क्रीडयेत्। स्वयमित्यभिधानात् आत्मोपानहौ पादव्यतिरिक्तेन हस्तादिना देशान्तरं न नयेत् शय्यावस्थितश्च न भुञ्जीत हस्ते च प्रभूतमन्नं कृत्वा क्रमेण न खादेत्। आसने भोजन पात्रं निधाय न भुञ्जीत ॥ ७४ ॥

सर्व्वञ्च तिलसम्बद्धं नाद्यादस्तमिते रवौ।
न च नग्नः शयीतेह नचोच्छिष्टः क्वचिद्व्रजेत् ॥ ७५ ॥

सर्व्वमिति। यत्किञ्चित्तिलसंमिश्रं कृसरमोदकादि तदस्तमितेऽर्के नाद्यात्। उपस्थाच्छादनवासोरहितोनेह लोकेस्वप्यात् उच्छिष्टस्तु नान्यतोगच्छेत् ॥ ७५ ॥

आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत्।
आर्द्रपादस्तु भुञ्जानोदीर्घमायुरवाप्नुयात् ॥ ७६ ॥

आर्द्रपादइति। जलार्द्रपादोभोजनमाचरेत्। नार्द्रपादः स्वप्यात्। यस्मादार्द्रपादोभुञ्जानः शतायुर्भवति ॥ ७६ ॥

अचक्षुर्विषयं दुर्गं न प्रपद्येत कर्हिचित्। न विण्मूत्रमुदीक्षेत न बाहुभ्यां नदीं तरेत्॥ ७७॥

अचक्षुर्विषयमिति। तरुगुल्मलतागहनत्वेनाचक्षुर्गोचरम्‌ रण्यादिदुर्गं नाक्रामेत् सर्पचौरादेरन्तर्हितस्य सम्भवात्। पुरीषं मूत्रञ्च न निरीक्षेत। बाहुभ्याञ्च नदीं न तरेत्॥ ७७॥

अधितिष्ठेन्न केशांस्तु न भस्मास्थिकपालिकाः। न कार्पासास्थि न तुषान्दीर्घमायुर्जिजीविषुः॥७८॥

अधितिष्ठेदिति। दीर्घमायुर्जीवितुमिच्छुः केशादीन्ना धिरोहेत्। भग्नमृन्मयभाजनशकलानि कपालिकाः॥ ७८॥

न संवसेच्च पतितैर्नचाण्डालैर्नपुक्कशैः। न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः॥ ७९॥

न संवसेदिति। पतितादिभिर्ग्रामान्तरवासिभिरपि सह न संवसेत् एकतरुच्छायादौ न समीपे वसेत् अतोना धार्मिके वसेद्ग्रामइत्यतोभेदः। निषादाच्छूद्रायां जातः पुक्कशः। वक्ष्यति च। जातोनिषादाच्छूद्रायाञ्जात्या भवति पुक्कशइति। अवलिप्ताधनादिमदगर्विताः। अन्त्याअन्त्यजा रजकादयः। अन्त्यावसायिनोनिषादस्त्रियां चाण्डाला

ञ्जाताः। वक्ष्यति च। निषादस्त्री तु चाण्डालात्पुत्रमन्त्याव सायिनम् ॥ ७९ ॥

न शूद्राय मतिन्दद्यान्नोच्छिष्टं न हविष्कृतम्।
न चास्योपदिशेद्धर्म्मं नचास्य व्रतमादिशेत् ॥ ८० ॥

नशूद्रायेति। शूद्राय मतिं दृष्टार्थोपदेशं न दद्यात्। धर्म्मोपदेशस्य पृथङ्निर्द्देशात्। अदासशूद्राय उच्छिष्टन्न दद्यात्। दासगोचरतया उच्छिष्टमन्नन्दातव्यमिति वक्ष्य माणत्वाददोषः। द्विजोच्छिष्टञ्च भोजनमिति शोक्तुर्विधिः। दातुरुच्छिष्टदाननिषेधेऽपि यथासम्भवलभ्यविषयः। हवि ष्कृतमिति। यस्यैव देशोऽकृतः सहविःशेषेण दातव्यः। धर्म्मोपदेशेन शूद्रस्य कर्त्तव्यः। व्रतञ्चास्य प्रायश्चित्तरूपं साक्षान्नोपदिशेत् किन्तु ब्राह्मणं मध्ये कृत्वा तदुपदेशव्यव धानात्। यथाहाङ्गिराः। तथा शूद्रं समासाद्य सदाधर्म्म पुरःसरं। अन्तरा ब्राह्मणं कृत्वा प्रायश्चित्तं समादिशेत् प्रायश्चित्तमिति सकलधर्म्मोपदेशस्योपलक्षणार्थम् ॥ ८० ॥

योह्यस्य धर्म्ममाचष्टे यश्चैवादिशति व्रतम्।
सोऽसंवृतं नाम तमः सह तेनैव मज्जति ॥ ८१ ॥

योह्यस्येति। यस्मात् योऽस्य शूद्रस्य धर्म्मं ब्रूते यश्च प्राय श्चित्तमपदिशति स तेन शूद्रेणैव सह असंवृताख्यन्नरकं गच्छन्

नरकञ्चविशति। पञ्चसु पूर्व्वोक्तेषु द्वयोर्दोषकथनं प्राय श्चित्तगौरवार्थम्॥ ८१॥

न संहताभ्याम्पाणिभ्यां कण्डूयेदात्मनः शिरः।
न स्पृशेच्चैतदुच्छिष्टोन च स्नायाद्विना ततः॥८२॥

न संहताभ्यामिति। संश्लिष्टाभ्याम्पाणिभ्यान्न कण्डूयेदा त्मनः शिरः उच्छिष्टः स्वशिरोन स्पृशेत्। शिरसा विना उदकस्नानव्यतिरेकेण नित्यनैमित्तिकस्नानेन कुर्य्यात्। दृष्टार्थे शिरोव्यतिरिक्तगात्रप्रक्षालने न दोषः। स्नानशक्तस्य चायं निषेधः। अशक्तस्य तु। अशिरस्कम्भवेत्स्नानं स्नानाशक्तौ तु कर्म्मिणामिति जावालिना विहितमेव॥ ८२॥

केशग्रहान्प्रहारांश्च शिरस्येतान् विवर्ज्जयेत्।
शिरःस्नातश्च तैलेन नाङ्गङ्किञ्चिदपि स्पृशेत्॥ ८३॥

केशग्रहानिति। कोपेन केशग्रहप्रहारौ शिरसि वर्जयेत् कोपनिमित्तत्वाच्चात्मनः परस्य च प्रतिषेधः। अतएव सुरतसमये कामिनीकेशग्रहस्यानिषेधः। स्वशिरस्कस्नातस्य तैलेन न किञ्चिदप्यङ्गं स्पृशेत्। अथवा तैलेनेति काकाक्षिवद्

अयत्र सम्बध्यते। तैलेन शिरःस्नातः तैलेन पुनःकिञ्चिदप्यङ्गं न स्पृशेत्। अतो रात्रौ शिष्टानामतैलशिरःस्नातानां तैलेन पादाभ्यङ्गसमाचरणमविरुद्धं॥ ८३॥

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः। सूना चक्रध्वजवतां वेशेनैव च जीवताम्॥ ८४॥

नराज्ञइति। राजन्यशब्दः क्षत्रियवचनः। अक्षत्रियप्रसूतस्य राज्ञोधनं न प्रतिगृह्णीयात्। राजतोधनमन्विच्छेदित्युक्तं तस्यायं विशेषउक्तः। सूनाचक्रध्वजवतामिति। सूनावतां चक्रवतां ध्वजवताञ्च। सूना प्राणिवधस्थानं तद्यस्यास्तीति स सूनावान् पशुमारणपूर्व्वकमांसविक्रयजीवी। चक्रवान् तीजवध विक्रयजीवी तैलिकः। ध्वजवान् मद्यविक्रयजीवी शौण्डिकः। वेशः पण्यस्त्रियाभृतिः तया योजीवति स्त्री पुमान् वा स वेशवान्। एतेषाञ्च न प्रतिगृह्णीयात्॥ ८४॥

दशसूनासमञ्चक्रं दशचक्रसमोध्वजः। दश ध्वजसमोवेशो दशवेशसमोनृपः॥ ८५॥

दशसूनेति। गोविन्दराजस्तु। दशवेश्यासमोनृपइति पठति। मेधातिथिप्रभृतयः प्राञ्चोदशवेशसमोनृपइति

पठन्ति। सूनादिशब्दैस्तदानुपलक्ष्यते। दशसूनावत्सु यावा न्दोषस्तावानेकस्मिन् चक्रवति तैलिके। यावान्दशसु तैलिकेषु दोषः तावानेकध्वजवति शौण्डिके। यावान्दशसु ध्वजवत्सु दोषस्तावानेकच वेशवति। यावान्दशसु वेशवत्सु दोषस्तावानेकच राजनि। उत्तरोत्तरनिन्दा चेयम्पूर्व्वदोषसम्भवे सत्युत्तरवर्जनार्थमापद्युपपद्यते॥ ८५॥

दशसूनासहस्राणि योवाहयति सौनिकः। तेन तुल्यः स्मृतोराजा घोरस्तस्य प्रतिग्रहः॥ ८६॥

दशसूनासहस्राणीति। सूनया चरतीति सूनिकः एवं संकलनया यःसौनिकोदशसूनासहस्राणि स्वार्थे व्यापारयति तेन तुल्योराजा मन्वादिभिः स्मृतः। तस्मात्तस्यप्रतिग्रहोनरक हेतुत्वाद्भयानकः क्षत्रियस्यापि च॥ ८६॥

योराज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः। सपर्य्यायेण यातीमान्नरकानेकविंशतिम्॥ ८७॥

योराज्ञइति। योराज्ञः कृपणस्य शास्त्रोल्लङ्घनेन प्रवर्त्तमानस्य प्रतिग्रहं करोति स क्रमेणैतान् वक्ष्यमाणैकविंशति नरकान गच्छति॥ ८७॥

तामिस्रमन्धतामिस्रं महारौररवरौरवौ। नरकं कालसूत्रञ्च महानरकमेव च॥ ८८॥

पूर्वश्लोके सामान्यतोनरकानिमानेकविंशतिमित्युक्तमिदानीन्तानेव नामतोनिर्दिशति। तामिस्रमिति त्रिभिः। एतेषां नरकाणां स्वरूपं मार्कण्डेयपुराणादिषु विस्तरेणोक्तं तत्रैवावगन्तव्यम्॥ ८८॥

सञ्जीवनं महावीचिन्तपनं सम्प्रतापनम्। संहातञ्च सकाकोलं कुड्मलं पूतिमृत्तिकम्॥ ८९॥

लोहशङ्कुमृजीषञ्च पन्थानं शाल्मलीं नदीम्। असिपत्रवनञ्चैव लोहदारकमेव च॥ ९०॥

एतद्विदन्तोविद्वांसोब्राह्मणाब्रह्मवादिनः। न राज्ञः प्रतिगृह्णन्ति प्रेत्य श्रेयोभिकाङ्क्षिणः॥ ९१॥

एतद्विदन्तइति। प्रतिग्रहोविविधनरकहेतुरिति जानन्तोब्राह्मणाः धर्मशास्त्रपुराणादिविदोवेदाध्यायिनोजन्मान्तरे श्रेयःकामवन्तोन राज्ञः प्रतिगृह्णीयुः। विदुषोहि प्रतिग्रह नातीव दोषः। यतोवक्ष्यति। तस्मादविद्वान्बिभीयाद्धिति।

तेषामपि निषिद्धराजप्रतिग्रहः प्रचुरप्रत्यवायफलकइति दर्शयितुं विद्वद्ग्रहणम्ब्राह्मणादिग्रहणञ्च ॥ ९१ ॥

ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥ ९२ ॥

ब्राह्मइति। ब्राह्मोमुहूर्त्तोरात्रेः पश्चिमोयामः। ब्राह्मी भारती तत्प्रबोधहेतुत्वात्। मुहूर्त्तशब्दोच कालमात्रवचनः। तत्र बुध्येत। दक्षेणापि। प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत्। यामद्वयं शयानोहि ब्रह्मभूयाय कल्पते। इति श्रुवता तत्र प्रबोधोऽभ्यनुज्ञातः। गोविन्दराजस्तु। रात्रेः पश्चिमे मुहूर्त्ते बुध्येत इत्याह। धर्मार्थौ च परस्पराविरोधे नानुष्ठानार्थमवधारयेत्। तथा धर्मार्थार्जनहेतून् कायक्लेशा न्निरूपयेत्। यदि महान्कायक्लेशोऽल्पश्च धर्मार्थौवा तदा तत्परिहरेत्। वेदस्य तत्त्वार्थं ब्रह्मकर्मात्मकं निश्चिनुयात्। तस्मिन्समये बुद्धिप्रकाशात् ॥ ९२ ॥

उत्थायावश्यकं कृत्वा कृतशौचः समाहितः।
पूर्व्वां सन्ध्याञ्जपंस्तिष्ठेत्स्वकाले चापराञ्चिरम् ॥ ९३ ॥

उत्थायेति। ततः उषःकाले शय्यायाउत्थाय सति वेगे मूत्रपुरीषोत्सर्गं कृत्वा कृतवक्ष्यमाणशौचोऽनन्यमनाः पूर्वां संध्या

श्चिरं गायत्रीजपं कुर्व्वन्नर्त्तेत। आर्कदर्शनादयं विधिः प्रातः संध्यायामुक्तः उदयादूर्द्धमपि जपेत् आयुरादिकामइति विधानार्थोयमारम्भः। अपरामपि सन्ध्यां स्वकाले प्रारभ्य तारकोदयादूर्द्धमपि जपन्नासीत॥ ९३॥

ऋषयोदीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः। प्रज्ञां यशश्च कीर्त्तिञ्च ब्रह्मवर्चसमेव च॥ ९४॥

आयुरादिकामाधिकारोयमिति दर्शयन्नाह। ऋषयइति। सन्ध्याशब्दोऽत्र सन्ध्यानुष्ठेयजपादिपरः यस्मादृषयोदीर्घ सन्ध्यानुष्ठानात् दीर्घमायुःप्रज्ञां जीवन्नोयशोऽमृताञ्चकीर्त्तिं मध्ययनादिसम्पन्नं यशश्च प्राप्नुयुः। तस्मादायुरादिकाम श्चिरं सन्ध्यामुपासीत॥ ९४॥

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान्विप्रोर्द्धपञ्चमान्॥ ९५॥

श्रावण्यामिति। श्रावणस्य पौर्णमास्यांभाद्रपदस्य वा स्वगृह्या नुसारेण उपाकर्म्माख्यङ्कर्म्म कृत्वा सार्द्धांश्चतुरोमासान् ब्राह्मणउद्यक्तोवेदानधीयीत॥ ९५॥

पुष्ये तु छन्दसां कुर्य्याद्बहिरुत्सर्जनं द्विजः। माघ शुक्लस्य वा प्राप्ते पूर्व्वाह्णे प्रथमेऽहनि ॥ ९६ ॥

पुष्येति। ततः पक्षाधिकेषु चतुर्षु मासेषु यः पुष्यस्तत्र ग्रामाद्बहिर्गत्वा स्वगृह्यानुसारेणोत्सर्गाख्यङ्कर्म कुर्य्यात्। अथवा माघशुक्लस्य प्रथमेऽहनि पूर्व्वाह्णे कुर्य्यात्। माघशुक्ले च विधिः प्रौष्ठपद्यां येनोपाकर्म्म कृतन्तद्विषयः ॥ ९६ ॥

यथाशास्त्रन्तु कृत्वैवमुत्सर्गञ्छन्दसां बहिः। विरमेत्पक्षिणीं रात्रिन्तदेवैकमहर्निशम् ॥ ९७ ॥

यथाशास्त्रन्त्विति। एवमुक्तशास्त्रानुसारेण ग्रामाद्बहिः छन्दसामुत्सर्गाख्यं कर्म्म कृत्वा पक्षिणीं रात्रिं विरमेत् नाधीयीत। द्वे दिने पूर्व्वापरे पक्षाविव यस्यामध्यवर्त्तिन्या रात्रेः सा पक्षिणी रात्रिः। अस्मिन्पक्षे तूत्सर्गाहोरात्रे द्वितीयदिने चाह्नि नाध्येतव्यं द्वितीयरात्रौ त्वध्येतव्यम्। अथवा तमेवैकमुत्सर्गाहोरात्रमनध्यायं कुर्य्यात्। विद्यानैपुण्यकामं प्रत्ययमहोरात्रानध्यायविधिः ॥ ९७ ॥

अतऊर्द्धन्तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि च सर्व्वाणि कृष्णपक्षेषु सम्पठेत् ॥९८॥

अतऊर्द्धमिति। उत्सर्गानध्ययनादूर्द्धं मन्त्रब्राह्मणात्मकं वेदं शुक्लपक्षेषु संयतः पठेत्सर्व्वाणि तु वेदाङ्गादीनि शिक्षा व्याकरणादीनि कृष्णपक्षेषु पठेत् ॥ ९८ ॥

नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ। न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् ॥९९॥

नाविस्पष्टमिति। स्वरवर्णाद्यभिव्यक्तिशून्यं शूद्रसन्निधौ च नाधीयीत। तथा रात्रेः पश्चिमे यामे सुप्तोत्थितोवेदमधीत्य श्रान्तोन पुनः स्वपेत् ॥ ९९ ॥

यथोदितेन विधिना नित्यञ्छन्दस्कृतं पठेत्।
ब्रह्मच्छन्दस्कृतञ्चैव द्विजोयुक्तोह्यनापदि ॥१००॥

यथोदितेनेति। यथोक्तविधिना नित्यञ्छन्दस्कृतङ्गायत्र्यादिछन्दोयुक्तं मन्त्रजातं पठेत्। मन्त्राणामेव कर्म्मान्तरङ्गत्वात्। अनापदि सम्यगध्ययनादौ सामर्थ्ये सति ब्रह्म ब्राह्मणं मन्त्रजातञ्च यथोक्तविधिना यत्तः सन् द्विजः पठेत् ॥ १०० ॥

इमान्नित्यमनध्यायानधीयानोविवर्जयेत्। अध्यापनञ्च कुर्व्वाणः शिष्याणां विधिपर्व्वकम्॥ १०१ ॥

इमानिति। इमान्वक्ष्यमाणाननध्यायान्सर्वथा यथोक्त विधिना अधीयानः शिष्योध्यापनञ्च कुर्वाणोगुरुर्वर्जयेत्॥ १०१॥

कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने। एतौ वर्षास्वनध्यायावध्यायज्ञाः प्रचक्षते॥ १०२॥

कर्णश्रवइति। रात्रौ कर्णश्रवणयोग्यशब्दजनके वायौ वाति। गोविन्दराजस्तु। कर्णाभ्यामेव श्रवणोपपत्तेरतिशय विवक्षया कर्णश्रवइत्युक्तम्। तेनातिशब्दवति वायौ वातीत्य भिहितवान्। दिवा च धूलिपटलोत्सारणसमर्थे वायौ वहति। एतौ वर्षाकाले अनध्यायौ तात्कालिकावध्ययनविधिज्ञा मन्वादयः कथयन्ति॥ १०२॥

विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे। आकालिकमनध्यायमेतेषु मनुरब्रवीत्॥ १०३॥

विद्युदिति। विद्युद्गर्जितवर्षेषु द्वन्द्वनिर्द्देशाद्युगपदुपस्थितेषु महतीनाञ्चोल्कानां संप्लवे इतस्ततः पाते सति। आकालिक

मिति निमित्तकालादारभ्यापरेद्युर्यावत्स एव कालस्तावत्पर्य्यन्तमनध्यायमेतेषु मनुरब्रवीत् ॥ १०३ ॥

एतांस्त्वभ्युदितान्विद्यात् यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥ १०४ ॥

एतानिति । एतान्विद्युदादीन् यदा होमार्थम्प्रकटीकृताग्निकालेषु सन्ध्याक्षणेषु युगपदुत्पन्नान् जानीयात् । तदानध्यायं वर्षासु कुर्य्यान्न सर्व्वदा तथाऽनृतौ प्रादुष्कृताग्निकालेषु मेघदर्शनमात्रे सति अनध्यायाम वर्षासु ॥ १०४ ॥

निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्जने । एतानाकालिकान्विद्यादनध्यायानृतावपि ॥ १०५ ॥

निर्घातइति । अन्तरीक्षभवोत्पातध्वनौ भूकम्पे सूर्य्यचन्द्रतारागणानाञ्चोपसर्गे सत्यनध्यायानिमानाकालिकान् जानीयात् । आकालिकशब्दार्थो व्याकृतएव । ऋतावपि वर्षासु किल भूकम्पादयोन दोषावहाइत्यभिप्रायेण ऋतावपीत्युक्तम् । अपिशब्दादन्यत्रापि ॥ १०५ ॥

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने। सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥ १०६ ॥

प्रादुष्कृतेति। होमार्थं प्रकाशितेष्वग्निषु सन्ध्यायां यदा विद्युद्गर्जितशब्दावेव भवतो न तु वर्षन्तदा सज्योतिरनध्यायः स्यात् नाकालिकः। तत्र यदि प्रातःसन्ध्यायां विद्युद्गर्जितशब्दौ तदा यावत्सूर्य्यज्योतिस्तावदनध्यायो दिनमात्रमेव यदि सायं सन्ध्यायां तौ स्यातां तदा यावन्नाक्षत्रज्योतिस्तावदनध्यायो रात्रमात्रमिति। विद्युत्स्तनितवर्षेष्विति त्रयाणां पूर्व्वोक्तानां शेषे वर्षाख्ये तृतीये जाते यथा दिवानध्यायस्तथा रात्रावपि अहोरात्र एवेत्यर्थः ॥ १०६ ॥

नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च। धर्म्मनैपुण्यकामानां पूतिगन्धे च सर्व्वदा ॥ १०७ ॥

नित्यानध्याय इति। नैपुण्यमतिशयः धर्म्मातिशयार्थिनो ग्रामनगरयोः सर्व्वदानध्यायः स्यात्। कुत्सितगन्धे च सर्व्वस्मिन्नपि गम्यमाने। धर्म्मनैपुण्यकामं शत्रयं विद्यानध्यायोपदेशो विद्यानैपुण्यकामस्य कदाचिदध्ययनमनुजानाति। ये शिष्याः केचिद्गृहीतवेदाः प्रायाश्चध्ययन नियमजन्यादृष्टेच्छवस्ते धर्म्मनैपुण्यकामाः। केचित्प्रथमाध्येतारो विद्यातिशयमात्रार्थिनस्ते विद्यानैपुण्यकामाः ॥ १०७ ॥

अन्तर्गतशवे ग्रामे वृषलस्य च सन्निधौ। अनध्यायो रुद्यमाने समवाये जनस्य च ॥ १०८ ॥

अन्तर्गतेति। अन्तर्गतः शवोयस्मिन् ग्रामे श्रूयते तत्र। वृषलोऽत्राधार्मिकस्तस्य सन्निधौ नतु शूद्रः तस्य न शूद्रजन सन्निधाविति निषेधात्। रुद्यमाने रोदनध्वनौ भावे लकारः। कार्य्यान्तरार्थस्वजनमेलके सत्यनध्यायः॥ १०८॥

उदके मध्यरात्रे च विण्मूत्रस्य विसर्जने। उच्छिष्टः श्राद्धभुक् चैव मनसापि नचिन्तयेत्॥ १०९॥

उदकइति। उदकमध्ये मध्यरात्रे च मुहूर्त्तचतुष्टये निशायाश्चतुर्मुहूर्त्तमिति गौतमस्मरणात्। गोविन्दराजस्तु रात्रिमध्यप्रहरद्वयइत्युक्तवान्। तथा मूत्रपुरीषोत्सर्गकाले ऽन्नभोजनादिना चोच्छिष्टो निमन्त्रणसमयादारभ्य श्राद्ध भोजनाहोरात्रं यावन्मनसापि वेदं न चिन्तयेत्॥ १०९॥

प्रतिगृह्य द्विजोविद्वानेकोद्दिष्टस्य केतनम्। त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञोराहोश्च सूतके॥ ११०॥

प्रतिगृह्येति। एकएवोद्दिश्यते यत्र श्राद्धे तदेकोद्दिष्टंनव श्राद्धन्तत्रकेतनन्निमन्त्रणं गृहीत्वा निमन्त्रणादारभ्य त्रिवि यस्य जनपदेश्वरस्य पुत्रजन्मादिसूतके राहोश्च सूतकञ्चन्द्र सूर्य्योपरागः तत्र त्रिरात्रं वेदन्नाधीयीत॥ ११०॥

यावदेकानुदिष्टस्य गन्धोलेपश्च तिष्ठति । विप्रस्य विदुषोदेहे तावद्ब्रह्म न कीर्त्तयेत् ॥ १११ ॥

यावदिति । यावदेकमुद्दिश्यानुदिष्टस्य उच्छिष्टस्य कुङ्कुमादे र्गन्धोलेपश्च ब्राह्मणस्य शास्त्रविदोदेहे तिष्ठति तावत्त्र्यहा दूर्द्धमपि वेदन्नाधीयीत ॥ १११ ॥

शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् । नाधीयीतामिषञ्जग्ध्वा सूतकान्नाद्यमेव च ॥११२॥

शयानइति । शय्यायां पतिताङ्ग आसनारूढपादः कृता सक्थिकेभ्वा मांसम् जग्ध्वा जननमरणाशौचिनां चान्नम्भुक्ता नाधीयीत ॥ ११२ ॥

नीहारे वाणशब्दे च सन्ध्ययोरेव चोभयोः । अमावास्याचतुर्द्दश्योः पौर्णमास्यष्टकासु च ॥ ११३ ॥

नीहारइति । नीहारे धूलिकायाम् । वाणशब्दे शरध्वनौ वाणोवीणाविशेषइत्यन्ये । प्रातःसायं सन्ध्ययोरमावास्याचतु र्द्दशीपौर्णमास्यष्टमीषु नाधीयीत । अष्टकासूत्तरत्र निषेधात्पौ र्णमास्यादिसाहचर्य्यादष्टकाशब्दोऽष्टमीतिथिपरः ॥ ११३ ॥

अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी।
ब्रह्माष्टकापौर्णमास्यौ तस्मात्ताः परिवर्जयेत्॥११४॥

विशेषदोषमाह। अमावास्येति। यस्मादमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी वेदस्याष्टमीपौर्णमास्यौ विस्मारयतः। तस्मात्ता अध्ययनाध्यापनयोः परित्यजेत्॥११४॥

पांशुवर्षे दिशान्दाहे गोमायुविरुते तथा।
श्वखरोष्ट्रे च रुवति पङ्क्तौ च न पठेद्द्विजः॥११५॥

पांशुवर्षइति। धूलीवर्षे दिशां दाहे शृगालकुक्कुरगर्द्दभोष्ट्रेषु च रुवत्सु पङ्क्तौ चोपविश्य प्रकृतत्वात् शृगालश्वखरादीनामेव ब्राह्मणो न पठेत्॥११५॥

नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेपि वा।
वसित्वा मैथुनं वासः श्राद्धिकम्प्रतिगृह्य च॥११६॥

नाधीयीतेति। श्मशानसमीपे ग्रामसमीपे गोष्ठे च मैथुनसमयधृतवासः परिधाय श्राद्धीयञ्च सिद्धान्नादि प्रतिगृह्य नाधीयीत॥११६॥

प्राणि वा यदि वाप्राणि यत्किञ्चिच्छ्राद्धिकं भवेत्।
तदालभ्याप्यनध्यायः पाण्यास्यो हि द्विजः स्मृतः॥११७॥

प्राणिवेति। श्राद्धिकमन्नादि भुक्त्वा तावदनध्यायो भवतीत्युक्तं प्राणि वा गवाश्वादि अप्राणि वा वस्त्रमाल्यादि प्रतिग्रहकाले हस्तेन गृहीत्वानध्यायो भवति यस्मात्पाणिरेवास्यमस्येति पाण्यास्यो हि ब्राह्मणः स्मृतः॥ ११७॥

चौरैरुपप्लुते ग्रामे संभ्रमे चाग्निकारिते। आकालिकमनध्यायं विद्यात्सर्वाद्भुतेषु च॥ ११८॥

चौरैरिति। चौरैरुपप्लुते ग्रामे गृहदाहादिकृते भये दिव्यान्तरीक्षभौमेषु चाद्भुतेषु उत्पातेषु आकालिकमनध्यायं जानीयात्॥ ११८॥

उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षेपणं स्मृतम्।
अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु॥११९॥

उपाकर्म्मणीति। उपाकर्म्मणि उत्सर्गे च त्रिरात्रमध्ययनक्षेपणम्। उत्सर्गे पक्षिण्यहोरात्रावनध्यायावुक्तौ तत्रायन्त्वर्म्मैपुण्यकामस्मति त्रिरात्रोपदेशः। तथाग्रहायण्या ऊर्द्धं कृष्ण

पक्षाष्टमीषु तिसृषु चाहोरात्रमनध्यायः। दिवाकलामात्र सद्भावेपि पौर्णमास्यष्टकासु चेत्यनेन यावदष्टम्येवानध्यायः इत्यष्टमीयुक्तेऽसतीत्यपुनरुक्तिः। ऋत्वन्ताहोरात्रेषु चानध्यायः ॥ ११९ ॥

नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनम्। न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः ॥ १२० ॥

नाधीयीतेति। तुरगतरुकरिनौकाखरोष्ट्रारूढः। तथोषर देशस्थः शकटादियानेन गच्छन्नाधीयीत ॥ १२० ॥

न विवादे न कलहे न सेनायां न सङ्गरे। न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥ १२१ ॥

न विवाद इति। विवादे वाक्कलहे कलहे दण्डादण्डादौ सेनायां अप्रवृत्तयुद्धायां सङ्गरे युद्धे। भोजनानन्तरञ्च याव दार्द्रहस्तो यावदार्द्रपाणिरिति वशिष्ठस्मरणात्। तथा अजी र्णेऽन्ने वमनञ्च कृत्वा अम्लोद्गारे च न पठेत् ॥ १२१ ॥

अतिथिञ्चाननुज्ञाप्य मारुते वाति वा भृशम्। रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ॥ १२२ ॥

अतिथिमिति। अध्ययनं करोमीति यावदतिथिरनुज्ञा पितो न भवति मारुते चात्यर्थं वाति रुधिरे च गात्रात्स्रुते रुधिरस्रावं विनापि शस्त्रेण क्षतमात्रे जाते नाधीयीत ॥ १२२ ॥

पक्षाष्टमीषु तिसृषु चाहोरात्रमनध्यायः। दिवाकलामात्र सद्भावेपि पौर्णमास्यष्टकासुचेत्यनेन यावदष्टम्येवानध्यायः इहत्वष्टमीयुक्तेषतीत्यपुनरुक्तिः। स्वलन्ताहोरात्रेषु चानध्यायः ॥ ११६ ॥

नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनम्। न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः ॥ १२० ॥

नाधीयीतेति। तुरगतरुकरिनौकाखरोष्ट्रारूढः। तथोषर देशस्थः शकटादियानेन गच्छन्नाधीयीत ॥ १२० ॥

न विवादे न कलहे न सेनायां न सङ्गरे। न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥ १२१ ॥

न विवादइति। विवादे वाक्कलहे कलहे दण्डादण्डादौ सेनायां अप्रवृत्तयुद्धायां सङ्गरे युद्धे। भोजनानन्तरञ्च याव दार्द्रहस्तो यावदार्द्रपाणिरिति वशिष्ठस्मरणात्। तथा अजी र्णेऽन्ने वमनञ्च कृत्वा अम्लोद्गारे च न पठेत् ॥ १२१ ॥

अतिथिञ्चाननुज्ञाप्य मारुते वाति वा भृशम्। रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ॥ १२२ ॥

अतिथिमिति। अध्ययनं करोमीति यावदतिथिरनुज्ञा पिता न भवति मारुते चात्यर्थं वाति रुधिरे च गात्रात्स्रुते रुधिरस्रावं विनापि शस्त्रेण क्षतमात्रे जाते नाधीयीत ॥ १२२ ॥

त्मकं प्रणवव्याहृतिसाविचीः क्रमेण पूर्व्वमधीत्य पश्चाद्वेदाध्ययनं कुर्य्युः। द्वितीयाध्यायोक्तोऽप्ययमर्थः पुनरनध्यायप्रकरणेऽभिहितः। यथैते येथोक्तानध्याया एवम्प्रणवव्याहृतिसाविचीष्वपठितासु अनध्यायइति दर्शयितुं शिष्यस्याध्ययनमेवं कर्त्तव्यमिति स्नातकव्रतत्वावगमार्थञ्च ॥ १२५ ॥

पशुमण्डूकमार्जारश्वसर्पनकुलाखुभिः। अन्तरागमने विद्यादनध्यायमहर्न्निशम् ॥ १२६ ॥

पशुमण्डूकेति। पशुर्गवादिः मण्डूकविडालकुक्कुरसर्प्पनकुलमूषिकैः शिष्योपाध्याययोर्मध्यगमने अनध्यायमहोरात्रं जानीयात् ॥ २२६ ॥

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः। स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचिं द्विजः ॥ १२७ ॥

सम्प्रति विद्यानैपुण्यकामम्प्रति पूर्व्वोक्तानध्यायविकल्पार्थमाह। द्वावेवेति। स्वाध्यायभूमिञ्चोच्छिष्टाद्यमेध्योपहताम्। आत्मानञ्च यथोक्तशौचरहितमिति द्वावेवानध्यायौ नित्यं प्रयत्नतोवर्जयेत् नतु पूर्व्वोक्तान्। तेषामपि यत्र नित्यग्रहणं अनुवादोवा नित्यत्वख्यापकोऽस्ति तानपि नित्यं वर्जयेत्। अन्यत्र विकल्पः ॥ १२७ ॥

अमावास्यामष्टमीञ्च पौर्णमासीञ्चतुर्द्दशीम्।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातकोद्विजः॥ १२८॥

अमावास्यामिति। अमावास्यादिषु ऋतावपि स्नातकोद्विजोन स्त्रियमुपगच्छेत्। पर्व्ववर्जं व्रजेच्चैनामित्यनेनैव निषेधसिद्धौ स्नातकव्रतलोपप्रायश्चित्तार्थमिह पुनर्वर्जनम्॥ १२८॥

न स्नानमाचरेद्भुक्त्वा नातुरोन महानिशि। न
वासोभिः सहाजस्रं नाविज्ञाते जलाशये॥ १२९॥

न स्नानमिति। नित्यस्नानस्य भोजनानन्तरमप्रसक्तेश्चाण्डालादिस्पर्शनिमित्तकस्य मुहूर्त्तमपि शक्तिविषये नाप्रयतःस्यादित्योपस्तम्बस्मरणात् निषेद्धुमयोग्यत्वात् यदृच्छास्नानमिदम्भोजनानन्तरन्निषिध्यते। तथा रोगी नैमित्तिकमपि स्नानन्नकुर्य्यात् किन्तु यथासामर्थ्यम्। अशिरस्कं भवेत्स्नानं स्नानाशक्तौतु कर्म्मिणाम्। आर्द्रेण वाससा वास्याम्मार्ज्जनन्दैहिकं विदुः। इत्यादिजावालाद्युक्तमनुसन्धेयम्। तथा महानिशातुविज्ञेया मध्यस्थम्प्रहरद्वयम। तस्मिन् स्नानन्न कुर्वीत काम्यनैमित्तिकादृतइति देवलवचनात्तत्र न स्नायात्। बहुवासास्च नित्यन्न स्नायात् नैमित्तिकचाण्डालादिस्पर्शे सति तु स्नानम्बहुवाससोप्यनिषिद्धम्। ग्राहाद्याक्रान्तागाधरूपतया च विशेषेणाज्ञाते जलाशये च॥ १२९॥

देवतानां गुरोराज्ञः स्नातकाचार्य्ययोस्तथा।
नाक्रामेत्कामतश्छायां वभ्रुणोदीक्षितस्य च ॥१३०॥

देवतानामिति। देवतानाम्पाषाणादिमयीनां गुरोः पित्रादेः नृपतेः स्नातकस्याचार्य्यस्य च गुरुत्वेप्याचार्य्यस्य प्राधान्यविवक्षया पृथङ्निर्देशः। वभ्रुणः कपिलस्य यज्ञे दीक्षितस्यावभृतस्नानात्पूर्व्वमिच्छया छायां नाक्रामेत् चशब्दात् चाण्डालादीनामपि। कामतइत्यभिधानात् अबुद्धिपूर्व्वके न दोषः॥ १३०॥

मध्यन्दिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च सामिषम्।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम्॥ १३१॥

मध्यन्दिनइति। दिवा रात्रेश्च सम्पूर्णे प्रहरद्वये समां सश्च श्राद्धम्भुक्त्वा प्रातःसायं सन्ध्ययोश्च चिरञ्चतुष्पथं नाधितिष्ठेत्॥ १३१॥

उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च। श्लेष्म निष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः॥ १३२॥

उद्वर्त्तनमिति। उद्वर्त्तनमभ्यङ्गमलापकर्षणपिष्टकादि। अपस्नानं स्नानोदकं मूत्रपुरीषे रुधिरञ्च श्लेष्माणं निष्ठ्यूतम

स्वस्वरूपमपि चर्वितपरित्यक्तरूपताम्बूलादि वान्तं भुक्तोद्गीर्णं भक्तादि एतानि कामतो नाधितिष्ठेत्। अधिष्ठानन्तदुपर्य्यवस्थानम् ॥ १३२ ॥

वैरिणं नोपसेवेत सहायञ्चैव वैरिणः। अधार्म्मिकन्तस्करञ्च परस्यैव च योषितम् ॥ १३३ ॥

वैरिणमिति। शत्रुं तन्मित्रमधर्म्मशीलञ्चौरं परदारांश्च नसेवेत। चौरस्याधार्म्मिकत्वेऽप्यत्यन्तगर्हितत्वात्पृथङ्निर्द्देशः॥१३३॥

नहीदृशमनायुष्यं लोके किञ्चन विद्यते। यादृशम्पुरुषस्येह परदारोपसेवनम् ॥ १३४ ॥

नहीदृशमिति। यस्मादीदृशमनायुष्यमिह लोके पुरुषस्य न किञ्चिदस्ति यादृशं परदारगमनम्। तस्मादेतन्न कर्त्तव्यम् ॥ १३४ ॥

क्षत्रियञ्चैव सर्पञ्च ब्राह्मणञ्च बहुश्रुतम्। नावमन्येत वै भूष्णुः कृशानपि कदाचन ॥ १३५ ॥

क्षत्रियमिति। वृद्ध्यर्थोभूधातुः भूष्णुः धनायुरादिना वर्द्धनशीलः क्षत्रियं सर्पम्बहुश्रुतञ्च ब्राह्मणं नावजानीयात्। कृशानपि तत्काले प्रतीकाराक्षमान् ॥ १३५ ॥

एतत्त्रयं हि पुरुषं निर्द्दहेदवमानितम्। तस्मा
देतत्त्रयं नित्यं नावमन्येत बुद्धिमान्॥ १३६ ॥

एतत्त्रयमिति। एतत्त्रयमवमानितं सदवमन्तारं विना
शयति क्षत्रियसर्पौ दृष्टमेव तथा ब्राह्मणस्याभिचारादिना दृष्टेन
तस्मात्कल्याणबुद्धिरेतत्त्रयं सर्व्वदा नावजानीयात्॥ १३६ ॥

नात्मानमवमन्येत पर्व्वाभिरसमृद्धिभिः। आ
मृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्ल्लभाम्॥१३७॥

नात्मानमिति। प्रथमन्धनार्थमुद्यमे कृते तत्र धनानाम
सम्पत्तिभिर्मन्दभाग्योऽहमिति नात्मानमवजानीयात् किन्तु
मरणपर्य्यन्तं श्रीसिद्धार्थमुद्यमं कुर्य्यात्। नतु इमान्दुर्ल्लभा
म्बुद्ध्येत्॥ १३७ ॥

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।
प्रियञ्च नानृतं ब्रूयादेषधर्म्मः सनातनः॥ १३८ ॥

सत्यं ब्रूयादिति। यथादृष्टश्रुतन्तत्त्वं ब्रूयात्। तथा
प्रीतिसाधनं ब्रूयात् पुत्रस्ते जातइति। यथादृष्टश्रुतमप्यप्रियं
पुत्रस्ते मृतइत्यादि न वदेत्। प्रियमपि न मिथ्यावदेत् एष
वेदमूलतया नित्योधर्म्मः॥ १३८ ॥

भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्। शुष्कं
वैरं विवादञ्च न कुर्य्यात्केनचित्सह ॥ १३९ ॥

भद्रमिति। प्रथमभद्रपदमभद्रपरं द्वितीयभद्रशब्दपर्य्यायपरं अभद्रं यत्तद्भद्रशब्दपर्य्यायप्रशस्तादिशब्देन प्रब्रूयात्। तथा चापस्तम्बः नाभद्रमभद्रं ब्रूयात्पुण्यं प्रशस्तमिति ब्रूयात्। भद्रमित्येवेति भद्रपदमेव वा तत्र योज्यं। शुष्कनिष्प्रयोजनं वैरं विवादं न केनचित्सह कुर्य्यात् ॥ १३९ ॥

नातिकल्यं नातिसायं नातिमध्यन्दिने स्थिते।
नाज्ञातेन समं गच्छेत् नैको न वृषलैः सह ॥ १४० ॥

नातिकल्यमिति। उषःसमये प्रदोषे च दिवासम्पूर्णप्रहरद्वये च अज्ञातकुलशीलेन पुरुषेण शूद्रैश्च सह न गच्छेत्। नैकः प्रपद्येताध्वानमित्युक्ते प्रतिषेधेऽपि पुनर्नैकइति प्रतिषेधः स्नातकव्रतलोपप्रायश्चित्तगौरवार्थः ॥ १४० ॥

हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोऽधिकान्।
रूपद्रव्यविहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥ १४१ ॥

हीनाङ्गानिति। हीनाङ्गाधिकाङ्गमूर्खवृद्धकुरूपार्थहीनहीनजातीन काणशब्दाह्वानादिना न निन्देत् ॥ १४१ ॥

न स्पृशेत्पाणिनोच्छिष्टो विप्रो गोब्राह्मणानलान्।
न चापि पश्येदशुचिः सुस्थो ज्योतिर्गणान्दिवि॥१४२॥

नस्पृशेदिति। कृतभोजनः कृतमूत्रपुरीषादिश्चाकृतशौचाचमनो ब्राह्मणो हस्तादिना गोब्राह्मणाग्नीन्न स्पृशेत्। नवाशुचिः सन् अनातुरोदिविष्ठान् सूर्य्यचन्द्रग्रहादिर्ज्योतिर्गणान् न पश्येत्॥ १४२ ॥

स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत्।
गात्राणि चैव सर्व्वाणि नाभिम्पाणितलेन तु॥१४३॥

स्पृष्ट्वैतानिति। एतान् गवादीनशुचिः सन् स्पृष्ट्वा कृताचमनः पाणिना गृहीताभिरद्भिः प्राणांश्चक्षुरादीनीन्द्रियाणि शिरः स्कन्धजानुपादान्नाभिञ्च स्पृशेत्। अप्रकरणे चेदम्प्रायश्चित्ताभिधानं लाघवार्थन्तत्र प्रकरणे गवादिग्रहणमपि कर्त्तव्यं स्यात्॥ १४३ ॥

अनातुरः स्वानि खानि न स्पृशेदनिमित्ततः।
रोमाणि च रहस्यानि सर्व्वाण्येव विवर्जयेत्॥१४४॥

अनातुरइति। अनातुरः सन् स्वानि खानि इन्द्रियच्छिद्राणि रोमाणि च गोप्यानि उपस्थकक्षादिगतानि निर्निमित्तं न स्पृशेत्॥ १४४ ॥

मङ्गलाचारयुक्तः स्यात्प्रयतात्मा जितेन्द्रियः।
जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः॥१४५॥

मङ्गलाचारयुक्तः स्यादिति। अभिप्रेतार्थसिद्धिर्मङ्गलम्। तद्धेतुत्वेन गोरोचनादिधारणमपि मङ्गलं गुरुसेवादिकमाचारस्तेनोद्युक्तः स्यात् वाह्याभ्यन्तरशौचोपेतोजितेन्द्रियश्च भवेत्। गायत्र्यादिजपं विहितहोमञ्च नित्यं कुर्य्यात्। अतन्द्रितः अनलसः। अनाचारादीनामुक्तानामपि विनिपातनिवृत्त्यर्थत्वात्पुनरभिधानम्॥१४५॥

मङ्गलाचारयुक्तानां नित्यञ्च प्रयतात्मनाम्।
जपतां जुह्वताञ्चैव विनिपातो न विद्यते॥१४६॥

अतआह। मङ्गलाचारयुक्तानामिति। मङ्गलाचाराभ्यां युक्तानान्नित्यं शुचीनां जपहोमरतानान्दैवमानुषोपद्रवो न जायते॥१४६॥

वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः। तं ह्यस्याहुः परन्धर्ममुपधर्म्मोऽन्य उच्यते॥१४७॥

वेदमेवेति। नित्यकृत्यावसरे श्रेयोहेतुतया प्रणवगायत्र्यादिकं वेदमेवानलसोजपेत्। यस्मात्तं ब्राह्मणस्य श्रेष्ठं धर्म्मं मन्वा

दयोवदन्ति। अन्यः पुनस्ततोऽपकृष्टाधर्मोमुनिभिरुच्यते। उक्तस्यैव वेदाभ्यासादेः पूर्व्वजातिस्मरणद्वारेण मोक्षहेतुत्वं वदितुं पुनरभिधानम् ॥ १४७ ॥

वेदाभ्यासेन सततं शौचेन तपसैव च। अद्रोहेण च भूतानां जातिं स्मरति पौर्व्विकीम् ॥ १४८ ॥

वेदाभ्यासेनेति। सततवेदाभ्यासशौचतपोऽहिंसाभिः पूर्व्व भवस्य जातिं स्मरति ॥ १४८ ॥

पौर्विकीं संस्मरन् जातिं ब्रह्मैवाभ्यसते पुनः। ब्रह्माभ्यासेन चाजस्रमनन्तं सुखमश्नुते ॥ १४९ ॥

ततः किमत आह। पौर्व्विकीमिति। पूर्वजातिं स्मरन् जातिमित्येकत्वमनाकाङ्क्षितत्वादविवक्षितम्। बहूनि जन्मानि स्मरंस्तेषु च गर्भजन्मजरामरणदुःखान्यपि स्मरन्संसारे विरज्य ब्रह्मैवाजस्रमभ्यस्यति श्रवणमननध्यानैः साक्षात्करोति तेन चानन्ताविनाशिपरमानन्दाविर्भावलक्षणं मोक्षसुखमाप्नोति ॥ १४९ ॥

सावित्रान् शान्तिहोमांश्च कुर्य्यात्पर्वसु नित्यशः।
पितृंश्चैवाष्टकास्वर्च्चेन्नित्यमन्वष्टकासु च ॥ १५० ॥

सावित्रानिति। सवितृदेवताकान् होमान् अनिष्टनिवृत्त्यर्थञ्च शान्तिहोमान् पौर्णमास्यमावास्ययोः सर्व्वदा कुर्य्यात्। तथा आग्रहायण्याऊर्द्ध्वं कृष्णाष्टमीषु तिसृषु चाष्टकाख्येन कर्म्मणा श्राद्धेन च तदनन्तरितकृष्णनवमीषु चान्वष्टकाख्येन परलोकगतान् पितॄन् यजेत् ॥ १५० ॥

दूरादावसथान्मूत्रं दूरात्पादावसेचनम्। उच्छिष्टान्ननिषेकञ्च दूरादेव समाचरेत् ॥ १५१ ॥

दूरादावसथादिति। नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवइति विष्णुपुराणवचनादेवं विधादग्निगृहस्य दूरान्मूत्रपुरीषपादप्रक्षालनमजलोच्छिष्टान्नानि निषिच्यतइति निषेकं रेतश्चोत्सृजेत् ॥ १५१ ॥

मैत्रम्प्रसाधनं स्नानन्दन्तधावनमञ्जनम्।
पूर्व्वाह्णएव कुर्वीत देवतानाञ्च पूजनम् ॥ १५२ ॥

मैत्रमिति। मित्रदेवताकत्वान्मैत्रः पायुः तद्भवत्वान्मैत्रं पुरीषोत्सर्गं। तथा देहप्रसाधनप्रातःस्नानदन्तधावनाञ्जन

देवार्चनादि पूर्वाह्ण एव कुर्य्यात्। पूर्वाह्णशब्देन रात्रिशेषदिन पूर्वभागाविह विवक्षितौ। पदार्थमात्रविधिपरत्वाच्चास्य पाठ क्रमोपि नादरणीयः नहि स्नानानन्तरन्दन्तधावनम्॥१५२॥

दैवतान्यभिगच्छेत्तु धार्मिकांश्च द्विजोत्तमान्। ईश्वरञ्चैव रक्षार्थं गुरूनेव च पर्व्वसु ॥१५३॥

दैवतानीति। पाषाणादिमयानि धर्मप्रधानांश्च ब्राह्मणान् रक्षार्थं राजादिकं गुरूंश्च पित्रादीनमावास्यादिपर्वसु द्रष्टु मभिमुखो गच्छेत्॥१५३॥

अभिवादयेद्वृद्धांश्च दद्याच्चैवासनं स्वकम्। कृता ञ्जलिरुपासीत गच्छतः पृष्ठतोन्वियात्॥१५४॥

अभिवादयेदिति। गृहागतान् गुरूनभिवादयेत्तेषाञ्च स्वीयमासनं उपवेष्टुं दद्यात्। बद्धाञ्जलिश्च गुरुसमोप आसीत। गच्छतश्च पृष्ठदेशेऽनुगच्छेत्। उक्तोप्ययमभिवादना द्याचारः फलाभिधानाय पुनरुच्यते॥१५४॥

श्रुतिस्मृत्युदितं सम्यङ्निबद्धं स्वेषु कर्मसु। धर्म्म मूलन्निषेवेत सदाचारमतन्द्रितः॥१५५॥

श्रुतिस्मृत्युदितमिति। वेदस्मृतिभ्यां सम्यगुक्तं स्वेषु कर्म्मसु अध्ययनादिष्वङ्गत्वेन सम्बद्धं धर्मस्य हेतं साधनामाचारमन

क्षमः सन्निताम्नं सेवेतेति सामान्येनाचारानुष्ठानोपदेशः फल कथनाय ॥ १५५ ॥

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारोहन्त्यलक्षणम् ॥ १५६ ॥

आचारादिति । आचाराद्दीर्घमायुर्लभते अभिमताश्च प्रजाः पुत्रपौत्रदुहित्रात्मिकाः प्रभूतञ्च धनं । अशुभफलसूचकञ्च देहस्थमलक्षणमाचारोनिष्फलयति । आचाराख्यधर्म्मेणालक्षणसूचितारिष्टनाशात् ॥ १५६ ॥

दुराचारोहि पुरुषोलोके भवति निन्दितः । दुःख भागी च सततं व्याधितोल्पायुरेव च ॥ १५७ ॥

दुराचारोहीति । यस्माद्दुराचारः पुरुषोलोके गर्हितः स्यात् सर्व्वदा दुःखान्वितोरोगवान् अल्पायुश्च भवति तस्मात्सदाचारयुक्तः स्यात् ॥ १५७ ॥

सर्व्वलक्षणहीनोपि यःसदाचारवान्नरः । श्रद्दधानोनसूयश्च शतं वर्षाणि जीवति ॥ १५८ ॥

सर्व्वलक्षणहीनोपीति । यः सदाचारवान् श्रद्धान्वितः परदोषानभिधाता स्वशुभसूचकलक्षणशून्योपि शतायुर्भवति ॥ १५८ ॥

यद्यत्परवशङ्कर्म्म तत्तद्यत्नेन वर्ज्जयेत्। यद्यदात्मवशन्तु स्यात्तत्तत्सेवेत यत्नतः ॥ १५९ ॥

यद्यत्परेति। यद्यत्कर्म पराधीनम्परप्रार्थनादिसाध्यन्तत्तद्यत्नतोवर्जयेत्। यद्यत्स्वाधीनदेहव्यापारसाध्यं परमात्मध्यानादि तत्तद्यत्नतोऽनुतिष्ठेत् ॥ १५९ ॥

सर्व्वम्परवशन्दुःखं सर्व्वमात्मवशं सुखम्। एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥ १६० ॥

अत्र हेतुमाह। सर्व्वं परवशमिति। सर्व्वम्परप्रार्थनादिसाध्यं दुःखहेतुः सर्व्वमात्माधीनं सुखहेतुः। एतत्सुखदुःखयोः कारणं जानीयात् ॥ १६० ॥

यत्कर्म्म कुर्व्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः। तत्प्रयत्नेन कुर्वीत विपरीतन्तु वर्ज्जयेत् ॥ १६१ ॥

यत्कर्मेति। यत्कर्म्म कुर्वतोऽस्यानुष्ठातुः पुरुषस्यान्तरात्मनः तुष्टिः स्यात्तत्प्रयत्नतोऽनुतिष्ठेत् अतुष्टिकरं वर्जयेत्। एतच्चाविहितानिषिद्धगोचरं वैकल्पिकविषयञ्च ॥ १६१ ॥

आचार्य्यञ्च प्रवक्तारम्पितरम्मातरं गुरुम्। न हिंस्याद्ब्राह्मणान् गाश्च सर्व्वांश्चैव तपस्विनः॥१६२॥

आचार्य्यञ्चेति। आचार्य्यमुपनयनपूर्ब्बकवेदाध्यापकं प्रवक्तारं वेदार्थव्याख्यातारं गुरुं अल्पं वा बहु वा यस्येत्युक्तं आचार्य्यादींस्तु न हिंस्यात्। प्रतिकूलाचरणेऽत्र हिंसाशब्दः। गोविन्दराजस्तु। सामान्येन हिंसानिषेधात् आततायिनोप्येतान्न हिंस्यादिति व्याख्यतवान्। तदयुक्तं। गुरुं वा बालवृद्धौवा इत्यनेन विरोधात्॥ १६२॥

नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम्। द्वेषन्दम्भञ्च मानञ्च क्रोधन्तैक्ष्ण्यञ्च वर्जयेत्॥१६३॥

नास्तिक्यमिति। नास्ति परलोकइति बुद्धिं वेदस्य देवतानाञ्च निन्दामात्सर्य्यं धर्म्मानुत्साहाभिमानकोपक्रौर्य्याणि त्यजेत्॥ १६३॥

परस्य दण्डं नोद्यच्छेत्क्रुद्धोनैव निपातयेत्। अन्यत्र पुत्राच्छिष्याद्वा शिष्ठ्यर्थन्ताडयेत्तु तौ॥१६४॥

परस्यदण्डमिति। परस्य हननार्थं क्रुद्धः सन् दण्डादिकं नोत्क्षिपेत्। नच परगात्रे निपातयेत्पुत्रशिष्यभार्य्यादासादेर

न्यत्र कृतापराधानेताननुशासनार्थं रज्वा वेणुदलेन वा इत्यादिवक्ष्यमाणप्रकारेण ताडयेत् ॥ १६४ ॥

ब्राह्मणायावगुर्य्यैव द्विजातिर्वधकाम्यया। शतं वर्षाणि तामिस्रे नरके परिवर्त्तते ॥ १६५ ॥

ब्राह्मणायेति। द्विजातिरपि ब्राह्मणस्य हननार्थं दण्डादिकमुद्यम्यैव न तु निपात्य वर्षशतन्तामिस्राख्यनरके परिभ्रमति ॥ १६५ ॥

ताडयित्वा तृणेनापि संरम्भान्मतिपूर्व्वकम्। एकविंशतमाजातीः पापयोनिषु जायते ॥ १६६ ॥

ताड़यित्वा तृणेनापीति। तृणेनापि क्रोधाद्बुद्धिपूर्व्वकं ब्राह्मणं ताडयित्वा एकविंशतिजन्मानि पापयोनिषु कुक्कुरादियोनिषु जायते ॥ १६६ ॥

अयुध्यमानस्योत्पाद्य ब्राह्मणस्याऽसृगङ्गतः। दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञतया नरः ॥ १६७ ॥

अयुध्यमानस्येति। अयुध्यमानस्य ब्राह्मणस्याङ्गे शास्त्रानभिज्ञतया शोणितमुत्पाद्य परलोके महद्दुःखमाप्नोति ॥ १६७ ॥

शोणितं यावतः पांशून्संगृह्णाति महीतलात्। तावतोऽब्दानमुत्रान्यैः शोणितोत्पादकोऽद्यते ॥ १६८ ॥

शोणितमिति। खड्गादिहननाद्ब्राह्मणाङ्गनिर्गतं रुधिरम्भूमिं पतितं यावतो धूलिखण्डान्कालपिण्डीकरोति तावत्संख्यानि वर्षाणि परलोके शोणितोत्पादक. प्रहर्ता अन्यैः श्वगृगालादिभिर्भक्ष्यते ॥ १६८ ॥

न कदाचिद्द्विजे तस्मादिद्वानवगुरेदपि। न ताडयेत्तृणेनापि न गात्रात्स्रावयेदसृक् ॥ १६९ ॥

नकदाचिदिति। तस्मादवगोरणादिदोषाभिज्ञो ब्राह्मणे दण्डाद्युद्यमननिपातरुधिरस्रावणानि नापद्यपि कुर्य्यादिति पूर्वोक्तक्रियात्रयस्योपसंहारः ॥ १६९ ॥

अधार्मिकोनरोयोहि यस्य चाप्यनृतन्धनम्। हिंसारतश्च योनित्यन्नेहासौ सुखमेधते ॥ १७० ॥

अधार्मिकइति। अधर्मेण व्यवहरतीति अधार्मिकः शास्त्रप्रतिषिद्धागम्यागमनाद्यनुष्ठाता योमानुषः। यस्य च शास्त्रे

व्यवहारनिर्णयादौ च मिथ्याभिधानमेव धनोपायः असत्यम भिधायोत्कोचधनं गृह्णाति यश्च परहिंसाभिरतः नासाविह लोके सुखयुक्तोवर्त्तते। तस्मादेतन्न कर्त्तव्यमिति निन्दयानिषेधः कल्प्यते॥ १७०॥

न सीदन्नपि धर्म्मेण मनोधर्म्मे निवेशयेत्। अधा र्मिकाणाम्पापानामाशु पश्यन्विपर्य्ययम्॥ १७१॥

नसीदन्नपीति। शास्त्रविहितधर्म्ममनुतिष्ठन् धनाद्यभावेन अवसीदन्नपि कदाचिन्नाधर्म्मे बुद्धिं कुर्य्यात्। यस्मादधर्मव्यव हारिणोयद्यप्यापाततोधनादिसम्पद्भागिनोपि दृश्यन्ते तथापि तेषामधार्म्मिकाणां अधर्म्मचौरादिव्यवहारिणाम्पापिनान्तज्ज नितदुरितशालिनां शीघ्रन्धनादिविपर्य्ययोपि दृश्यते। तं पश्यन्नाधर्मे धियन्दध्यादिति शिष्यहिताय दृष्टमर्थन्दर्शित वान्॥ १७१॥

नाधर्म्मश्चरितोलोके सद्यः फलति गौरिव। शनै रावर्त्तमानस्तु कर्त्तुर्मूलानि कृन्तति॥ १७२॥

नाधर्म्मइति। शास्त्रेणानियमितकालपरिपाकत्वात् शुभा शुभकर्म्मणां नाधर्म्मोऽनुष्ठितः तत्कालएव फलति गौरिव

इह भूमिपक्षे साधर्म्यदृष्टान्तः। यथा भूमिरुप्तवीजमात्रा तदैव प्रचुरपचेलिमफलव्रीहिस्तवकसंवलिता न भवति किन्तु नियमफलपाकसमयसापेक्षा। पशुपक्षे वैधर्म्यदृष्टान्तः। यथा गौः पश्वादिदोहाभ्यां सद्यःफलति नैवमधर्म्मः किन्तु क्रमेण वर्त्तमानः फलोन्मुखीभवन्नधर्म्मकर्त्तुर्मूलानि छिनत्ति मूलच्छेदेन सर्व्वनाशोलक्ष्यते देहधनाद्यन्वितोनश्यति ॥ १७२ ॥

यदि नात्मनि पुत्रेषु नचेत्पुत्रेषु नप्तृषु। नत्वेव तु कृतोऽधर्म्मः कर्त्तुर्भवति निष्फलः ॥ १७३ ॥

यदीति। यदि अधर्म्मः कर्त्तुर्देहधनादिनाशं फलन्न जनयति तदा तत्पुत्रेषु नोचेत्पौत्रेषु जनयति नतु निष्फलएव भवति। ननु अन्यकृतस्य कर्म्मणः कथमन्यत्र फलजनकत्वं उच्यते। पुत्रादिनाशस्य पितुः क्लेशहेतुत्वात् शास्त्रीयत्वाच्चास्यार्थस्य नाविश्वासः ॥ १७३ ॥

अधर्म्मेणैधते तावत्ततोभद्राणि पश्यति। ततः सपत्नान् जयति समूलस्तु विनश्यति ॥ १७४ ॥

अधर्म्मेणेति। अधर्म्मेण परद्रोहादिना तावदापाततोग्राम धनादिना वर्द्धते। ततोभद्राणि वहुभृत्यगवाश्वादीनि हितानि लभते। ततः शत्रून्स्वस्मादपकृष्टान् जयति पश्चात्क्रियता

कालेनाधर्मपरिपाकवशात् देहधनतनयादिसहितोविनश्यति ॥ १७४ ॥

सत्यधर्म्मार्य्यवृत्तेषु शौचे चैवरमेत्सदा। शिष्यांश्च शिष्याद्धर्म्मेण वाग्बाहूदरसंयतः॥ १७५ ॥

सत्यधर्म्मार्य्यवृत्तेष्विति। सत्यधर्म्मसदाचारशौचेषु सर्व्वदा रतिं कुर्य्यात्। शिष्यांश्चानुशासनीयान् भार्य्यापुत्रदासक्षात्रान् रज्वा वेणुदलेन वेति प्रकारेण शासयेत्। उक्तानामप्यभिधान मनुष्ठानादरार्थं। वाग्बाहूदरसंयतश्च स्यात् वाक्संयमः सत्य भाषिता बाहुसंयमोबाहुबलेन कस्याप्यपीडनम्। उदर संयमोयथालब्धाल्पभोजनम्॥ १७५ ॥

परित्यजेदर्थकामौ यौ स्यातान्धर्म्मवर्जितौ। धर्म्मञ्चाप्यसुखोदर्कं लोकविक्रुष्टमेव च॥ १७६ ॥

परित्यजेदिति। यावदर्थकामौ धर्म्मविरोधिनौ भवेतां तौ परिहरेत् यथा चौर्य्यादिनार्थोपपादनम् दीक्षादिने यजमानस्य पत्न्युपगमः। उदर्कउत्तरकालः तत्रासुखं यच्च धर्म्मं तद्धर्म्ममपि परित्यजेत्। यथा पुत्रादिबहुपोष्ययुक्तस्य सर्व्वस्वदानम्। लोकविक्रुष्टं यच्च लोकानां विक्रोशः। यथा कलौमध्यमाष्टकादिषु गोवधादि॥ १७६ ॥

न पाणिपादचपलो न नेत्रचपलोऽनृजुः। न स्या
द्वाक्चपलश्चैव न परद्रोहकर्म्मधीः॥१७७॥

न पाणिपादचपल इति। पाण्यादिचापल्यन्त्यजेत्। अनुपयु
क्तवस्तूपादानादिपाणिचापल्यं निष्प्रयोजनं भ्रमणादि पाद
चापल्यं परस्त्रीप्रेक्षणादिरसो नेत्रचापल्यं बहुगर्ह्यवादिता
वाक्चापल्यं। अनृजुः कुटिलो न स्यात्। परद्रोहो हिंसा तदर्थं
चेष्टां धियञ्च न कुर्य्यात्॥१७७॥

येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्सतां मार्गन्तेन गच्छन्न रिष्यते॥१७८॥

येनेति। बहुविधशास्त्रार्थसम्भवे पितृपितामहाद्यनुष्ठित
एव शास्त्रार्थोऽनुष्ठातव्यः। तेन गच्छन्न रिष्यते नाधर्म्मेण
हिंस्यते॥१७८॥

ऋत्विक्पुरोहिताचार्य्यैर्म्मातुलातिथिसंश्रितैः।
बालवृद्धातुरैर्व्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः॥१७९॥

ऋत्विगिति वचनद्वयं। ऋत्विगादिभिर्व्वाक्कलहं न कुर्य्यात्।
शान्त्यादिकर्त्ता पुरोहितः। संश्रिता अनुजीविनः। ज्ञातयः
पितृपक्षाः। सम्बन्धिनः जामातृ श्यालकादयः। बान्धवा
मातृपक्षाः। यामयोर्भगिनीस्नुषाद्याः॥१७९॥ ॥१८०॥

मातापितृभ्यां यामीभिर्भ्रात्रा पुत्रेण भार्य्यया ।
दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥१८०॥

एतैर्व्विवादान्सन्त्यज्य सर्व्वपापैः प्रमुच्यते । एभि
र्जितैश्च जयति सर्व्वान् लोकानिमान् गृही ॥१८१॥

एतैरिति । एतैः ऋत्विगादिभिः सह विवादान्परित्यज्य अज्ञानकृतसर्व्वपापैः प्रमुच्यते । तथैतैर्व्विवादैरुपेक्षितैरिमान् वक्ष्यमाणान् सर्व्वान् लोकान् गृहस्थोजयति ॥ १८१ ॥

आचार्य्योब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः ।
अतिथिस्त्विन्द्रलोकेशोदेवलोकस्य चर्त्विजः ॥१८२॥

आचार्य्यइति । आचार्य्योब्रह्मलोकस्य प्रभुः तेन सह विवादपरित्यागेन तत्सन्तुष्ट्या च ब्रह्मलोकप्राप्तेर्गौणं ब्रह्मलोकेशत्वम् । एवम्प्राजापत्यलोकेशः। प्राजापत्ये पिताच प्रभुः । अथितिरिन्द्रलोके । देवलोकस्य च ऋत्विजः। एवमुत्तरत्रापि तत्तल्लोकेशत्वं बोद्धव्यम् ॥ १८२ ॥

यामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः।
सम्बन्धिनोह्यपां लोके पृथिव्यां मातृमातुलौ॥१८३॥

यामयइति। अप्सरसां लोके यामयः प्रभवन्ति। वैश्व देवलोके बान्धवाः। वरुणलोके सम्बन्धिनः। भूर्लोके मातृमातुलौ ॥ १८३ ॥

आकाशेशास्तु विज्ञेयाबालवृद्धकृशातुराः। भ्राता ज्येष्ठः समः पित्रा भार्य्यापुत्रः स्वका तनुः ॥ १८४ ॥

आकाशेशास्त्विति। कृशः कृशधनः संश्रितोविवक्षितः बाल वृद्धसंश्रितातुराअन्तरीक्षे प्रभवन्ति। भ्राता च ज्येष्ठः पितृतुल्यः तस्मात्सोपि प्रजापतिलोके प्रभुः भार्य्यापुत्रौ च स्वशरीरमेव अतः कथमात्मनैव सह विवादः सम्भवति॥१८४॥

छाया स्वोदासवर्गश्च दुहिता कृपणम्परम्।
तस्मादेतैरधिक्षिप्तः सहेतासंज्वरः सदा॥१८५॥

छायेति। स्वदासवर्गस्य नित्यानुगतत्वात् आत्मछायेव न विवादार्हः दुहिताच परं कृपापात्रं तस्मादेतैरधिक्षिप्तः सन् असन्तापः सहेत नतु विवदेत्॥१८५॥

प्रतिग्रहसमर्थोऽपि प्रसङ्गन्तत्र वर्जयेत्। प्रतिग्रहेण ह्यस्याशु ब्राह्मन्तेजः प्रशाम्यति ॥ १८६ ॥

प्रतिग्रहसमर्थोऽपीति। विद्यातपोवृत्तसम्पन्नतया प्रतिग्रहेऽधिकार्य्यपि तत्र पुनःपुनःप्रवृत्तिन्त्यजेत्। यस्मात्प्रतिग्रहेणास्य वेदाध्ययनादिनिमित्तप्रभावः शीघ्रमेव विनश्यति। यात्रामात्रप्रसिद्ध्यर्थमित्युक्तेऽपि सामान्येनार्जनसङ्कोचे विशेषेण प्रतिग्रहस्य ब्राह्मप्रभावप्रशमनफलकथनार्थं वचनम्॥१८६॥

न द्रव्याणामविज्ञाय विधिन्धर्म्यम्प्रतिग्रहे। प्राज्ञः प्रतिग्रहं कुर्य्यादवसीदन्नपि क्षुधा॥ १८७ ॥

नद्रव्याणामिति। द्रव्याणाम्प्रतिग्रहं धर्म्माय हितं विधानं ग्राह्यदेवताप्रतिग्रहमन्त्रादिकमज्ञात्वा क्षुधावसादं सङ्गच्छन्नपि प्राज्ञोन प्रतिगृह्णीयात्किम्पुनरनापदि ॥१८७॥

हिरण्यं भूमिमश्वङ्गामन्नं वासस्तिलान् घृतम्। प्रतिगृह्णन्नविद्वांस्तु भस्मीभवति दारुवत्॥ १८८ ॥

हिरण्यमिति। स्वर्णादीन् श्रुतस्वाध्यायहीनः प्रतिगृह्णन्नग्निसंयोगेन दारुवद्भस्मीभूतोभवति पुनरुत्पत्तिन्नलभते॥१८८॥

हिरण्यमायुरन्नञ्च भूर्गौश्चाप्योषतस्तनुम्। अश्व श्चक्षुस्त्वचं वासो घृतन्तेजस्तिलाः प्रजाः॥ १८९॥

हिरण्यमिति। अविदुषः प्रतिग्रहीतुर्भूर्गौश्च शरीरं ओषतो दहतः उषदाहे भौवादिकस्तस्येदं रूपं भूगवोर्द्वित्वविवक्षायां द्विवचनम्। एवं हिरण्यमन्नञ्चायुरोषतः। अश्वश्चक्षुरित्यादिषु विभक्तिविपरिणामादोषतीत्येकवचनान्तस्यानुषङ्गः॥ १८९॥

अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः। अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति॥ १९०॥

अतपास्त्विति। यस्तपोविद्याशून्यः प्रतिग्रहेच्छुः ब्राह्मणो भवति स प्रतिग्रहाधिकाराभावात् बुद्धिस्थेन तेनेति परामृष्टेनैव दातारमर्हप्रतिग्रहदानपापयुक्तेन सह नरके मज्जति। यथा पाषाणमयेनोडुपेनाम्भस्तरन् तेनैव सहाम्भसि मग्नो भवति ॥ १९०॥

तस्मादविद्वान्बिभियाद्यस्मात्तस्मात्प्रतिग्रहात्। स्वल्पकेनाप्यविद्वान्हि पङ्के गौरिव सीदति॥ १९१॥

तस्मादविद्वानिति। यस्मादसावल्पद्रव्यप्रतिग्रहेणापि मूर्खः पङ्के गौरिव नरकेऽवसन्नो भवति तस्माद्यतः कुतश्चित्तु वर्णादिव्यतिरिक्तशीघकाद्यसारप्रतिग्रहादपि त्रस्येत्॥ १९१॥

न वार्य्यपि प्रयच्छेत्तु वैडालव्रतिके द्विजे।
न वकव्रतिके विप्रे नावेदविदि धर्म्मवित् ॥ १९२ ॥

न वार्य्यपीति। प्रतिग्रहीतुर्द्धर्म्ममभिधाय अधुना दातु राह। वायसादिभ्योयद्दीयते तदपि वैडालव्रतिकेभ्योधर्म्मज्ञो न दद्यादित्यतिशयोक्त्या अन्नाम्बरदानं निषिध्यते। ननु वारिदानमेव पाषण्डिनोविकर्म्मस्थानित्यनेन वैडालव्रतिकाय अतिथित्वेन उत्कृतार्थदानादिनिषिद्धमिह तु धनदानं निषिध्यते। अतएव विधिनाप्यर्जितन्धनमिति वक्ष्यति। नावेदविदीति वेदार्थानभिज्ञे। एतच्च विद्वत्सम्भवे नावेदविदीति निषिध्यते ॥ १९२ ॥

त्रिष्वप्येतेषु दत्तं हि विधिनाप्यर्जितन्धनम्।
दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥ १९३ ॥

त्रिष्वपीति। एतेषु त्रिष्वपि वैडालव्रतिकादिषु न्यायार्जितमपि धनन्दत्तं दातुः प्रतिग्रहीतुश्च परलोके नरकहेतुत्वादनर्थाय भवति ॥ १९३ ॥

यथाप्लवेनौपलेन निमज्जत्युदके तरन्। तथा
निमज्जतोधस्तादज्ञौ दातृप्रतीच्छकौ ॥ १९४ ॥

यथाप्लवेनेति। यथा पाषाणमयेनोडुपादिना जले तरन् तेनैव सहाधोगच्छति। एवन्दानप्रतिग्रहशास्त्रानभिज्ञौ दातृ

याहक्ती नरकङ्गच्छतः। अतयाश्चनधीयानइति प्रतिग्रहीत्व प्राधान्येन निन्दोक्ता इहतु दात्टप्राधान्येन इत्यपुनरुक्तिः॥१९४॥

धर्म्मध्वजी सदालुब्धश्छाद्मिकोलोकदम्भकः।
वैडालव्रतिकोज्ञेयोहिंस्रः सर्व्वाभिसन्धकः॥१९५॥

धर्म्मध्वजीति। योवङ्कजनसमक्षं धर्ममाचरति स्वतः पर तस्य लोके ख्यापयति तस्य धर्मोध्वजं चिह्नमिवेति धर्मध्वजी। लुब्धः परधनाभिलाषुकः।छद्मना व्याजेन चलतीति छाद्मिकः। लोकदम्भकोनिःक्षेपापहारादिना जनवञ्चकः। हिंस्रः पर हिंसाशीलः। सर्व्वाभिसन्धकः परगुणासहनतया सर्व्वाक्षेपकः। विडालव्रतेन चरतीति वैडालव्रतिकः। विडालोहि प्रायेण मूषिकादिहिंसाहचितया ध्याननिष्ठइव विनीतः सन्नवतिष्ठत इति उपचाराद्विडालव्रतशब्दः॥१९५॥

अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो
मिथ्याविनीतश्च वकव्रतचरोद्विजः॥१९६॥

अधोदृष्टिरिति। अधोदृष्टिर्निजविनयख्यापनाय सतत मधएव निरीक्षते। निष्कृतिर्निष्ठुरता तया चरतीति नैष्कृतिकः स्वार्थसाधनतत्परः परार्थखण्डनेन। शठोवक्रः। मिथ्याविनीतः कपटविनयवान्। वकव्रतञ्चरतीति वकव्रत

चरः । वकोहि प्रायेण मीनहननहृचितया मिथ्याविनीतः सन्नेवं शीलोभवतीति गौणोवकव्रतशब्दः ॥ १९६ ॥

ये वकव्रतिनोविप्रा ये च मार्जारलिङ्गिनः । ते पतन्त्यन्धतामिस्रे तेन पापेन कर्म्मणा ॥ १९७ ॥

ये वकव्रतिनइति । ये वकव्रतं विड़ालव्रतञ्चरन्ति ते ब्राह्मणास्तेन पापहेतुना कर्म्मणा अन्धतामिस्रनाम्नि नरके पतन्ति ॥ १९७ ॥

न धर्म्मस्यापदेशेन पापं कृत्वा व्रतञ्चरेत् । व्रतेन पापम्प्रच्छाद्य कुर्व्वन् स्त्रीशूद्रदम्भनम् ॥ १९८ ॥

न धर्म्मस्येति । पापं कृत्वा प्रायश्चित्तरूपम्प्राजापत्यादिव्रतं पापमपनयन्नेदं प्रायश्चित्तम् किन्तु धर्म्मार्थमहमनुतिष्ठामीति स्त्रीशूद्रमूर्खादिजनमोहनं कुर्व्वन्नानुतिष्ठेत् ॥ १९८ ॥

प्रेत्येह चेदृशाविप्रागर्ह्यन्ते ब्रह्मवादिभिः । छद्मना चरितं यच्च व्रतं रक्षांसि गच्छति ॥ १९९ ॥

अलिङ्गी लिङ्गिवेषेण योवृत्तिमुपजीवति । सलिङ्गिनां हरत्येनस्तिर्य्यग्योनौ च जायते ॥ २०० ॥

प्रेत्येहइतिश्लोकद्वयम् । प्रथमं सुबोधम् । अब्रह्मचार्य्यादिर्योब्रह्मचर्य्यादिलिङ्गमेखलाजिनदण्डादिवेषोपलक्षित

स्तद्वृत्त्या भिक्षाभ्रमणादिना जीवति स अब्रह्मचार्य्यादीनां यत्पापं तदात्मन्याहरति कुक्कुरादितिर्य्यग्योनौ चउत्पद्यते तस्मादेतन्न कर्त्तव्यमिति निषेधः कल्प्यते ॥ १९९ ॥ २०० ॥

परकीयनिपानेषु न स्नायाच्च कदाचन। निपान कर्त्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते ॥ २०१ ॥

परकीयेति। निपानञ्जलाधारः परकृतपुष्करिण्यादिषु न कदाचित्स्नायात्। तत्र स्नात्वा पुष्करिण्यादिकर्त्तुर्यत्पापं तस्यांशेन वक्ष्यमाणचतुर्थभागरूपेण संबध्यते। अकृत्रिमनद्याद्य सम्भवे परकृतेपि पुष्करिण्यादौ प्राक् प्रदानात् पञ्चपिण्डान् उद्धृत्य स्नातव्यम्। तदाह याज्ञवल्क्यः। पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिषु। उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत्। स्नात्वा च तर्पयेद्देवान्पितॄंश्चैव विशेषतः ॥ २०१ ॥

यानशय्यासनान्यस्य कूपोद्यानगृहाणि च। अदत्तान्युपयुञ्जान एनसःस्यात्तुरीयभाक् ॥ २०२ ॥

यानशय्येति। अस्येति प्रकृतः परः परामृश्यते। परस्य यानादीन्यदत्तानि उपयुञ्जानस्तदीयपापचतुर्थभागभाक्

भवति। अदत्तानीति परस्यानुमत्यभावस्य विवक्षितः। तेन सर्व्वार्थोत्सृष्टमठकूपादौ उपयोगार्थात्मस्नानादौ न विरोधः ॥ २०२ ॥

नदीषु देवखातेषु तडागेषु सरःसु च। स्नानं समाचरेन्नित्यङ्गर्त्तप्रस्रवणेषु च ॥ २०३ ॥

नदीष्विति। नद्यादिषु सर्व्वदा स्नानमाचरेत्। देवखातेष्विति तडागविशेषणं देवसम्बन्धित्वेन प्रसिद्धेषु सरःसु। गर्त्तेषु अष्टधनुःसहस्रेभ्यो न्यूनगतिषु। तदुक्तञ्छन्दोगपरिशिष्टे। धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः। चतुर्हस्तप्रमाणन्धनुः। प्रस्रवणेषु निर्झरेषु च अनेनैव परकीयनिपानव्यावृत्तिसिद्धौ यत्पृथग्वचनं तदात्मीयोत्सृष्टतडागादिषु स्नानाभ्यनुज्ञानार्थं तदपि नद्याद्यसम्भवे द्रष्टव्यं ॥ २०३ ॥

यमान्सेवेत सततं न नित्यं नियमान् बुधः। यमान्पतत्यकुर्व्वाणो नियमान् केवलान् भजन् ॥ २०४ ॥

यमानिति। नियमापेक्षया यमानुष्ठानगौरवज्ञापनार्थमिदम्। न तु नियमनिषेधार्थं द्वयोरेव शास्त्रार्थत्वात्। यमनियमविवेकस्य मुनिभिरेव कृतः। तदाह याज्ञवल्क्यः।

ब्रह्मचर्य्यं दयाचान्तिर्ध्यानंसत्यमकल्कता। अहिंसास्तेयमाधुर्य्ये दमश्चेति यमाःस्मृताः। स्नानं मौनोपवासेज्या स्वाध्यायोपस्थ निग्रहाः। नियमागुरुशुश्रूषा शौचाक्रोधाप्रमादता। यम नियमस्वरूपज्ञः समस्तस्नानादिनियमत्यागेनाप्यहिंसादिरूपं यममनुतिष्ठेत्। नियमाननुतिष्ठन्नपि यमानुष्ठानरहितः पततीत्यर्थं यमस्तुत्यर्थमारम्भ इति। मेधातिथिगोविन्दराजौ हिंसादि प्रतिषेधार्थकायमाः। वेदमेव जपेन्नित्यमित्यादयो ऽनुष्ठेयरूपानियमा इति व्याचक्षाते। अहिंसासत्यवचनम्ब्रह्म चर्य्यमकल्कता। अस्तेयमिति पञ्चैते यमावै परिकीर्त्तिताः। अक्रोधोगुरुशुश्रूषा शौचमाहारलाघवम्। अप्रमादश्च सततं पञ्चते नियमाः स्मृताः॥ २०४॥

नाश्रोत्रियतते यज्ञे ग्रामयाजिकृते तथा। स्त्रिया क्लीवेन च कृते भुञ्जीत ब्राह्मणः क्वचित्॥ २०५॥

नाश्रोत्रियेति। अनधीतवेदेनोपक्रान्ते यज्ञेऽग्नीषोमीया दूर्द्धमपि भोजनयोग्यसमये, ब्राह्मणोन भुञ्जीत। तथा बहूनां याजकेन ऋत्विजा स्त्रिया नपुंसकेन च यत्र यज्ञे हूयते तत्र ब्राह्मणः कदाचिन्न भुञ्जीत॥ २०५॥

अश्लीकमेतत्साधूनां यत्र जुह्वत्यमी हविः। प्रती
पमेतद्देवानान्तस्मात्तत्परिवर्ज्जयेत्॥ २०६॥

अश्लीकमिति। पूर्वोक्ताबह्वयाजकादयोयत्र होमं कुर्वन्ति तत्कर्म शिष्टानामश्लीकमश्रीकं श्रीकं रेफस्य स्थाने लकारः। देवानां प्रतिकूलं तस्मादेतान् होमन्न कारयेत् ॥२०६॥

मत्तक्रुद्धातुराणाञ्च न भुञ्जीत कदाचन।
केशकीटावपन्नञ्च पदास्पृष्टञ्च कामतः॥ २०७॥

मत्तक्रुद्धातुराणामिति। क्षीवक्रुद्धव्याधितानामन्नं तथा केशकीटसंसर्गदुष्टं पादेन चेच्छातस्संस्पृष्टमन्नं न भुञ्जीत ॥२०७॥

भ्रूणघ्नावेक्षितञ्चैव संस्पृष्टञ्चाप्युदक्यया। पत
त्रिणावलीढञ्च शुना संस्पृष्टमेव च॥ २०८॥

भ्रूणघ्नेति। भ्रूणघ्नेत्युपलक्षणात् गोघ्नेत्यादिपतितावेक्षितं रजस्वलया च स्पृष्टं पक्षिणा च काकादिना खादितं कुक्कुरेण च स्पृष्टमन्नन्न भुञ्जीत ॥२०८॥

गवा चान्नमुपघ्रातं घुष्टान्नञ्च विशेषतः। गणान्नं गणिकान्नञ्च विदुषा च जुगुप्सितम्॥ २०९॥

गवेति। यदन्नं गवा घ्रातं घुष्टान्नं कोभोक्ता इत्युद्घुष्यान्नं सत्रादौ यद्दीयते। विशेषत इति भूरिदोषतया प्रायश्चित्त गौरवार्थम्। गणान्नं मठब्राह्मणसंघान्नं गणिका वेश्या तस्या अन्नं शास्त्रविदा च यद्दुष्टमिति निन्दितं तच्च न भुञ्जीत॥ २०९॥

स्तेनगायनयोश्चान्नं तक्ष्णो वार्द्धुषिकस्य च। दीक्षितस्य कदर्य्यस्य बद्धस्य निगडस्य च॥ २१०॥

स्तेनेति। चोरगायनवृत्तिजीविनोस्तथा, तक्षवृत्तिजीवनस्य वृद्ध्युपजीविनश्चान्नं न भुञ्जीत। तथा यज्ञे दीक्षितस्य प्रागग्नीषोमीयात्। कदर्य्यस्य कृपणस्य निगडस्येति तृतीयार्थे षष्ठी निगडेनबद्धस्य गोविन्दराजस्तु। बद्धशब्दस्य बन्धनैर्विनाप्ययो निगडैर्निगडितस्य निगडस्येतिदत्तायोनिगडस्येति व्याख्यातवान्॥ २१०॥

अभिशस्तस्य षण्ढस्य पुंश्चल्या दाम्भिकस्य च। शुक्तम्पर्य्युषितञ्चैव शूद्रस्योच्छिष्टमेव च॥ २११॥

अभिशस्तस्येति। महापातकित्वेन संजातलोकविख्यातशस्य नपुंसकस्य पुंश्चल्या व्यभिचारिण्या अगणिकाया अपि दाम्भिकस्य

छद्मना धर्म्मचारिणोवैडालव्रतिकादेरन्नं न भुञ्जीत। शुक्तं यत्स्वभावतोमधुरं दध्यादिसम्पर्कवशेन उदकादीनांचाम्लादिभावकृतम्। पर्य्युषितं रात्र्यन्तरितं शूद्रस्यान्नं न भुञ्जीतेति सम्बन्धः उच्छिष्टञ्च भुक्तावशिष्टान्नमविशेषात्कस्यापि न भुञ्जीत। गुरूच्छिष्टञ्च विहितत्वाद्भोज्यम्। गोविन्दराजस्तु। शूद्रस्योच्छिष्टं तद्भुक्तावशिष्टञ्च स्थालीस्थमपि न भुञ्जीत इत्याह॥ २११॥

चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः।
उग्रान्नं सूतिकान्नञ्च पर्य्याचान्तमनिर्दशं॥ २१२॥

चिकित्सकस्येति। चिकित्साजीविनः मृगयोर्मांसविक्रयार्थं मृगादिपशुहन्तुः। क्रूरस्यानृजुप्रकृतेः निषिद्धोच्छिष्टभोक्तुरन्नं न भुञ्जीत। उग्रोदारुणकर्म्मा तस्यान्नं। गोविन्दराजोमञ्जर्य्यामुग्रं राजानमुक्तवान्। मनुवृत्तौ च शूद्रायां क्षत्रियोत्पन्नमभ्यधात्। भेदोक्तेर्याज्ञवल्कीये नाग्रोराजेति वावदत्। आश्चर्य्यमिदमेतस्य स्वकीयहृदि भूषणम्। सूतिकान्नंसूतिकामुद्दिश्य यत् क्रियते तदन्नन्तत्कुलजैरपि न भोक्तव्यम्। एकपङ्क्तिस्थानन्यानवमन्य यत्रान्ने भुज्यमाने केनचिदाचमनं क्रियते तत्पर्य्याचान्तम्। अनिर्द्दशं सूतिकान्नं प्रेतान्नस्य वक्ष्यमाणत्वात् न भुञ्जीत॥ २१२॥

अनर्चितं वृथामांसमवीरायाश्च योषितः। द्विष
दन्नं नगर्य्यन्नम्पतितान्नमवक्षुतम्॥ २१३॥

अनर्चितमिति। अर्चार्हस्य यदवज्ञया दीयते। वृथामांस
न्देवतादिमुद्दिश्य यन्न कृतम्। अवीरायाः पतिपुत्ररहितायाः।
शत्रुनगरपतितानाञ्च उपरिकृतक्षुतञ्चान्नं न भुञ्जीत॥ २१३॥

पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा। शैलूष
तुन्नवायान्नं कृतघ्नस्यान्नमेव च॥ २१४॥

पिशुनेति। पिशुनः परोक्षे परापवादभाषणपरः। अनृ
तीति। अतिशयेनानृतवादी कूटसाक्ष्यादिः। क्रतुविक्रायकः
मदीययागस्य फलंतव भवत्विति अभिधाय योधनं गृह्णाति।
शैलूषोनटः। तुन्नवायः सौचिकः। कृतघ्नोयः कृतोपकारस्या
पकारं प्रवर्त्तते तस्यान्नं न भुञ्जीत॥ २१४॥

कर्म्मारस्य निषादस्य रङ्गावतारकस्य च। सुव
र्णकर्त्तुर्वेणस्य शस्त्रविक्रयिणस्तथा॥ २१५॥

कर्मारस्येति। कर्मारस्य लौहकारस्य। निषादस्य दश
माध्यायोक्तस्य। नटगायनव्यतिरिक्तस्य रङ्गावतरणजीविनः।
सुवर्णकारस्य। वेणोर्भेदनेन योजीवति वरुडदूति विश्वरूपः।
शस्त्रं लोहः तद्विक्रयिणश्चान्नं न भुञ्जीत॥ २१५॥

अवतां शौण्डिकानाञ्च चैलनिर्णेजकस्य च।
रञ्जकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥ २१६ ॥

अवतामिति। आखेटकार्थं श्वनः पोषकानां। मद्यविक्रयिणां। वस्त्रधावकस्य। कुसुम्भादिना वस्त्ररागकृतः। निर्दयस्य। यस्य चोपपतिर्गृहे जारश्च यथाज्ञानतो गृहे स्थितस्तस्य गेहे नाद्यात्॥ २१६ ॥

मृष्यन्ति ये चोपपतिं स्त्रीजितानाञ्च सर्व्वशः।
अनिर्दशञ्च प्रेतान्नमतुष्टिकरमेव च ॥ २१७ ॥

मृष्यन्तीति। गृहइत्यनुषज्यते। गेहे ज्ञातभार्य्याजारं ये सहन्ते तेषामन्नं न भुञ्जीत तेन गृहात् निःसारितायाजारसह नेप्यदोषः। तथा सर्व्वकर्मसु स्त्रीपरतन्त्राणाम्। अनिर्गताशौचस्य कृतकान्नं। अतुष्टिकरमेव च न भुञ्जीत ॥ २१७ ॥

राजान्नन्तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम्। आयुः सुवर्णकारान्नं यशश्चर्मावकर्त्तिनः॥ २१८॥

राजान्नमिति। राजान्नन्तेजोनाशयति इतएव दोषदर्शनात् तदन्नभक्षणनिषेधः कल्प्यते। एवमुत्तरत्रापि पूर्व्वम

निषिद्धस्य दोषदर्शनादेव निषेधकल्पनं नाद्याच्छूद्रस्य पक्वान्न मिति निषेधिष्यति तदतिक्रमणफलकथनमिदम्। शूद्रस्य पक्वान्नमध्ययनादिनिमित्तं तेजोनाशयति सुवर्णकारस्यान्न मायुः चर्मकारान्नं ख्यातिं नाशयति॥ २१८॥

कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च। गणान्नं गणिकान्नञ्च लोकेभ्यः परिकृन्तति॥ २१९॥

कारुकान्नमिति। कारुकस्य सूपकारादेरन्नं प्रजां अपत्यं निहन्ति। चर्मकारादेः कारुकत्वेपि गोबलीवर्द्दन्यायेन पृथक् निर्देशः। निर्णेजकस्यान्नं बलं हन्ति। गणगणिकयोरन्नञ्च कर्मा न्तरार्जितेभ्यः स्वर्गादिलोकेभ्यःआच्छिनत्ति॥ २१९॥

पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियं। विष्ठा वार्द्धुषिकस्यान्नं शस्त्रविक्रयिणो मलं॥ २२०॥

पूयमिति। चिकित्सकस्यान्नं पूयं पूयभक्षणसमदोषम्। एवं पुंश्चल्या अन्नं इन्द्रियं शुक्रं। वार्द्धुषिकस्यान्नं पुरीषं। लोह विक्रयिणोऽन्नं विष्ठाव्यतिरिक्तश्लेष्मादि। गोविन्दराजस्तु। चिकित्सकान्नभक्षणेन तथाविधायां जातौ जायते यत्र पूयभुग्भ वतीत्याह॥ २२०॥

य एतेऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्त्तिताः।
तेषां त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः॥ २२१॥

य एतेऽन्य इति। प्रतिपदनिर्दिष्टेभ्यो येऽन्ये क्रमेणाभोज्यान्ना अस्मिन् प्रकरणे पठितास्तेषां यदन्नं तत् त्वगस्थिरोमाणि यस्तदीयायास्त्वचः कीकशस्य रोम्नाश्च भुक्तानां दोषः स एव तदन्नस्यापि भुक्तस्य बोद्धव्यः॥ २२१॥

भुक्तातोन्यतमस्यान्नममत्या क्षपणं त्र्यहम्। मत्या
भुक्ताचरेत्कृच्छ्रं रेतोविण्मूत्रमेव च॥ २२२॥

भुक्तेति। एषां मध्येऽन्यतमस्यान्नमज्ञानतो भुक्ता त्र्यह मुपवासः। ज्ञानतस्तु कृच्छ्रं। एवं रेतोविण्मूत्रभोजनेपि एतेषामन्यतमस्येति षष्ठीनिर्देशात्स्वत्वादिसम्बन्धिनः परिग्रहदुष्टान्नस्यैव प्रायश्चित्तं। न संसर्गदुष्टस्य केशकीटावपन्नादेः। नापि कालदुष्टस्य पर्युषितान्नादेः। नापि निमित्तदुष्टस्य घुष्टान्नादेः। एकप्रकरणोपदेशस्त्वेषां स्नातकव्रतत्वज्ञापनार्थं। प्रायश्चित्तञ्चैतेष्वेकादशे वक्ष्यति। यदि तु सर्व्वेष्वेवं प्रायश्चित्तं स्यात्तदा भुक्तातोन्यतममित्यभ्यधास्यत् नत्वन्यतमस्येति। तस्मादेकप्रकरणाद्यन्मेधातिथिरभ्यधात्। प्रायश्चित्तमिदं युक्तं

शूद्रान्नादौ तदसुन्दरम्। अप्रकरणेच प्रायश्चित्तस्याभिधानं लाघवार्थं तत्र क्रियमाणे मत्तादिग्रहणमपि कर्त्तव्यं स्यात् ॥ २२२ ॥

नाद्याच्छूद्रस्य पक्कान्नं विद्वानश्राद्धिनोद्विजः।
आददीताममेवास्मादवृत्तावेकरात्रिकं ॥ २२३ ॥

नाद्यादिति। अविशेषेण शूद्रान्नं प्रतिषिद्धं तस्येदानीं विशिष्टविषयताच्यते अश्राद्धिनः श्राद्धादिपञ्चयज्ञशून्यस्य शूद्रस्य शास्त्रविद्द्विजः पक्कान्नन्न भुञ्जीत। किन्त्वन्नान्तराभावे सति एकरात्रनिर्वाहोचितमाममेवान्नमस्माद्गृह्णीयात् नतु पक्कान्नम् ॥ २२३ ॥

श्रोत्रियस्य कदर्य्यस्य वदान्यस्य च वार्द्धुषेः। मीमांसित्वोभयन्देवाः सममन्नमकल्पयन् ॥ २२४ ॥

श्रोत्रियस्येति। एकोऽधीतवेदः कृपणश्च अपरोदाता वृद्धिजीवी च तयोरुभयोरपि गुणदोषवत्त्वं विचार्य्य देवास्तुल्यमन्नमनयोरिति निरूपितवन्तः उभयोरपि गुणदोषसाम्यात् ॥ २२४ ॥

तान् प्रजापतिराहैत्य मा कृद्धं विषमं समम्।
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत्॥ २२५॥

तानिति। तान् देवानागत्य ब्रह्मा प्रोवाच विषमसमं मा समं कुरुत विषमसमीकरणमनुचितं। कः पुनरनयोर्विशेषः इत्यपेक्षायां सएवावोचत्। दानशीलवार्द्धुषिकस्यापि श्र... यान्नं पवित्रं भवति। कृपणान्नं पुनरश्रद्धया हतं दूषितं अधर्म्यं। प्रागुभयप्रतिषेधेऽपि श्रद्धादत्तविदद्वार्द्धुषिकान्नविशुद्धिबोधनपरमिदम्॥ २२५॥

श्रद्धयेष्टञ्च पूर्त्तञ्च नित्यं कुर्य्यादतन्द्रितः। श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्द्धनैः॥ २२६॥

अतएवाह। श्रद्धयेति। इष्टमन्तर्वेदियज्ञादिकर्म्म पूर्त्तं ततोऽन्यत्पुष्करिणीकूपप्रपारामादि। तदेवमनलसः सन्नित्यं काम्यस्वर्गादिफलरहितं श्रद्धया कुर्य्यात्। यस्मात्ते इष्टापूर्त्ते न्यायार्जितधनेन श्रद्धया कृतेऽक्षये मोक्षफले भवतः॥ २२६॥

दानधर्म्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम्। परितुष्टेन भावेन पात्रमासाद्य शक्तितः॥ २२७॥

दानधर्म्ममिति। दानाख्यं धर्म्ममैष्टिकम्पौर्त्तिकं अन्तर्वेदिकं वहिर्वेदिकञ्च सर्व्वदा विद्यातपोयुक्तं ब्राह्मणमासाद्य परितोषाख्येनान्तःकरणधर्म्मेणयुक्तः यथाशक्ति कुर्यात्॥ २२७॥

यत्किञ्चिदपि दातव्यं याचितेनानसूयया। उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्व्वतः॥ २२८॥

यत्किञ्चिदिति। प्रार्थितेन परगुणामत्सरेन स्वल्पमपि यथाशक्ति दातव्यं यस्मात्सर्व्वदा दानशीलस्य कदाचित्तादृशं पात्रमागमिष्यति तत्सर्व्वस्मान्नरकपातहेतोर्दुष्कृतान्मोचयिष्यति ॥ २२८ ॥

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः। तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्॥ २२९ ॥

वारिदइति। जलदः क्षुत्पिपासाविगमात्तृप्तिं अन्नदोऽत्यन्तसुखं तिलप्रदईप्सितान्यपत्यादीनि दीपदोविप्रवेश्मादौ निर्दोषश्चक्षुः प्राप्नोति ॥ २२९ ॥

भूमिदोभूमिमाप्नोति दीर्घमायुर्हिरण्यदः। गृहदोऽग्र्याणि वेश्मानि रूप्यदोरूपमुत्तमम्॥ २३० ॥

भूमिदइति। भूमिदोभूमेराधिपत्यम् सुवर्णदः चिरजीवित्वं गृहदः श्रेष्ठानि वेश्मानि रूप्यदः सकलजननयनमनोहरं रूपं लभते॥ २३० ॥

वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः। अनडुहः श्रियं पुष्टां गोदोब्रध्नस्य. पिष्टपं॥ २३१॥

वासोद इति। वस्त्रदश्चन्द्रसमानलोकान् प्राप्नोति चन्द्रलोके चन्द्रसमविभूतिर्वसतीति। एवमेवाश्विलोकं घोटकदः। बलीवर्दस्य दाता प्रचुरां श्रियम्। स्त्रीगवीप्रदः सूर्य्यलोकं प्राप्नोति॥ २३१॥

यानशय्याप्रदोभार्य्यामैश्वर्य्यमभयप्रदः। धान्यदः शाश्वतं सौख्यं ब्रह्मदोब्रह्मसार्ष्टिताम्॥ २३२॥

यानशय्येति। रथादियानस्य शय्यायाश्च दाता भार्य्यां अभयप्रदः प्राणिनामहिंसकः प्रभुत्वं। धान्यदो ब्रीहियवमाषमुद्गादिसस्यानान्दाता चिरस्थायिसुखित्वं। ब्रह्म वेदस्तत्प्रदो वेदस्याध्यापकोव्याख्याता च ब्रह्मणः सार्ष्टितां समानगतितां तत्तुल्यतां प्राप्नोति॥ २३२॥

सर्वेषामेव दानानाम्ब्रह्मदानं विशिष्यते। वार्य्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम्॥ २३३॥

सर्वेषामिति। उदकान्नधेनुभूमिवस्त्रतिलसुवर्णघृतादीनां सर्वेषामेव यानि दानानि तेषाम्मध्यात् वेददानं विशिष्यते प्रकृष्टफलदम्भवति॥ २३३॥

येन येन तु भावेन यद्यद्दानं प्रयच्छति। तत्त्तेनैव भावेन प्राप्नोति प्रतिपूजितः॥२३४॥

येनयेनेति। अवधारणे तुशब्दः। येनयेनैव भावेनाभिप्रायेण फलाभिसन्धिकः स्वर्गो मे स्यादिति मुमुक्षुर्मोक्षाभिप्रायेण निष्कामो यद्यद्दानन्ददाति तेनैव भावेनोपलक्षितस्तत्तद्दानफलदारेण जन्मान्तरे पूजितः सम्प्राप्नोति॥२३४॥

योऽर्च्चितम्प्रतिगृह्णाति ददात्यर्चितमेव च। तावुभौ गच्छतः स्वर्गन्नरकन्तु विपर्य्यये॥२३५॥

योर्चितमिति। योऽर्च्चापूर्वकमेव दाता ददाति यश्च प्रतिग्रहीताऽर्चापूर्वकमेव दत्तम्प्रतिगृह्णाति तावुभौ स्वर्गं गच्छतोऽनर्चितदानप्रतिग्रहणे नरकं। पुरुषार्थे तु प्रतिग्रहेऽनर्चितमेव मया ग्रहीतव्यं नान्यथेति नियमात्फललाभोन विरुद्धः॥२३५॥

न विस्मयेत तपसा वदेदिष्ट्वा च नानृतम्। नार्त्तोऽप्यपवदेद्विप्रान्नदत्त्वा परिकीर्त्तयेत्॥२३६॥

नविस्मयेतेति। चान्द्रायणादितपसा कृतेन कथं मयेदन्दुष्करमनुष्ठितमिति विस्मयं न कुर्य्यात्। यागञ्च कृत्वा नासत्यं

वदेत् कृतेपि पुरुषार्थतयाऽनृतवदननिषेधे क्रत्वर्थोयमनृतनिषेधः। ब्राह्मणैः पीडितोपि न तान्निन्दयेत्। गवादिकञ्च दत्वा मयेदन्दत्तमिति परस्य न कथयेत्॥ २३६॥

यज्ञोऽनृतेन चरति तपः चरति विस्मयात्। आयुर्विप्रापवादेन दानञ्च परिकीर्त्तनात्॥ २३७॥

यज्ञइति। अनृतेन हेतुना यज्ञः चरति सत्येनैव सत्फलं साधयति एवन्तपसि दाने च योज्यम्। विप्रनिन्दया चायुः चीयते॥ २३७॥

धर्म्मं शनैः सञ्चिनुयाद्वल्मीकमिव पुत्तिकाः। परलोकसहायार्थं सर्व्वभूतान्यपीडयन्॥ २३८॥

धर्म्ममिति। सर्व्वप्राणिनाम्पीडां परिहरन् परलोकसहायार्थं यथाशक्ति शनैःशनैर्द्धर्म्ममनुतिष्ठेत्। यथा पुत्तिकाः पिपीलिकाप्रभेदाः शनैःशनैर्महान्तं मृत्तिकाकूटं सञ्चिन्वन्ति॥ २३८॥

नामुत्र हि सहायार्थं पिता माता च तिष्ठतः। न पुत्रदारन्न ज्ञातिर्द्धर्म्मस्तिष्ठति केवलः॥ २३९॥

नामुत्रेति। यस्मात्परलोके सहायकार्य्यसिद्ध्यर्थं न पितृमातृपुत्रपत्नीज्ञातयस्तिष्ठन्ति किन्तु धर्म्म एवैकोद्वितीयभावेना

पकारार्थमवतिष्ठते तस्मात्पुत्रादिभ्योपि महोपकारकन्धर्म मनुतिष्ठेत् ॥ २३९ ॥

एकः प्रजायते जन्तुरेकएव प्रलीयते। एकोऽनु भुङ्क्ते सुकृतमेकएव च दुष्कृतम् ॥ २४० ॥

एकइति। एकएव प्राण्युत्पद्यते न बान्धवैः सहितः एक एवच म्रियते सुकृतफलमपि स्वर्गादिकं दुरितफलञ्च नर कादिकमेकएव भुङ्क्ते न मात्रादिभिः सह तस्मान्मात्राद्यपेक्ष यापि धर्मन्न त्यजेत् ॥ २४० ॥

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ। विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ २४१ ॥

मृतमिति। मृतं शरीरमन:प्राणादित्यक्तं काष्ठलोष्टवद चेतनम्भूमौ त्यक्त्वा पराङ्मुखाबान्धवायान्ति न मृतं जीवमनु यान्तिधर्मस्तु तमनुगच्छति ॥ २४१ ॥

तस्माद्धर्मं सहायार्थं नित्यं सञ्चिनुयाच्छनैः। धर्मे णहि सहायेन तमस्तरति दुस्तरम् ॥ २४२ ॥

तस्मादिति। यस्माद्धर्मेण सहायेन दुस्तरन्तमोनरकादिदुःखं तरति तस्माद्धर्मं सहायंभावेन सततं शनैरनुतिष्ठेत् ॥ २४२ ॥

धर्मप्रधानम्पुरुषन्तपसा हतकिल्बिषम्। परलोकं नयत्याशु भास्वन्तं खशरीरिणम् ॥ २४३ ॥

धर्मप्रधानमिति। धर्मपरम्पुरुषन्दैवादुपजाते पापे प्राजापत्यादितपोरूपप्रायश्चित्तेन हतपापन्दीप्तिमन्तमक्षतोधर्म एव शीघ्रं ब्रह्मस्वर्गादिरूपम्परलोकन्नयति। खं ब्रह्मेत्याद्युपनिषत्सु खशब्दस्य ब्रह्मणि प्रयोगः खशरीरिणं ब्रह्मस्वरूपमित्यर्थः यद्यपि लिङ्गशरीरावच्छिन्नोजीवएव गच्छति तथापि ब्रह्मांशत्वाद्ब्रह्मस्वरूपत्वमुपपन्नं धर्मएव चेत्परं लोकं नयति ततोधर्ममनुतिष्ठेत्। नहि वेदाः स्वधीतास्तु शास्त्राणि विविधानि च। तत्र गच्छन्ति यत्रास्य धर्मएकोनुगच्छति ॥ २४३ ॥

उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत्सह। निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥ २४४ ॥

उत्तमैरिति। कुलमुत्कर्षं नेतुमिच्छन् विद्याचारजन्मादिभिरुत्कृष्टैः सह सर्व्वदा कन्यादानादिसम्बन्धानाचरेत्। अपकृष्टांस्तु सम्बन्धांस्त्यजेत्। उत्तमविधानादेवाधमपरित्यागे सिद्धे यत्पुनरधमांस्त्यजेदित्यभिधानं तदुत्तमाभावे स्वतुल्याभ्यनुज्ञानार्थम् ॥ २४४ ॥

उत्तमानुत्तमान् गच्छन् हीनान् हीनांश्च वर्जयन्।
ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम् ॥ २४५ ॥

उत्तमानिति। उत्तमान् गच्छन् तैः सह सम्बन्धं कुर्व्वन् ब्राह्मणः श्रेष्ठतां गच्छति प्रत्यवायेन विपरीताचारेण हीनैः सह सम्बन्धे जातेरपकर्षतया शूद्रतुल्यतामेति ॥ २४५ ॥

दृढकारी मृदुर्दान्तः क्रूराचारैरसंवसन्। अहिंस्रो दमदानाभ्यां जयेत् स्वर्गं तथाव्रतः ॥ २४६ ॥

दृढकारीति। प्रारब्धसम्पादयिता दृढकारी। मृदुरनिष्ठुरः। दमस्य पृथगुपादानाद्दान्त इति शीतातपादिद्वन्द्वसहिष्णुर्गृहीतव्यः।' क्रूराचारैः पुरुषैः संसर्गम्परिहरन् परहिंसानिवृत्तः। तथाव्रतएव नियमदमेन्द्रियसंयमाख्येन दानेन च स्वर्गम्प्राप्नोति ॥ २४६ ॥

एधोदकं मूलफलमन्नमभ्युद्यतञ्च यत्। सर्व्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् ॥ २४७ ॥

एधोदकमिति। काष्ठजलफलमूलमधूनि अन्नञ्चाभ्युद्यतमयाचितोपनीतं। अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विष इति याज्ञवल्क्यवचनात्कुलटादिवर्जं सर्व्वतः शूद्रादिभ्योऽपि प्रतिगृह्णीयात् आममेवाददीताऽस्मादित्युक्तत्वात् आमान्नमेव

शूद्रात्प्रति याच्यं अभयदानाशाप्रीतिहेतुत्वाद्दुर्भिक्षातुर्य्यं चण्डालादिभ्योपि स्वीकुर्य्यात्॥ २४७॥

आहृताभ्युद्यतां भिक्षां पुरस्तादप्रचोदिताम्।
मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्म्मणः॥ २४८॥

आहृताभ्युद्यतामिति। आहृतां सम्प्रदानदेशमानीताम्। अभ्युद्यतामाभिमुख्येन स्थापिताम्। अप्रचोदितामतिग्रहीचा स्वयमन्यमुखेन वा पूर्व्वमयाचितां दाचा च तुभ्यमिदन्ददानीति पूर्व्वमकथितां हिरण्यादिभिक्षां नतु सिद्धान्नरूपां अन्नमभ्युद्यतञ्चेत्युक्तत्वात्पापकारिणोपि पतितादिवर्जं ग्राह्यां विरिञ्चिरमन्यत॥ २४८॥

नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च। नच
हव्यं वहत्यग्निर्य्यस्तामभ्यवमन्यते॥ २४९॥

नाश्नन्तीति। तेनोपकल्पितं श्राद्धेषु कव्यं पञ्चदशवर्षाणि पितरो न भुञ्जते। नच यज्ञेषु तेन दत्तम्पुरोडाशादिहव्यमग्निर्व्वहति देवान् प्रापयति यस्तां भिक्षां न स्वीकरोति॥२४९॥

शय्यां गृहान्कुशान्गन्धानपः पुष्पं मणीन्दधि।
धानामत्स्यान्पयोमांसं शाकञ्चैव न निर्णुदेत्॥२५०॥

शय्यामिति। गन्धान् गन्धवन्ति कर्पूरादीनि धानाभृष्टयवतण्डुलान् पयःक्षीरम्पूर्व्वमाहरणोपायनिबन्धेन गवादीना

मप्रत्याख्यानमुक्तं शय्यादीनि त्वयाचितान्याहृतान्यपि दाता स्वगृहस्थितानि अयाचितोपकल्पितानि न प्रत्याचक्षीत ॥ २५० ॥

गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवतातिथीन्।
सर्व्वतः प्रतिगृह्णीयान्नतु तृप्येत्स्वयन्ततः ॥ २५१ ॥

गुरूनिति। मातापित्रादीन् गुरून् भृत्यांश्च भार्य्यादीन् क्षुधावसन्नान् उद्धर्त्तुमिच्छन् पतितादिवर्जं सर्व्वतः शूद्रादेरसाधुभ्यश्च प्रतिगृह्णीयात। नतु तेन धनेन स्वयं वर्त्तेत ॥ २५१ ॥

गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन्। आत्मनोवृत्तिमन्विच्छन् गृह्णीयात्साधुतः सदा ॥ २५२ ॥

गुरुष्विति। मातापित्रादिषु मृतेषु तैर्वा जीवद्भिरपि स्वयोगावस्थितैर्विना गृहान्तरे वसन् आत्मनोवृत्तिमन्विच्छन् सर्व्वदा साधुभ्योगृह्णीयादेव ॥ २५२ ॥

आर्द्धिकः कुलमित्रञ्च गोपालोदासनापितौ।
एते शूद्रेषु भोज्यान्नायश्चात्मानं निवेदयेत् ॥ २५३ ॥

आर्द्धिकः कर्षकः सम्बन्धिशब्दात् योयस्य कृषिं करोति सतस्य भोज्यान्नः एवं स्वकुलस्य मित्रं योयस्य गोपालोयोयस्य

दासोयोयस्य नापितः कर्म्म करोति योयस्मिन्नात्मानं निवेद यति दुर्गतिरहन्त्वदीयसेवां कुर्व्वन् त्वत्समीपे वसामीति शूद्र स्तस्यभोज्यान्नः ॥ २५३ ॥

यादृशोस्य भवेदात्मा यादृशश्च चिकीर्षितम् ।
यथा चोपचरेदेनन्तथात्मानं निवेदयेत्॥ २५४॥

यथात्मनिवेदनं शूद्रेण कर्त्तव्यन्तदाह। यादृशइति। अस्य शूद्रस्य कुलशीलादिभिर्यादृशश्चात्मा स्वरूपं यच्चास्य कर्म्म कर्त्तुरीप्सितं यथाचानेन सेवा कर्त्तव्या तेन प्रकारेणा त्मानं कथयेत् ॥ २५४ ॥

योन्यथा सन्तमात्मानमन्यथा सत्सु भाषते। सपाप कृत्तमोलोके स्तेन आत्मापहारकः॥ २५५ ॥

योन्यथेति। यइति सामान्यनिर्द्देशात्प्रकृतशूद्रादन्योपि यः कश्चित्कुलादिभिरन्यथाभूतमात्मानमन्यथा साधुषु कथ यति स लोकेऽतिशयेन पापकारी चौरः यस्मादात्मापहा रकः। अन्यः स्तेनोद्रव्यान्तरमपहरति अयन्तु सर्व्वप्रधानमा त्मानमेवापहरति ॥ २५५ ॥

वाच्यर्था नियताः सर्व्वे वाङ्मूला वाग्विनिःसृताः।
तान्तु यः स्तेनयेद्वाचं स सर्व्वस्तेयकृन्नरः॥ २५६ ॥

वाच्यर्था इति। सर्व्वेऽर्थाः शब्देषु नियतावाच्यत्वेन नियताः वाङ्मूलाश्च शब्दास्तेषाम्प्रतिपत्तौ शब्देभ्य एव प्रतीयन्ते प्रतीतिद्वारेण शब्दमूलत्वं शब्देभ्य एवावगम्य चानुष्ठीयन्ते इति वाग्विनिर्गता इत्युच्यन्ते। अत एव वेदशब्देभ्य एवादाविति ब्रह्मणोपि सृष्टिर्वेदशब्दमूलैवोक्ता। अतो यस्तां वाचं स्तेनयेत्स्वार्थव्यभिचारिणीं वाचयति स नरः सर्व्वार्थस्तेयकृद्भवति॥ २५६॥

महर्षिपितृदेवानां गत्वानृण्यं यथाविधि। पुत्रे सर्व्वं समासज्य वसेन्माध्यस्थमाश्रितः॥ २५७॥

महर्षीति। गृहस्थस्यैव संन्यासप्रकारोयमुच्यते। महर्षीणां स्वाध्यायेन पितृणाम्पुत्रोत्पादनेन देवतानां यज्ञैर्यथाशास्त्रमानृण्यं गत्वा योग्यपुत्रे सर्व्वं कुटुम्बचिन्ताभारमारोप्य माध्यस्थमाश्रितः पुत्रदारधनादौ त्यक्तममत्वो ब्रह्मबुद्ध्या सर्व्वत्र समदर्शनो गृह एव वसेत्॥ २५७॥

एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः।
एकाकी चिन्तयानो हि परं श्रेयोधिगच्छति॥२५८॥

एकाकीति। काम्यकर्म्मणाम्धनार्जनस्य च कृतसंन्यासः षष्ठाध्याये वक्ष्यमाणः पुत्रोपकल्पितवृत्तिरेकाकी निर्जनदेशे आत्म

हितं जीवस्य ब्रह्मभावं वेदान्तोक्तं सर्व्वदा ध्यायेत् यस्मात्तद्ध्यायन् ब्रह्मसाक्षात्कारेण परं श्रेयोमोक्षलक्षणमाप्नोति ॥२५८॥

एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती। स्नातकव्रतकल्पस्य सत्त्ववृद्धिकरः शुभः ॥२५९॥

एषेति। अयमध्यायार्थोपसंहारः। एषा ऋतादिवृत्तिर्गृहस्थस्य ब्राह्मणस्योक्ता शाश्वती नित्या आपदि त्वनित्या वक्ष्यते। स्नातकव्रतविधिस्तु सत्त्वगुणस्य वृद्धिकरः प्रशस्त उक्तः ॥२५९॥

अनेन विप्रोवृत्तेन वर्त्तयन् वेदशास्त्रवित्। व्यपेतकल्मषोनित्यम्ब्रह्मलोके महीयते ॥२६०॥

इतिमानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायाञ्चतुर्थोऽध्यायः ॥

अनेनेति। सर्व्वस्योक्तस्य फलकथनमिदं अनेन शास्त्रोक्ताचारेण वेदविद्ब्राह्मणोवर्त्तमानोनित्यकर्म्मानुष्ठानात्क्षीणपापः सन् ब्रह्मज्ञानप्रकर्षेण ब्रह्मैव लोकः तस्मिन्लीनोमहिमानं सर्वोत्कर्षं प्राप्नोति ॥२६०॥

इतिश्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां चतुर्थोऽध्यायः ॥

## ॥ ५ अध्यायः ॥

---

श्रुत्वैतानृषयो धर्मान् स्नातकस्य यथोदितान्।
इदमूचुर्महात्मानमनलप्रभवम्भृगुम् ॥ १ ॥

श्रुत्वैतानिति। ऋषयः स्नातकस्यैतान् यथोदितधर्मान् श्रुत्वा महात्मानम्परमार्थपरम्भृगुमिदं वचनमब्रुवन्। यद्यपि प्रथमाध्याये दक्षप्रजापतिमध्ये भृगुन्नारदमेवचेति भृगुस्सृष्टि रपि मनुत एवोक्ता तथापि कल्पभेदेनाग्निप्रभवत्वमुच्यते। तथाच श्रुतिः। तस्य यद्रेतसः प्रथमन्देदीप्यते तदसावादित्यो ऽभवत् यद्द्वितीयमासीद्भृगुरिति। अतएव ब्रह्माद्रेतसउत्पन्न त्वाद्भृगुः ॥ १ ॥

एवं यथोक्तं विप्राणां स्वधर्ममनुतिष्ठताम्। कथ
मृत्युः प्रभवति वेदशास्त्रविदाम्प्रभो ॥ २ ॥

एवमिति। एवं यथोक्तं स्वधर्मं कुर्व्वतां ब्राह्मणानां श्रुतिशास्त्र ज्ञानां वेदोदितायुषः पूर्व्वङ्कथं मृत्युः प्रभवति आयुरल्पत्व

हेतोरधर्माचरणस्याभावात्। सकलसंशयोच्छेदनसमर्थत्वा त्प्रभो इति सम्बोधनम्॥ २॥

सतानुवाच धर्मात्मा महर्षीन् मानवोभृगुः।
श्रूयतां येन दोषेण मृत्युर्विप्रान् जिघांसति॥ ३॥

सतानिति। समनोः पुत्रोभृगुर्धर्मस्वभावोयेन दोषेणाल्प काले विप्रान् हन्तुमिच्छति मृत्युः स दोषः श्रूयतां इत्येवं तान्महर्षीन् जगाद॥ ३॥

अनभ्यासेन वेदानामाचारस्य च वर्जनात्।
आलस्यादन्नदोषाच्च मृत्युर्व्विप्रान् जिघांसति॥ ४॥

अनभ्यासेति। वेदानामनभ्यासात्स्वीयाचारपरित्यागात् सामर्थ्ये सत्यवश्यकर्त्तव्यकरणानुत्साहलक्षणादालस्यात्। अद नीयदोषाच्च मृत्युर्विप्रान् हन्तुमिच्छति। एतेषामधर्मात्वाद नद्वारेणायुःक्षयहेतुत्वात्॥ ४॥

लशुनं गृञ्जनञ्चैव पलाण्डुङ्कवकानि च। अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च ॥ ५ ॥

वेदानभ्यासादेरकालादनुक्रमश्चदोषमाह लशुनमिति। लशुनं गृञ्जनपलाण्ड्वाख्यानि त्रीणि स्थूलकन्दशाकानि कवकञ्चाकममेध्यप्रभवानि विष्ठादिजातानि तण्डुलीयादीनि विड्जातानीति याज्ञवल्क्यवचनात् एतानि द्विजातीनामभक्ष्याणि द्विजातिग्रहणं शूद्रपर्युदासार्थम् ॥ ५ ॥

लोहितान् वृक्षनिर्य्यासान् व्रश्चनप्रभवांस्तथा। शेलुङ्गव्यञ्च पेयूषम्प्रयत्नेन विवर्जयेत् ॥ ६ ॥

लोहितानिति। लोहितवर्णान् वृक्षनिर्य्यासान् वृक्षान्निर्गतरसान् कठिनतां यातान् व्रश्चनं छेदनं तत्प्रभवान् लोहितानपि। तथाच तैत्तिरीयश्रुतिः। अथो खलु य एव लोहितो यो वा व्रश्चनान्निर्येषति तस्य नाश्यकाममन्यस्येति। शेलुश्च बहुवारकफलं गोभवं पेयूषन्नवप्रसूताया गोः क्षीरमग्निसंयोगात्कठिनम्भवति एतान् यत्नतस्त्यजेत्। अनिर्दशाया गोःक्षीरमित्यनेनैव पेयूषस्यापि निषेधसिद्धावधिकदोषत्वात्प्रायश्चित्तगौरवज्ञापनार्थं पृथङ्निर्देशः। अतएव यत्नतइत्युक्तम् ॥ ६ ॥

वृथाकृसरसंयावम्पायसापूपमेव च। अनुपाकृतमांसानि देवान्नानि हवींषि च॥७॥

वृथाकृसरेति। देवताद्यनुद्देशेन आत्मार्थं यत्पच्यते तद्वृथा कृसरस्तिलेन सह सिद्ध ओदनः। तथाच छन्दोगपरिशिष्टम्। तिलतण्डुलसम्पक्वः कृसरः सोभिधीयते। संयावः घृतक्षीरगुडगोधूमचूर्णसिद्धस्तत्करिकेति प्रसिद्धः। क्षीरतण्डुलमिश्रः पायसः अपूपःपिष्टकः एतान् वृथापक्वान्विवर्जयेत्। पशुयागादौ मन्त्रवत्तेन पशोःस्पर्शनमुपाकरणन्तद्रहितः पशुरनुपाकृतः तस्य मांसानि देवान्नानि नैवेद्यार्थमन्नानि प्राङ्निवेदनात् हवींषि च पुरोडाशादीनि होमात्प्राग्वर्जयेत्। अनुपाकृतमांसानीत्येतद्विशेषनिषेधदर्शनात्। अनर्चितं वृथा मांसमिति सामान्यनिषेधो गोबलीवर्द्दन्यायेनानुपाकृतमांसेतर श्राद्धाद्यनुद्देश्यमांसभक्षणे पर्यवस्यति॥ ७॥

अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफन्तथा। आविकं सन्धिनीक्षीरं विवत्सायाश्च गोःपयः॥ ८॥

अनिर्दशायाइति। प्रसूताया अनिर्दशाया गोर्दुग्धं गोरिति पेयक्षीरपशूपलक्षणार्थं तेनाजामहिष्योरपि दशाहमध्ये प्रतिषेधः

तथाच यमः। अनिर्दशाहं गोः क्षीरमाजं माहिषमेवच। तथोष्ट्रभवं अश्वाद्येकखुरसम्बन्धि मेषभवं सन्धिनी या ऋतुमती वृषमिच्छति तस्याःक्षीरम्। तथाच हारीतः। सन्धिनी वृषस्यन्ती तस्याः पयोन पिवेत् ऋतुमत्तद्भवति। विवत्सायामृतवत्सायाः असन्निहितवत्सायाश्च क्षीरं वर्ज्जयेत्। धेन्वधिकरणन्यायेन वत्सग्रहणादेव गवि लब्धायाम्पुनर्गोग्रहणं गोरेव वत्वजामहिष्योरिति ज्ञापनार्थम् ॥ ८ ॥

आरण्यानाञ्च सर्व्वेषां मृगाणां माहिषं विना।
स्त्रीक्षीरञ्चैव वर्ज्यानि सर्व्वशुक्तानि चैव हि ॥ ९ ॥

आरण्यानाञ्चेति। मृगशब्दोऽत्र महिषपर्य्युदासात्पशुमात्रपरः। माहिषं क्षीरं वर्ज्जयित्वा सर्व्वेषामारण्यप्रभवपशूनां हस्त्यादीनां क्षीरं स्त्रीक्षीरञ्च सर्व्वाणि शुक्तानि वर्ज्जनीयानि। स्वभावतोमधुरादिरसानि यानि कालवशेन उदकादिना चाम्लीभवन्ति तानि शुक्तशब्दवाच्यानि। शुक्तम्पर्य्युषितञ्चैवेति चतुर्थं कृतेपि शुक्तप्रतिषेधे दध्यादिप्रतिप्रसवार्थं पुनरिहोच्यते

दधिभक्ष्यञ्च शुक्तेषु सर्व्वञ्च दधिसम्भवम्।
यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः॥ १०॥

दधिभक्ष्यञ्चेति। शुक्तेषु मध्ये दधि भक्ष्यं दधिसम्भवञ्च सर्व्वं तक्रादि यानि तु पुष्पमूलफलैरुदकेन सन्धीयन्ते तानिच भक्षणीयानि। शुभैरिति विशेषणोपादानात् मोहादिविकार कारिभिः कृतसन्धानस्य प्रतिषेधः। तथाच वृहस्पतिः। कन्दमूलफलैः पुष्पैः शस्तैर्युक्तन्तु वस्तु यत्। अविकारि भवेद्भक्ष्यमभक्ष्यं तद्विकारकृत्॥ १०॥

क्रव्यादान् शकुनीन्सर्वांस्तथा ग्रामनिवासिनः।
अनिर्द्दिष्टांश्चैकशफांष्टिट्टिभञ्च विवर्जयेत्॥ ११॥

क्रव्यादानिति। आमं मांसं ये भक्षयन्ति ते क्रव्यादास्तान् सर्व्वान् गृध्रादीन् पक्षिणोवर्जयेत्। तथाग्रामनिवासिनश्च पक्षिणः पारावतादीन्। तथाश्रुतौ केचिदेकशफाभक्ष्यत्वेन निर्द्दिष्टाः। तथाचोष्ट्रं वाडवमालभेत तस्य च मांसमश्नीयादिति। केचिच्चानिर्द्दिष्टारासभादयः तेषां मांसं वर्ज्जयेत्। येपि स्मृ। त्वेन विहितास्तेषामपि यज्ञएव मांसभक्षणं न सर्व्वदा टिट्टिभाख्यञ्च पक्षिणं वर्ज्जयेत्॥ ११॥

कलविङ्कं प्लवं हंसञ्चक्राङ्गं ग्रामकुक्कुटम्। सारसं रज्जुवालञ्च दात्यूहं शुकशारिके॥ १२॥

कलविङ्कमिति। कलविङ्कं चटकन्तस्य ग्रामारण्योभयवासित्वात् न ग्रामवासिनएव निषेधः इत्यारण्यस्याप्यभक्ष्यत्वार्थं जातिशब्देन निषेधः। प्लवाख्यपक्षिणं तथा हंसचक्रवाकग्रामकुक्कुटसारसरज्जुवालदात्यूहशुकसारिकाख्यान् पक्षिणो वर्जयेत्। वक्ष्यमाणजालपादनिषेधेनैव हंसचक्रवाकयोरपि निषेधसिद्धौ पृथङ्निषेधोऽन्येषामापदि जालपादानां विकल्पार्थः। स च व्यवस्थितोविज्ञेयः आपदि भक्ष्यान त्वनापदि इच्छाविकल्पस्य रागतएवप्राप्तेः। ग्रामकुक्कुटे तु ग्रामग्रहणमारण्यकुक्कुटाभ्यनुज्ञानार्थं नत्वेतद्व्यतिरिक्तग्रामवासिविकल्पार्थं स्वपदानुगतप्रयोजनसंभवे सति वाक्यान्तरगतविशेषावधारणपरत्वस्यान्याय्यत्वात्॥ १२॥

प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान्। निमज्जतश्च मत्स्यादान् सौनं वल्लूरमेवच॥ १३॥

प्रतुदानिति। प्रतुद्य चञ्च्वा ये भक्षयन्ति तान् दार्व्वाघाटादीन् जालपादानिति जालाकारपादान् शरारिप्रभृतीन् कोयष्याख्यपक्षिणं नखविष्किरान्नखैर्विकीर्य्य ये भक्षयन्ति तानभ्य

नुज्ञातारण्यकुक्कुटादिव्यतिरिक्तान् श्येनादीन् तथा निमज्ज्य ये मत्स्यान् खादन्ति तान्मद्गुप्रभृतीन् सूना मारणस्थानं तत्र स्थितं यन्मांसमभक्ष्यमपि वल्लूरं शुष्कमांसं एतानि वर्ज्जयेत् ॥ १३ ॥

बकञ्चैव बलाकाञ्च काकोलं खञ्जरीटकम्। मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्व्वशः ॥ १४ ॥

बकञ्चैवेति। बकबलाकाद्रोणकाकखञ्जनान् तथा मत्स्यादान् पचिव्यतिरिक्तानपि नक्रादीन् विड्वराहांश्च विड्इति विशेषणादारण्यशूकराभ्यनुज्ञानार्थं मत्स्यांश्च सर्वान् वर्ज्जयेत् ॥ १४ ॥

योयस्य मांसमश्नाति स तन्मांसाद उच्यते। मत्स्यादः सर्व्वमांसादस्तस्मान्मत्स्यान् विवर्ज्जयेत् ॥ १५ ॥

मत्स्यभक्षणनिन्दामाह। योयस्येति। योयदीयं मांसं खादति स तन्मांसाद एव परंव्यपदिश्यते यथा मार्जारोमूषिकादः। मत्स्यादः पुनःसर्वमांसभक्षकत्वेन व्यपदेष्टुं योग्यः तस्मान्मत्स्यान्न खादेत ॥ १५ ॥

पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः।
राजीवान्सिंहतुण्डांश्च सशल्कांश्चैव सर्व्वशः॥ १६ ॥

इदानीं भक्ष्यमत्स्यानाह। पाठीनरोहिताविति। पाठीन रोहितौ मत्स्यभेदौ भक्षणीयौ हव्यकव्ययोर्नियुक्ताविति समस्त वक्ष्यमाणभक्षणनिषिद्धोपलक्षणार्थं तेन प्राणात्ययादावदोषः तथा राजीवाख्यान्सिंहतुण्डांश्च सशल्कांश्च सर्वान्वक्ष्यमाणलक्षणा पेतानद्यात्। मेधातिथिगोविन्दराजौ तु। पाठीनरोहितौ दैव पैत्रादिकर्म्मणि नियुक्तावेवादनीयौ नत्वन्यदा राजीवसिंहतुण्ड सशल्कमत्स्यास्तु हव्यकव्याभ्यामन्यत्रापि भक्षणीया इत्याच क्षतुः। न तन्मनोहरम्। पाठीनरोहितौ श्राद्धे नियुक्तौ श्राद्ध भोक्तैव भक्षणीयौ नतु श्राद्धकर्त्तापि राजीवादयो हव्यकव्या भ्यामन्यत्रापि भक्ष्या इत्यस्याप्रमाणत्वात्। मुन्यन्तरेषु रोहि तपाठीनराजीवादीनान्तुल्यत्वेनाभिधानात्। तथाच शङ्खः। राजीवाः सिंहतुण्डाश्च सशल्काश्च तथैव च। पाठीनरोहितौ चापि भक्ष्यामत्स्येषु कीर्त्तिताः। याज्ञवल्क्यः। भक्ष्याः पञ्च नखाः स्वावित् गोधाः कच्छपशल्यकाः। शशश्च मत्स्येष्वपि तु सिंहतुण्डकरोहिताः। तथापाठीनराजीवसशल्काश्च द्विजा तिभिः। हारीतः। सशल्कान्मत्स्यान् न्यायोपपन्नान् भक्षयेत्। एवञ्च। भोक्तैवाद्यौ न कर्त्तापि श्राद्धे पाठीनरोहितौ। राजी वाद्यास्तथा नेति व्याख्या न मुनिसम्मता॥ १६ ॥

न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान्। भक्ष्ये
ष्वपि समुद्दिष्टान्सर्वान्पञ्चनखांस्तथा॥१७॥

नभक्षयेदिति। ये एकाकिनः प्रायेण चरन्ति सर्पादयस्ता
नेकचरान् तथा ये अभियुक्तैरपि नामजातिभेदेनावधार्य्य
विभागतश्च मृगपक्षिणोन ज्ञायन्ते तान्। भक्ष्येष्वपि समुद्दिष्टा
निति सामान्यविशेषनिषेधाभावेन भक्ष्यकुक्षिनिक्षिप्तान् भक्ष्य
त्वेन समुद्दिष्टांश्च तथासर्व्वान् पञ्चनखान्वानरादीन् न
भक्षयेत्॥१७॥

श्वाविधं शल्यकं गोधां खड्गकूर्म्मशशांस्तथा।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः॥१८॥

अत्र प्रतिप्रसवमाह। श्वाविधमिति। श्वाविधं सेधाख्यप्राणि
भेदं शल्यकन्तत्सदृशं स्थूललोमानम्। तथागोधागण्डक
कच्छपशशान् पञ्चनखेषु भक्ष्यान्मन्वादयः प्राहुः। तथा उष्ट्र
वर्जितान् एकदन्तपंक्त्युपेतान्॥१८॥

छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम्।
पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्विजः॥१९॥

छत्राकमिति। छत्राकमित्युक्तरलशुनादीनां अन्यतमम्
बुद्धिपूर्व्वकम् गुरुप्रायश्चित्तोपदेशात् अभ्यासतोभक्षयित्वा

द्विजातिः पतति ततश्च पतितप्रायश्चित्तं कुर्य्यात्। गर्हितानाद्ययोर्जग्धिः सुरापानसमानिषड़िति ॥ १९ ॥

अमत्यैतानि षड्जग्ध्वा कृच्छ्रं सान्तपनञ्चरेत्। यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥ २० ॥

अमत्येति। एतानि छत्राकादीनि षड्बुद्धिपूर्व्वकमेव भक्षयित्वाऽभिधेयभक्षणस्य निमित्तत्वेन साहित्यस्याविवक्षितत्वात्। एकादशाध्यायवक्ष्यमाणस्वरूपं सप्ताहसाध्यं सान्तपनं यतिचान्द्रायणं वा चरेत् एतद्व्यतिरिक्तेषु लोहितवृक्षनिर्यासादिषु प्रत्येकभक्षणादहोरात्रोपवासं कुर्य्यात् छत्राकादीनाञ्च प्रायश्चित्तापकर्षोवर्जनादरार्थः। शेषेषूपवसेदहरिति लाघवार्थन्नहि क्रियमाणे लोहितवृक्षनिर्यासग्रहणमपि कर्त्तव्यं स्यात्॥२०॥

संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः। अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः ॥ २१ ॥

संवत्सरस्येति। द्विजोत्तमपदं द्विजातिपरन्त्रयाणां प्रकृतत्वात् एतदुक्तं द्विजातीनामित्युपसंहाराच्च। द्विजातिः संवत्सरमध्ये एकमपि कृच्छ्रमशमामनानात् प्राजापत्याख्यमज्ञातभक्षण

दोषोपशमनार्थमनुतिष्ठेत्। ज्ञातस्य पुनः अभक्ष्यभक्षण दोषस्य विशेषतोऽयत्र यद्विहितं तदेव प्रायश्चित्तं कुर्य्यात्। त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्। अदृष्टमद्भि र्निर्णिक्तं यच्च वाचा प्रशस्यत इति तद्द्रव्यशुद्धिप्रकरणपठित प्रायश्चित्तव्यतिरिक्तद्रव्यशुद्धिविषयेऽवतिष्ठते ॥ २१ ॥

यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः। भृत्या नाञ्चैव वृत्त्यर्थमगस्त्यो ह्याचरत्पुरा ॥ २२ ॥

इदानीमभक्षणप्रसङ्गेन यागाद्यर्थं हिंसामप्यनुजानाति यज्ञार्थमिति। ब्राह्मणादिभिर्यागार्थं प्रशस्ताः शास्त्रविहिता मृगपक्षिणो वध्याः भृत्यानाञ्चावश्यभरणीयानां वृद्धमाता पित्रादीनां सम्वर्द्धनार्थं यस्मादगस्त्यो मुनिः पूर्व्वन्तथा कृतवान् परकृतिरूपोयमनुवादः ॥ २२ ॥

बभूवुर्हि पुरोडाशा भक्ष्याणां मृगपक्षिणाम्। पुराणेष्वपि यज्ञेषु ब्रह्मक्षत्रसवेषु च ॥ २३ ॥

बभूवुरिति। यस्मात्पुरातनेष्वपि ऋषिकर्त्तृकयज्ञेषु च भक्ष्याणां मृगपक्षिणां मांसेन पुरोडाशा अभवन्। तस्माद्यज्ञार्थं मेधनातनैरपि मृगपक्षिणो वध्याः ॥ २३ ॥

तत्पर्य्युषितमप्याद्यं हविःशेषञ्च यद्भवेत् ॥ २४ ॥

इदानीम्पर्य्युषितप्रतिप्रसवार्थमाह। यत्किञ्चिदिति। यत्किञ्चित्खरविशदं अभ्यवहार्य्यं मोदकादि भोज्यम्पायसादि अगर्हितं उपघातान्तररहितं तत्पर्य्युषितं रात्र्यन्तरितमपि घृततैलदध्यादिसंयुक्तं कृत्वा भक्षणीयम्। ननु प्रागेव यत्स्नेहसंयुक्तं तत्पर्युषितमभक्षणीयमिति व्याख्येयं तथा सति हविःशेषस्य स्नेहसंयोगावश्यम्भावात् यत्किञ्चित्स्नेहसंयुक्तमित्यनेनैव भक्षणे सिद्धे हविःशेषञ्च यद्भवेदित्यनर्थकं स्यात्। स्मृत्यन्तरेपि भक्षणकालएवाभिघारणमुपदिश्यते। तथाच यमः। मधूरमाषसंयुक्तन्तथापर्य्युषितञ्च यत्। तत्तु प्रक्षालितं कृत्वा भुञ्जीतह्यभिघारितम्। हविःशेषन्तु चरुपुरोडाशादि पर्य्युषितमपि भोजनकाले स्नेहसंयोगशून्यमेव भक्षणीयं पृथगुपदेशात् ॥ २४ ॥

चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः। यव गोधूमजं सर्व्वम्पयसश्चैव विक्रिया ॥ २५ ॥

चिरस्थितमिति। अनेकरात्र्यन्तरिता अपि यवगोधूमदुग्धविकाराः स्नेहसंयोगरहिता अपि, द्विजातिभिर्भक्षणीयाः ॥२५॥

एतदुक्तं द्विजातीनामभक्ष्याभक्ष्यमशेषतः। मांसस्यातः प्रवक्ष्यामि विधिम्भक्षणवर्जने ॥ २६ ॥

एतदुक्तमिति। एतद्द्विजातीनामभक्ष्याभक्ष्यमुक्तम्। अतऊर्द्ध्वं मांसस्य भक्षणे वर्ज्जने च विधानं निःशेषं वक्ष्यामि ॥ २६ ॥

प्रोक्षितम्भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया। यथाविधि नियुक्तस्तु प्राणानामेव चात्यये ॥ २७ ॥

प्रोक्षितमिति। प्रोक्षितं भक्षयेदिति परिसंख्या वा स्यात् नियमविधिर्वा। तत्र परिसंख्याने प्रोक्षितादन्यन्न भक्षणीयमिति वाक्यार्थः स्यात्। सचानुपाकृतमांसानीत्यनेनैव निषेधात्प्राप्तः। तस्मान्मन्त्रकृतप्रोक्षणाख्यसंस्कारयुक्तयज्ञहुतपशुमांसभक्षणमिदं यज्ञाङ्गं विधीयते। अतएवासंस्कृतान् पशून्मन्त्रैरित्यस्यानुवादं वक्ष्यति। ब्राह्मणानाञ्च यदा कामना भवति तदावश्यं मांसं भोक्तव्यमिति तदापि नियमतएकवारं भक्षयेत् सकृद्ब्राह्मणकाम्ययेति यमवचनात्। तथा श्राद्धे मधुपर्के च। समांसोमधुपर्कइति गृह्यवचनात्। नियुक्तेन नियमान्मांसंभक्षणीयमिति। अतएव नियुक्तस्तु यथान्यायमित्यतिक्रमदोषं वक्ष्यति प्राणात्यये चाहारान्तराभावनिमित्तके व्याधिहेतुके वा नियमतोमांसं भक्षयेत् ॥ २७ ॥

प्राणस्यान्नमिदं सर्व्वं प्रजापतिरकल्पयत्। स्थावरञ्जङ्गमञ्चैव सर्व्वं प्राणस्य भोजनम्॥ २८॥

प्राणात्यये मांसभक्षणानुवादमाह। प्राणस्यान्नमिदमिति। प्राणितीति प्राणोजीवः शरीरान्तर्गतोभोक्ता तस्यादनीयं सर्व्वमिदं ब्रह्मा कल्पितवान् किन्तदाह जङ्गममप्स्वादि स्थावरं ब्रीहियवादि सर्व्वं तस्य भोजनं तस्मात्प्राणधारणार्थं जीवो मांसम्भक्षयेत्॥ २८॥

चराणामन्नमचरादंष्ट्रिणामप्यदंष्ट्रिणः। अहस्ताश्च सहस्तानां शूराणाञ्चैव भीरवः॥ २९॥

प्राणस्यान्नमिदं सर्व्वमित्येव प्रपञ्चयति चराणामिति। जङ्गमानां हरिणादीनां अजङ्गमास्तृणादयः। दंष्ट्रिणां व्याघ्रादीनां अदंष्ट्रिणोहरिणादयः। सहस्तानां मनुष्यादीनां अहस्तामत्स्यादयः। शूराणां सिंहादीनां भीरवोहस्त्यादयोऽदनीयाएताहृश्यां विधातुरेव सृष्टौ॥ २९॥

नात्ता दुष्यत्यदन्नाद्यान्प्राणिनोऽहन्यहन्यपि। धात्रैव सृष्टाह्याद्याश्च प्राणिनोऽत्तारएव च॥ ३०॥

नात्तेति। भक्षयिता भक्षणार्हान् प्राणिनः प्रत्यहमपि भक्षयन्न दोषमाप्नोति। यस्माद्विधात्रैव भक्षणार्हाभक्षयितारश्च निर्मितादति त्रिभिः श्लोकैः प्राणात्यये मांसभक्षणस्तुतिरियम्॥ ३०॥

यज्ञाय जग्धिर्मांसस्येत्येष दैवोविधिः स्मृतः। अतो
न्यथाप्रवृत्तिस्तु राक्षसोविधिरुच्यते ॥ ३१ ॥

अथ प्रोक्षितभक्षणनियमार्थवादमाह। यज्ञायेति। यज्ञ
सम्पत्त्यर्थं तदङ्गभूतमांसस्य जग्धिर्भक्षणं एतद्दैवमनुष्ठानं उक्त
व्यतिरिक्तप्रकारेण पुनरात्मार्थमेव पशुं व्यापाद्य तन्मांसभक्ष
णेषु प्रवृत्तीराक्षसाचितमनुष्ठानं इत्युत्तरार्द्धं वृथामांस
भक्षणनिवृत्त्यनुवादः ॥ ३१ ॥

क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा। देवान्
पितॄंश्चार्चयित्वा खादन्मांसं न दुष्यति ॥ ३२ ॥

क्रीत्वेति। क्रीत्वा आत्मना चोत्पाद्य अन्येन वा कृत्वा प्यानीय
दत्तं मांसन्देवपितृभ्योदत्वा शेषमश्नयन् न पापमाप्नोति अतः
प्रोक्षितादिचतुष्टयभक्षणवन्नेदन्नियतमभक्षणं न दुष्यतीत्यभि
धानात्। वर्षे वर्षेऽश्वमेधेन इत्यादिवक्ष्यमाणमांसवर्जनविधिर
प्येतद्विषयएवाविरोधात् ॥ ३२ ॥

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः।
जग्ध्वा ह्यविधिना मांसम्प्रेत्य तैरद्यतेऽवशः ॥ ३३ ॥

नाद्यादिति। मांसभक्षणानुष्ठानदोषज्ञोद्विजातिरनापदि
तत्तद्दैवाद्यर्चनविधानं विना न मांसमश्नयेत्। यस्मादविधा

नेन यो मांसं खादति स मृतः सन् यन्मांसस्तेन भक्षितं तैः प्राणिभिः परलोके स्वरक्षणाक्षमः खाद्यत इति सर्व्वश्लोकानुवादः ॥ ३३ ॥

न तादृशम्भवत्येनोमृगहन्तुर्द्धनार्थिनः । यादृशम्भवति प्रेत्य वृथामांसानि खादतः ॥ ३४ ॥

नतादृशमिति । मृगवधजीविनो व्याधादेर्द्धननिमित्तं मृगाणां हन्तुर्न तथाविधं पापम्भवति यादृशमदेवपित्र्यशेषभूतमांसानि खादतः परलोके भवतीति पूर्व्वानुवाद एव ॥ ३४ ॥

नियुक्तस्तु यथान्यायं योमांसं नात्ति मानवः । स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥ ३५ ॥

नियुक्तस्त्विति । श्राद्धे मधुपर्के च यथाशास्त्रं नियुक्तः सन् योमनुष्योमांसं न खादति स मृतः सन्नेकविंशतिजन्मानि पशुर्भवति । यथाविधि नियुक्तस्त्वित्येतन्नियमातिक्रमफलविधानमिदम् ॥ ३५ ॥

असंस्कृतान् पशून्मन्त्रैर्नाद्याद्विप्रः कदाचन । मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥ ३६ ॥

असंस्कृतानिति । वेदविहितमन्त्रवत्प्रोक्षणादिसंस्कारशून्यान्पशून् विप्रादिः कदाचिन्नाश्नीयात् । शाश्वतम्भवाद्वाना

दितया नित्यं पशुयागादिविधिमास्थितो मन्त्रसंस्कृतान्येवाश्नीयादिति। प्राश्चिवं भक्षयेन्मांसमित्येतस्यार्थव्याकारार्थमेतत् ॥ ३६ ॥

कुर्य्याद्घृतपशुं सङ्गे कुर्य्यात्पिष्टपशुन्तथा। नत्वेवतु वृथाहन्तुम्पशुमिच्छेत्कदाचन ॥ ३७ ॥

कुर्य्यादिति। सङ्गे आसक्तौ पशुभक्षणानुरागेण घृतमयीं पिष्टमयीं वा पशुप्रतिकृतिं कृत्वा खादयेत् नपुनर्देवताद्युद्देशं विनैव पशून् कदाचिदपि हन्तुमिच्छेत् ॥ ३७ ॥

यावन्ति पशुरोमाणि तावत्कृत्वोहमारणम्। वृथापशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि ॥ ३८ ॥

यावन्तीति। देवताद्युद्देशमन्तरेण आत्मार्थं यः पशून् हन्ति स वृथापशुघ्नोऽन्नतः सन् यावत्संख्यानि पशुरोमाणि तावत्संख्याकृजन्मान्यनि जन्मनि मारणं प्राप्नोति। तस्माद्वृथा पशून्न हन्यात। तावत्कृत्वइति वलन्तात् क्रियाभ्यावृत्तिगणने कृत्वसुचप्रत्ययः इह हशब्द आगमप्रसिद्धसूचनार्थः ॥ ३८ ॥

यज्ञार्थम्पशवः सृष्टाः स्वयमेव स्वयम्भुवा। यज्ञो ऽस्य भूत्यै सर्व्वस्य तस्माद्यज्ञे वधोऽवधः॥ ३९॥

यज्ञार्थन्तु पशुवधे न दोषइत्याह यज्ञार्थं पशवइति। यज्ञसिद्ध्यर्थं प्रजापतिना आत्मनैवादरेण पशवः सृष्टाः यज्ञ स्याग्नौ प्रास्ताहुतिन्यायात् सर्व्वस्यास्य जगतो विवृद्ध्यर्थः। तस्मा द्यज्ञे वधोऽवधएव वधजन्यदोषाभावात्॥ ३९॥

ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणस्तथा। यज्ञार्थं निधनम्प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः॥ ४०॥

किञ्च ओषध्यइति। ओषध्यो व्रीहियवाद्याः पशवश्छागाद्या वृक्षा यूपाद्यर्थाः तिर्य्यञ्चः कूर्म्मादयः पक्षिणः कपिञ्जलाद्याः यज्ञार्थं विनाशं गताः पुनर्जात्युत्कर्षम्प्राप्नुवन्ति॥ ४०॥

मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि। अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः॥ ४१॥

मधुपर्केचेति। समांसो मधुपर्कइति विधानान्मधुपर्के च यज्ञे च ज्योतिष्टोमादौ पित्र्ये दैवे च कर्म्मणि श्राद्धादौ पशवो हिंसनीयाः। नान्यत्रेति मनुरभिहितवान्॥ ४१॥

एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद्द्विजः।
आत्मानञ्च पशुञ्चैव गमयत्युत्तमां गतिम्॥ ४२॥

एष्वर्थेष्विति। एषु मधुपर्कादिषु पदार्थेषु पशून् हिंसन् आत्मानं पशूंश्च उत्तमां गतिं स्वर्गाद्युपभोगयोग्यविलक्षण देहदेशादिसम्बन्धं प्रापयति वेदतत्त्वार्थविदिति विद्वदधिकारबोधनार्थम्। नन्वन्याधिकारिके कर्म्मणि कथमनधिकृतस्य पश्वादेरुत्तमगतिप्राप्तिः फलं उच्यते शास्त्रप्रमाणकत्वात् अस्यार्थस्य पित्रधिकारिकायां जातेष्टावनधिकारिणोऽपि पुत्रस्य फलप्राप्तिवत् इहापि पश्वादिगतफलसम्भवात् यजमानएव कारुणिकतया पशुगतफलविशिष्टमेव फलं कामयिष्यति अतएवात्मानञ्च पशुञ्चेवेत्यभिधानात् यजमानव्यापारादेव पशुगतफलसिद्धिरुक्ता॥ ४२ ॥

गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः।
नावेदविहितां हिंसामापद्यपि समाचरेत्॥ ४३॥

गृहेगुरावरण्येति। गृहाश्रमे ब्रह्मचर्य्याश्रमे वानप्रस्थाश्रमे च प्रशस्तात्मा द्विजोनिवसन्नापद्यपि नाशास्त्रीयां हिंसां समाचरेत॥ ४३ ॥

या वेदविहिता हिंसा नियतास्मिंश्चराचरे। अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥ ४४॥

कथन्तर्हि तुल्येहिंसात्वे वैदिकी दैवादिपशुहिंसा नाधर्मायेत्यतआह। यावेदविहितेति। या श्रुतिविहिता कर्मविशेषदेशकालादिनियताऽस्मिन् जगति स्थावरजङ्गमात्मनि अहिंसामेव तां जानीयात् हिंसाजन्याधर्मविरहात्। दैवपशुहननमधर्मः प्राणिहननत्वात् ब्राह्मणहननवत् इत्याद्यनुमानं उपजीव्यशास्त्रबाधादेव न प्रवर्त्तते दृष्टान्तीकृतब्राह्मणहननस्याप्यधर्मत्वे शास्त्रमेवोपजीव्यं वेदाद्धर्मो हि निर्बभौ यस्मादनन्यप्रमाणको धर्मो वेदादेव निःशेषेण प्रकाशताङ्गतः ॥ ४४॥

योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया। स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते ॥ ४५ ॥

योऽहिंसकानीति। योऽनुपघातकान् प्राणिनः हरिणादीनात्मसुखेच्छया मारयति स इह लोके परलोके च न सुखेन वर्द्धते ॥ ४५ ॥

योबन्धनवधक्लेशान् प्राणिनान्न चिकीर्षति ।
स सर्व्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥ ४६ ॥

योबन्धनेति । योबन्धनमारणक्लेशादीन्प्राणिनां कर्त्तुं नेच्छति स सर्व्वहितप्राप्तीच्छुरनन्तसुखमाप्नोति ॥ ४६ ॥

यद्ध्यायति यत्कुरुते धृतिम्बध्नाति यत्र च । तद्वाप्नोत्ययत्नेन योहिनस्ति न किञ्चन ॥ ४७ ॥

अन्यच्च यद्ध्यायतीति। यच्चिन्तयति धर्म्मादिकमिदं मेस्त्विति यच्च श्रेयःसाधनं कर्म्म करोति यत्र च परमार्थध्यानादौ धृतिं बध्नाति तत्सर्व्वमक्लेशेन लभते यउपघातनिमित्तं,दंशमशकाद्यपि न व्यादयति ॥ ४७ ॥

नाकृत्वा प्राणिनां हिंसाम्मांसमुत्पद्यते क्वचित् ।
नच प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्ज्जयेत् ॥ ४८ ॥

मांसभक्षणप्रसङ्गेन हिंसागुणदोषावभिधाय पुनः प्रकृतमांसाभक्षणमाह नाकृत्वेति । प्राणिहिंसाव्यतिरेकेण न क्वचिन्मांसमुत्पद्यते प्राणिवधश्च नस्वर्गनिमित्तं नरकहेतुरेव यस्मात्तस्मादविधिना मांसं न भक्षयेदिति ॥ ४८ ॥

समुत्पत्तिञ्च मांसस्य बधबन्धौ च देहिनाम्।
प्रसमीक्ष्य निवर्त्तेत सर्व्वमांसस्य भक्षणात्॥ ४९ ॥

समुत्पत्तिञ्चेति। शुक्रशोणितपरिणामात्मिकां समुत्पत्तिं घृणाकरीं विज्ञाय प्राणिनां बधबन्धौ च क्रूरकर्म्मरूपौ निरूप्य विहितमांसभक्षणादपि निवर्त्तेत किमुताविहितमांसभक्षणादिति। अविधिना मांसभक्षणनिन्दानुवादः॥ ४९ ॥

न भक्षयति योमांसं विधिं हित्वा पिशाचवत।
स लोके प्रियतां याति व्याधिभिश्च न पीड्यते॥ ५० ॥

नभक्षयतीति। उक्तविधिव्यतिरेकेण यो न मांसम्भक्षयति पिशाचवदिति यथा पिशाचोभक्षयति तथा नेति व्यतिरेके दृष्टान्तः स लोकस्य प्रियोभवति। रोगैश्च न बाध्यते तस्माद्वैधमांसभक्षणाद्व्याधयोभवन्तीति दर्शितम्॥ ५० ॥

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी।
संस्कर्त्ता चोपहर्त्ताच खादकश्चेति घातकाः॥५१॥

अनुमन्तेति। यदनुमतिव्यतिरेकेण हननङ्कर्त्तुंनशक्यते सोऽनुमन्ता। विशसिता अङ्गानि यः कर्त्यादिना पृथक्

पृथक् करोति। क्रयविक्रयी मांसस्य क्रेता विक्रेता च। गोविन्दराजस्तु। यः क्रीत्वाविक्रीणाति स क्रयविक्रयीत्येकमेवाह। तदयुक्तं। हननेन तथाहन्ता धनेन क्रायकस्तथा। विक्रयी तु धनादानात्संस्कर्त्तातत्प्रवर्त्तनादिति यमवचनेन पृथङ्निर्देशात्। संस्कर्त्ता पाचकः। उपहर्त्ता परिवेषकः। खादकोभक्षयिता। घातकत्ववचनञ्चेदमशास्त्रीयपशुवधेऽनुमत्यादयोपि न कर्त्तव्या इत्येवंपरं विधिनिषेधपरत्वाच्छास्त्रस्य खादकादीनां पृथक्प्रायश्चित्तदर्शनात्॥ ५१॥

स्वमांसम्परमांसेन योवर्द्धयितुमिच्छति। अनभ्यर्च्य पितॄन् देवान् ततोऽन्योनास्त्यपुण्यकृत्॥५२॥

स्वमांसमिति। स्वशरीरमांसं परशरीरमांसेन देवपित्राद्यर्चनं विना योवृद्धिं नेतुमिच्छति तस्मादपरोनापुण्यकर्त्ता स्तोर्थविधिमांसभक्षणनिन्दानुवादः॥ ५२॥

वर्षे वर्षेऽश्वमेधेन योयजेत शतं समाः। मांसानि च न खादेद्यस्तयोः पुण्यफलं समम्॥ ५३॥

इदानीमनियमिताप्रतिषिद्धमांसभक्षणस्य निवृत्तिर्द्धर्माय इत्येतद्दर्शयितुमाह वर्षे वर्षइति। योवर्षशतं यावत्प्रतिवर्षं

मश्वमेधेन यजेत यश्च यावज्जीवं मांसन्न खादति तयोः पुण्यस्य फलं स्वर्गादि तुल्यम् ॥ ५३ ॥

फलमूलाशनैर्मेध्यैर्मुन्यन्नानाञ्च भोजनैः । न तत्फलमवाप्नोति यन्मांसपरिवर्ज्जनात् ॥ ५४ ॥

फलमूलाशनैरिति । पवित्रफलमूलभक्षणैर्व्वामश्रस्य भोज्यानाञ्च नीवाराद्यन्नानाम्भोजनैर्न तत्फलमवाप्नोति । यच्छास्त्रनियमिताप्रतिषिद्धमांसवर्ज्जनाल्लभते ॥ ५४ ॥

मांस भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ ५५ ॥

मांसम्भक्षयितेति । इह लोके यस्य मांसमहमश्नामि परलोके मां स भक्षयिष्यतीति एतन्मांसशब्दस्य निरुक्तम्पण्डिताः प्रवदन्ति । इति मांसशब्दस्य निर्वचनमवैधमांसभक्षणपापफलकथनार्थम् ॥ ५५ ॥

न मांसभक्षणे दोषोन मद्ये नच मैथुने । प्रवृत्तिरेषा भूतानान्निवृत्तिस्तु महाफला ॥ ५६ ॥

न मांसभक्षणइति । ब्राह्मणादीनां वर्णानां यथाधिकारमविहिताप्रतिषिद्धभक्षणादौ न कश्चिद्दोषोयस्मात्प्राणिनाम्भक्षण

पानमैथुनादौ प्रवृत्तिः स्वाभाविकोयन्धर्मः वर्जनन्तुनर्म्महाफलं अविहितामतिषिद्धमद्यमैथुननिवृत्तेर्म्महाफलकथनार्थोयं उक्तस्यैव मांसवर्ज्जनमहाफलकथनस्यानुवादः ॥ ५६ ॥

प्रेतशुद्धिम्प्रवक्ष्यामि द्रव्यशुद्धिन्तथैव च। चतुर्णामपि वर्णानां यथावदनुपूर्व्वशः ॥ ५७॥

प्रेतशुद्धिमिति। ब्राह्मणादीनाञ्चतुर्णामपि वर्णानां प्रेतेषु पित्रादिषु पुत्रादीनां शुद्धिम्ब्राह्मणादिक्रमेण यथावत् यायस्येति द्रव्यादीनाञ्च तैजसादीनां शुद्धिमभिधास्यामि ॥ ५७ ॥

दन्तजातेऽनुजाते च कृतचूडे च संस्थिते। अशुद्धा बान्धवाः सर्व्वे सूतके च तथोच्यते ॥ ५८ ॥

तत्र शुद्धेरशुद्धिसापेक्षत्वात्तन्निरूपणार्थमाह दन्तजात इति। दन्तजाते जातदन्त इत्यर्थः। वाहिताग्न्यादिष्वित्यनेन जातशब्दस्य परनिपातः। अनुजाते जातदन्तानन्तरं कृतचूडाकरणे चकारात् कृतोपनयने च संस्थिते मृते सति बान्धवाः सपिण्डाः समानोदकाश्चाशुद्धा भवन्ति प्रसवे च तथैवाशुद्धा भवन्तीत्युच्यते। वयोविभागेनोद्देशमात्रमिदं वक्ष्यमाणाशौचकालभेदादिसुखाववोधनार्थम् ॥ ५८ ॥

दशाहं शावमाशौचं सपिण्डेषु विधीयते।
अर्वाक् सञ्चयनादस्थ्नां त्र्यहमेकाहमेव च॥ ५९ ॥

दशाहमिति। सप्तपुरुषपर्य्यन्तं सपिण्डतां वक्ष्यति सपिण्डेषु शवनिमित्तमाशौचन्दशाहोरात्रं ब्राह्मणस्योपदिश्यते। शुद्ध्येद्विप्रो दशाहेन इतिवक्ष्यमाणत्वात्। अर्वाक् सञ्चयनादस्थ्नामिति चतुरहोपलक्षणञ्चतुर्थे दिवसे अस्थिसञ्चयनं कुर्य्यादिति विष्णुवचनात्। त्र्यहमेकाहं वा अहःशब्दोऽहोरात्रपरः अयञ्चाग्निवेदादिगुणापेक्षो व्यवस्थितविकल्पः। यथाह दक्षः। एकाहाच्छुद्ध्यते विप्रो योऽग्निवेदसमन्वितः। हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा। श्रौताग्निमतो मन्त्रब्राह्मणात्मककृत्स्नशाखाध्यायिनः एकाहाशौचम्। उक्तयोः श्रौताग्निवेदाध्ययनगुणयोरेकगुणरहितो हीनः तस्य त्र्यहः। उभयगुणरहितस्तु हीनतरः केवलस्मार्त्ताग्निमान् तस्य चतुरहः सकलगुणरहितस्य दशाहः। तदाह पराशरः। निर्गुणो दशभिर्दिनैरिति॥ ५९॥

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु जन्मनाम्नोरवेदने॥ ६०॥

सपिण्डतात्विति। सपिण्डलक्षणमाह यम्पुरुषम्प्रतियोगिनं कृत्वा निरूप्यते तस्य पितृपितामहप्रभृतीन् षट् पुरुषानतिक्रम्य

सप्तमे पुरुषे प्राप्ते सपिण्डत्वं निवर्त्तते एवम्पुत्रपौत्रादिष्वप्यव गन्तव्यं। पिण्डसम्बन्धिनिबन्धना चेयं सपिण्डता। तथाहि पितृ पितामहप्रपितामहेभ्यस्त्रिभ्यःपिण्डदानं प्रपितामहस्य पित्रा दयस्त्रयःपिण्डलेपभुजः तत्पूर्व्वस्य तु सप्तमस्य पिण्डसम्बन्धो नास्तीत्यसपिण्डता यस्य चैते षट्पुरुषाः सपिण्डाः सोपि तेषां सपिण्डः पिण्डदातृत्वेन तत्पिण्डसम्बन्धात् अतः साप्तपौरुषीयं सपिण्डता। तदुक्तं मत्स्यपुराणे। लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्। सगोत्रत्वेचेयं सपिण्डता अतएव शङ्खलिखितौ। सपिण्डता तु सर्व्वेषां गोत्रतः साप्तपौरुषी। तेन मातामहादीनां एकपिण्ड सम्बन्धेपि न सपिण्डता। समानोदकत्वम्पुनरस्मत्कुले अमुक नामाभूदिति जन्मनामोभयापरिज्ञाने निवर्त्तते॥ ६०॥

यथेदं शावमाशौचं सपिण्डेषु विधीयते। जनने प्येवमेवस्यान्निपुणां शुद्धिमिच्छताम्॥ ६१॥

यथेदमिति। यथेदं दशाहादिकं शवनिमित्तमाशौचं कर्म्मानर्हत्वलक्षणं सपिण्डेषु दशाहं शावमाशौचमित्यनेन विधीयते। प्रसवेपि सम्यक्शुद्धिमिच्छतां सपिण्डानान्तादृश मेवाशौचम्भवेत्॥ ६१॥

सर्व्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥ ६२ ॥

अतिदेशेन तुल्यतायां प्राप्तायां विशेषमाह। सर्व्वेषामिति। मरणनिमित्तमस्पृश्यत्वलक्षणमशौचं सर्व्वेषामेव सपिण्डानां समानम्। जननिमित्तन्तु अस्पृश्यत्वं मातापित्रोरेव भवति तत्राप्ययं विशेषः। जननिमित्तमस्पृश्यत्वं मातुरेव दशरात्रम्पितातु स्नानात् स्पृश्योभवति। अयमेव सम्बन्धः सम्वर्त्तेन व्यक्तीकृतः। जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते। माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनम्पितुः ॥ ६२ ॥

निरस्य तु पुमान् शुक्रमुपस्पृश्यैव शुध्यति। वैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम् ॥ ६३ ॥

निरस्यत्विति। स्नानं मैथुनिनः स्मृतमिति मैथुने स्नानं विधास्यति। तेन मैथुनं विनापि कामतोरेतः स्खलने स्नात्वा पुमान् शुद्धोभवति। अकामतस्तु स्वप्नादौ रेतःपाते मूत्रवद्रेतस उत्सर्गे इत्यापस्तम्बोक्तेः स्नानं विनापि गृहस्थस्य शुद्धिः। ब्रह्मचारिणस्त्वकामतोपि स्वप्ने सिक्त्वा ब्रह्मचारीत्यनेन स्नानादिना शुद्धिरुक्ता। वैजिके तु सम्बन्धे परपूर्व्वभार्य्यायामपत्यो

स्पत्तौ त्र्यहमशौचम्भवति तथाच विष्णुः। परपूर्व्वभार्य्यासु त्रिरात्रं। रेतःपातिनामशौचमप्रकृतमपि जननप्रकरणे प्रसङ्गात्तदनुगुणतयोक्तं यत्र रेतःपातमात्रेण स्नानन्तचाप त्यात्पत्तौ त्रिरात्रमुचितम् ॥ ६३ ॥

अह्ना चैकेन रात्र्याच त्रिरात्रैरेव च त्रिभिः। शव स्पृशो विशुध्यन्ति त्र्यहादुदकदायिनः ॥ ६४ ॥

अह्ना चैकेनेति। एकेनाह्ना एकयाच रात्र्या इत्यहोरात्रेण त्रिरात्रैस्त्रिभिरिति नवाहोरात्रैर्मिलित्वा दशाहेनेति वैदग्ध्येनोक्तम्। ननु दशाहेनेति वक्तव्ये किमर्थोयं वाग्विस्तारः। उच्यते। वंहीयसीं लघिष्ठाम्वा गिरं निर्मान्ति वाग्मिनः। नचावश्यत्वमेतेषां लघूक्त्यैव नियम्यते। वृत्तस्वाध्यायगुणयोगेन ये सपिण्डा एकाहादिस्वल्पाशौचयोग्यास्ते यदि स्नेहादिना शवस्पृशो भवन्ति तदा दशाहेनैव शुद्ध्यन्ति उदकदायिनः पुनः समानोदकास्त्र्यहेण। गोविन्दराजस्तु धनग्रहणपूर्व्वकशवनिर्हारकासम्बन्धिब्राह्मणविषयमिदन्दशाहाशौचमाह ॥ ६४ ॥

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्। प्रेतहारैः समन्तत्र दशरात्रेण शुध्यति ॥ ६५ ॥

गुरोरिति। गुरोराचार्य्यादेरसपिण्डस्य मृतस्य शिष्यो ऽन्त्येष्टिं कृत्वा प्रेतनिर्हारकैर्गुरुसपिण्डैस्तुल्योदशरात्रेण शुद्धो भवति ॥ ६५ ॥

रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुद्ध्यति। रज स्युपरते साध्वी स्नानेन स्त्री रजस्वला॥ ६६ ॥

रात्रिभिरिति। अत्र रात्रिभिरिति विधेयगामिनोबहुत्वस्य विवक्षितत्वात् तृतीयमासात् प्रभृतिगर्भस्रावे गर्भमासतुल्या होरात्रैर्विशेषाभिधानाच्चातुर्वर्ण्यस्त्री विशुद्ध्यतिः। एतच्च षण्मास पर्य्यन्तम्। यथोक्तमादिपुराणे। षण्मासाभ्यन्तरं यावद्गर्भ स्रावोभवेद्यदि। तदा माससमैस्तासान्दिवसैः शुद्धिरिष्यते। अतऊर्द्धं स्वजात्युक्तमाशौचं तासु विद्यते। मेधातिथिगोविन्द राजादयस्त्वादिपुराणवचनादर्शनात् नवममासादर्वाग्गर्भ स्रावेमासतुल्याहोरात्रैः स्त्रीणां विशुद्धिरित्यभिदधति। प्रथम द्वितीयमासीयगर्भस्रावेतु स्त्रीणांत्रिरात्रम्। यथाह हारीतः। गर्भस्रावे स्त्रीणां त्रिरात्रं साधीयोरजोविशेषत्वात्। पित्रादि सपिण्डानान्त्वत्र सद्यः शौचं। यथाह सुमन्तुः। गर्भमासतुल्या दिवसा गर्भसंस्रवणे सद्यः शौचं वा भवति। गर्भमासतुल्या इति स्त्रीविषयं सद्यःशौचं वेति पित्रादिसपिण्डविषयमिति व्यवस्थितविकल्पः। रजस्वला च स्त्री रजसि निवृत्ते सति पञ्चमे दिने स्नानेनादृष्टार्थकर्मयोग्या, भवति स्पर्शयोग्यातु त्रिरात्र व्यपगमे चतुर्थेहनि कृतस्नानेनैव शुद्धा भवति॥ ६६ ॥

नृणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता। निर्वृत्त
चूडकानान्तु त्रिरात्राच्छुद्धिरिष्यते ॥ ६७॥

नृणामिति। अकृतचूडानां बालानां मरणे सपिण्डानाम
होरात्रेण शुद्धिर्भवति कृतचूडानान्तु मरणे प्रागुपनयन
कालात्त्रिरात्रेण शुद्धिः॥ ६७॥

ऊनद्विवार्षिकम्प्रेतं निदध्युर्बान्धवा बहिः। अल
ङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते॥ ६८॥

ऊनद्विवार्षिकमिति। असंपूर्णद्विवर्षं बालमृतमकृतचूडं
मालादिभिरलङ्कृत्य ग्रामाद्बहिःकृत्वा विशुद्धायाम्भूमौ काला
न्तरे शीर्णदेहतया सद्यास्थिसञ्चयनवर्जं बान्धवाः प्रक्षिपेयुः।
विश्वरूपस्तु। यस्यां भूमौ अन्यस्यास्थिसञ्चयनन्न कृतं तस्यां
निदध्युरिति व्याचष्टे॥ ६८॥

नास्य कार्य्योऽग्निसंस्कारो न च कार्य्योदकक्रिया।
अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव च॥ ६९॥

नास्येति। अस्योनद्विवार्षिकस्याग्निसंस्कारो न कर्त्तव्यः नाप्यु
दकक्रिया कर्त्तव्या उदकदाननिषेधोयं श्राद्धादिसकलप्रेत

त्यनिवृत्त्यर्थः। किन्त्वरण्ये काष्ठवत्परित्यज्य काष्ठवदिति शोका भावोऽभिहितः। यथा अरण्ये काष्ठं परित्यज्य शोको न क्रियते एवं त्यक्त्वा त्र्यहं क्षपेयुः त्र्यहाशौचं कुर्य्युः। अथ ह्याकृतचूडस्य त्र्यहाशौचविधिः पूर्व्वोक्तैकाहाशौचविकल्पपरः स च व्यवस्थितो वृत्तस्वाध्यायादियुक्तस्यैकाहः तद्रहितस्य त्र्यहः। यद्यपि मनुना परित्यागमात्रं विहितं तथाप्यूनद्विवार्षिकन्निखनेदिति याज्ञवल्क्यवचनाद्विशुद्धभूमौ निखायैव त्यक्तव्यः॥ ६८॥

नात्रिवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया। जातदन्तस्य वा कुर्य्युर्नाम्नि वापि कृते सति॥ ७०॥

नात्रिवर्षस्येति। अप्राप्तवृतीयवर्षस्य पुत्रादेः पित्रादिसपिण्डैरुदकक्रिया न कर्त्तव्येति पूर्व्वत्र निषिद्धाप्युत्तरार्थमनूद्यते जातदन्तस्य वा उदकदानं कर्त्तव्यम् नामकरणे वा कृते। उदकक्रियासाहचर्य्यादग्निसंस्कारोऽप्यनुज्ञायते प्रेतपिण्डश्राद्धादिकञ्च यद्यप्यकरणसम्भवे करणं क्लेशावहं तथापि करणाकरणयोराम्नानाज्जातदन्तकृतनाम्नोः करणे प्रेतोपकारो भवत्यकरणे प्रत्यवायाभावइत्यवगम्यते॥ ७०॥

सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम्। जन्मन्येकोदकानान्तु त्रिरात्राच्छुद्धिरिष्यते॥ ७१॥

सब्रह्मचारिणीति। सहाध्यायिनि मृते एकरात्रमशौचं

कर्त्तव्यं समानोदकानाम्पुनः पुत्रजनने सति त्रिरात्रेण शुद्धि र्भवति। व्यहानुदकदायिनदति मरणविषयमुक्तम्॥ ७१॥

स्त्रीणामसंस्कृतानान्तु त्र्यहाच्छुध्यन्ति बान्धवाः।
यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः॥ ७२॥

स्त्रीणामिति। स्त्रीणामकृतविवाहानां वाग्दत्तानां मरणे बान्धवा भर्त्रादयस्त्र्यहेन शुद्ध्यन्ति वाग्दानं विना भर्तृपक्षे सम्ब न्धाभावात्। अश्रुतमपि वाग्दानानन्तर्य्यं बोद्धव्यम्। सनाभयः पितृपक्षाः। वाग्दत्तानां विवाहादर्व्वाक् मरणे यथोक्तेनैव कल्पेनेत्येतच्छ्लोकपूर्वार्द्धोक्तेन त्रिरात्रेणैव शुध्यन्तीत्यर्थः। तदुक्तमादिपुराणे। आजन्मनस्तु चूडान्तं यत्र कन्या विपद्यते। सद्यःशौचं भवेत्तत्र सर्ववर्णेषु नित्यशः। ततोवाग्दानपर्यन्तं यावदेकाहमेवहि। अतः परम्प्रवृद्धानान्त्रिरात्रमिति निश्चयः॥ वाग्दानेतु कृते तत्र ज्ञेयञ्चोभयतस्त्र्यहम्। पितुर्वरस्य च ततोदत्तानाम्भर्त्तुरेवहि। स्वजात्युक्तमशौचं स्यान्मृतके सूतकेपि च। मेधातिथिगोविन्दराजौ तु यथोक्तेनैव कल्पेनेति नृणा मकृतचूडानामित्येतदुक्तेन विधिना शुध्यन्तीति व्याचख्तुः। अत्र च व्याख्याने पुत्रवत्कन्याया अपि चूडाकरणादूर्द्धं मरणे त्र्यहाशौचं स्यात्। तच्चादिपुराणाद्यनेकवचनविरुद्धम्॥ ७२॥

अक्षारलवणान्नाःस्युर्निमज्जेयुश्च ते त्र्यहम्।
मांसाशनञ्च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ॥७३॥

अक्षारेति। क्षारलवणं कृत्रिमलवणं तद्रहितमन्नमश्नीयुः त्रिरात्रं नद्यादौ स्नानमाचरेयुः। मांसञ्च न भक्षयेयुः। भूमौ चैकाकिनः शयनं कुर्य्युः॥ ७३॥

सन्निधावेष वै कल्पः शावाशौचस्य कीर्त्तितः।
असन्निधावयं ज्ञेयोविधिः सम्बन्धिबान्धवैः॥ ७४॥

सन्निधाविति। मृतस्य सन्निधावेकस्थानावस्थानादहःपरिज्ञान शावाशौचस्य विधिरयमुक्तः देशान्तरावस्थानादज्ञाने सत्ययं वक्ष्यमाणविधिः सम्बन्धिबान्धवैर्ज्ञातव्यः। सम्बन्धिनः सपिण्डाः समानोदकाबान्धवाः॥७४॥

विगतन्तुविदेशस्थं शृणुयाद्योह्यनिर्दशम्। यच्छेष न्दशरात्रस्य तावदेवाशुचिर्भवेत्॥ ७५॥

विगतन्विति। विगतं मृतं विदेशस्थं विप्रकृष्टदेशस्थं अनिर्दश मनिर्गतदशाहाद्यशौचकालं यः शृणोति स यद्वशिष्टन्दश

रात्राद्यशौचस्य तावत्कालमविशुद्धोभवति विगतमित्युपलक्षणं जननेप्येतदवगन्तव्यम्। तथाच बृहस्पतिः। अन्यदेशमृतं ज्ञातिं श्रुत्वा वा पुत्रजन्म च। अनिर्गते दशाहे तु शेषाहोभिर्विशुद्ध्यति ॥ ७५ ॥

अतिक्रान्ते दशाहेच त्रिरात्रमशुचिर्भवेत्।
सम्वत्सरेव्यतीतेतु स्पृष्ट्वैवापोविशुध्यति ॥ ७५ ॥

अतिक्रान्तइति। नाशौचमप्रसवस्यास्ति व्यतीतेषु दिनेष्वपि। इतिदेवलवचनान्मरणविषयं वचनमिदम्। सपिण्डमरणे दशाहाशौचेऽतिक्रान्ते त्रिरात्रमशुद्धोभवति सम्वत्सरे पुनरतीते स्नात्वैव विशुध्यति। एतच्चाविशेषेणाभिधानाच्चातुर्वर्ण्यविषयम्॥ ७६ ॥

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च।
सवासाजलमाप्लुत्य शुद्धोभवति मानवः॥ ७७ ॥

निर्दशमिति। दशाहाशौचव्यपगमे कर्मानर्हत्वलक्षणस्य व्यहाशौचस्योक्तत्वात् एतदङ्गास्पर्शविषयम्। निर्गतदशाहं सपिण्डमरणं श्रुत्वा पुत्रस्य जन्म च सचेलं स्नात्वा स्पृश्योभवति ॥ ७७ ॥

बाले देशान्तरस्थेच पृथक्पिण्डे च संस्थिते ।
सवासाजलमाप्लुत्य सद्यएव विशुद्ध्यति ॥ ७८ ॥

बालइति । बाले अजातदन्ते मृते जातदन्तेतु नृणामकृत चूडानामिति एकाहोराचाभिधानात् देशान्तरस्थेच सपिण्डे मृतइत्येकाहाशौचिविषयम् पूर्व्वश्लोके दशाहाशौचिनस्त्यह विधानात् । पृथक्पिण्डे समानोदके त्रिरात्रमुक्तम् तत्र त्रिरात्र व्यपगमे सर्व्वेष्वेषु सचेलं स्नात्वा सद्योविशुद्धोभवति ॥ ७८ ॥

अन्तर्दशाहे स्यातांचेत्पुनर्म्मरणजन्मनी । ताव त्स्यादशुचिर्व्विप्रोयावत्तत्स्यादनिर्दशम् ॥ ७९ ॥

अन्तर्दशाहइति । दशाहादिमध्ये यदि पुनर्म्मरणे मरणं जनने जननं स्यात्पुनःशब्दात्सजातीयावगमात् तदा ताव त्कालमेव विप्रादिरशुद्धः स्यात् यावत्पूर्व्वजातदशाहाद्य शौचं नापगतं स्यात् तावत्पूर्व्वाशौचव्यपगमेनैवद्वितीयेपि मृतके सूतके च शुद्धिरित्यर्थः ॥ ७९ ॥

त्रिरात्रमाहुराशौचमाचार्य्ये संस्थिते सति । तस्य पुत्रे च पत्न्याञ्च दिवारात्रमिति स्थितिः ॥ ८० ॥

त्रिरात्रमिति । आचार्य्ये मृते सति शिष्यस्य त्रिरात्रमा शौचं वदन्ति तत्पुत्रपत्न्योश्च मृतयोरहोरात्रमित्येषा शास्त्र मर्य्यादा ॥ ८० ॥

श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्। मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च ॥ ८१ ॥

श्रोत्रियइति। वेदशास्त्राध्यायिनि उपसम्पन्ने मैत्रादिना तत्समीपवर्त्तिनि तद्गृहवासिनीत्यर्थः तस्मिन्मृते त्रिरात्रेण शुद्धो भवति। मातुलर्त्विकूशिष्यादिषु पक्षिणीं रात्रिं व्याप्या शौचं। द्वे अहनी पूर्व्वोत्तरे पक्षाविव यस्याः सा रात्रिः पक्षिणी ॥ ८१ ॥

प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः। अश्रोत्रिये त्वहःकृत्स्नमनूचाने तथा गुरौ ॥ ८२ ॥

प्रेतराजनीति। यस्य देशे ब्राह्मणादिः स्थितः। तस्मिन्राजनि कृताभिषेके क्षत्रिये मृते सज्योतिरशौचं स्यात्। सह ज्योतिषा वर्त्ततइति सज्योतिः। यदि दिवा तदा यावत्सूर्य्यज्योतिस्ताव दाशौचं यदि रात्रौ मृतस्तदा यावत्तारकाज्योतिस्तावदाशौ चम्। श्रोत्रियं त्रिरात्रमुक्तम्। अश्रोत्रिये पुनस्तद्गृहे मृते कृत्स्न न्दिनमात्रमाशौचम्। नतु रात्रावपि रात्रौ मृते रात्रावेवे त्यवगन्तव्यं। साङ्गवेदाध्यायिनि स्वल्पं वा बहुवा यस्येत्येतस्मि द्दिष्टे रात्रावप्यहर्मात्रमेव ॥ ८२ ॥

शुध्येद्विप्रोदशाहेन द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रोमासेन शुध्यति॥ ८३॥

शुध्येदिति। उपनीतसपिण्डमरणे सम्पूर्णकालीनजनने च वृत्तस्वाध्यायादिरहितब्राह्मणोदशाहेन शुद्धोभवति चत्रियोद्वादशाहेन वैश्यः पञ्चदशाहेन शूद्रोमासेन तस्य चोपनयनस्थाने विवाहः॥ ८३॥

न वर्द्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः। नच तत्कर्म्म कुर्व्वाणः सनाभ्योप्यशुचिर्भवेत्॥ ८४॥

नवर्द्धयेदिति। यस्य तु वृत्तस्वाध्यायाद्यपेक्षया पूर्व्वं अर्वाक् सञ्चयनादस्थामित्याद्याशौचसंकोचउक्तः स निष्कर्म्मा सुखमासिष्ये इतिबुद्ध्या नाशौचदिनानि दशाहादिरूपतया वर्द्धयेत्। संकुचिताशौचदिनेष्वपि अग्निष्विति बहुवचनात् श्रौताग्निहोत्रहोमान् विघातयेत्। स्वयंकुर्य्यादशक्तौतु पुत्रादीन् कारयेत्। अत्रैव हेतुमाह यस्मात्तत्कर्म्माग्निहोत्ररूपं कुर्वाणः पुत्रादिः सपिण्डानाशुचिर्भवति। तदाह पारस्करः। नित्यानि विनिवर्त्तन्ते वैतानवर्जं। वैतानं श्रौतोहोमः गार्हपत्यकुण्डस्थानग्नीनाहवनीयादिकुण्डेषु वितत्य क्रियते इति। तथाच शंखलिखितौ। अग्निहोत्रार्थं स्नानोपस्पर्शनात् पिताशुचिः। जाबालोप्याह। जन्महानौ वितानस्य कर्म्मलोपोन

विद्यते। शालाग्नौ केवलोहोमः कार्य्यएवान्यगोत्रजैः। छन्दो गपरिशिष्टमपि। मृतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते। होमः श्रौते तु कर्त्तव्यः शुष्कान्नेनापि वा फलैः। तस्मादेकाह व्यहाद्याशौचसंकोचे सन्ध्यादीनामेव परित्यागो नतु श्रौतहो मस्य एकाहव्यहाद्यपगमेतु सन्ध्यापञ्चमहायज्ञादि सर्व्व मेवानुष्ठेयम्। अतोयन्मेधातिथिगोविन्दराजाभ्यामन्यथाप्यभि धायि एकाहव्यहाद्यशौचसंकोचोऽयं होमस्वाध्यायमात्र विषयः सन्ध्योपासनादिकन्तु तेनापि दशाहमेव न कर्त्तव्य मिति तन्निष्प्रमाणकम्। यत्तु गौतमेन राज्ञाञ्च कर्म्मविरो धात् ब्राह्मणस्य स्वाध्यायानिवृत्त्यर्थं। याज्ञवल्क्येनच। क्षत्रि णान्दोचितानाञ्चेत्यादिना सद्यःशौचमुक्तं तत्सर्वेषामेव दशा हाद्यशौचिनामपि तत्तत्कर्म्मविषयम्। यानितु उभयत्र दशा हानि कुलस्यान्नं न भुञ्जीतइत्यादीनि दशाहन्तत्तत्कर्म्म निषेधकानि वचनानि तानि दशाहाशौचविषयाणीति न कश्चि द्विरोधः। तस्मात् होमस्वाध्यायमात्रार्थं सगुणेऽशौचलाघवं। नसन्ध्योपासनाद्यर्थमितीदन्निष्प्रमाणकम्॥ ८४॥

दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकान्तथा। शव न्तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति॥ ८५॥

दिवेति। चाण्डालं रजस्वलां ब्रह्महादिकं प्रसूतान्दशा हाभ्यन्तरे शवं शवस्पृष्टिनञ्च स्पृष्ट्वा स्नानेन शुद्धोभवति।

केचित्तु तत्स्पृष्टिनमिति चाण्डालोदक्यादिभिः सर्व्वैः सम्बन्धयन्ति। गोविन्दराजस्तु याज्ञवल्क्यवचनात् शवस्पृष्टिनमेव तत्स्पृष्टिनमाह नोदक्यादिस्पृष्टिनस्त्वाचमनविधानात्। तदाह याज्ञवल्क्यः। उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत्। उदक्याशुचिभिः स्पृष्टः स्नानं कुर्य्यात् उदक्याशुचिभिः स्पृष्टैः स्पृष्टस्तूपस्पृशेदाचामेत्॥ ८५॥

आचम्य प्रयतो नित्यं जपेदशुचिदर्शने। सौरान्मन्त्रान् यथोत्साहम्पावमानीश्च शक्तितः॥ ८६॥

आचम्येति। श्राद्धदेवपूजादिसञ्चिकीर्षुः स्नानाचमनादिना प्रयतः सन् प्रकृतचाण्डालाद्यशुचिदर्शने सति उदुत्यं जातवेदसमित्यादिसूर्य्यदैवतमन्त्रान् यथासामर्थ्यं पावमानीश्च शक्त्या जपेत्॥ ८६॥

नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति। आचम्यैव तु निःस्नेहङ्गामालभ्यार्कमीक्ष्य वा॥८७॥

नारमिति। मानुषास्थि स्नेहसंयुक्तं स्पृष्ट्वा ब्राह्मणादिः स्नानेन विशुध्यति। स्नेहशून्यं पुनः स्पृष्ट्वा आचम्य गोस्पर्शार्कावेक्षणयोरन्यतरत् कृत्वा विशुद्धो भवति॥ ८७॥

आदिष्टी नोदकं कुर्य्यादाव्रतस्य समापनात्।
समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुध्यति ॥ ८८ ॥

आदिष्टीति। व्रतादेशनमादिष्टं तदस्यास्तीति ब्रह्मचारी स प्रेतोदकमाव्रतसमापनान्न कुर्य्यात्। उदकमिति पूरकपिण्डषोडशश्राद्धादिसकलप्रेतकृत्योपलक्षणं समाप्ते पुनर्ब्रह्मचर्य्ये प्रेतोदकं कृत्वा त्रिरात्रमशौचं कृत्वा विशुद्धो भवति। एतच्च मातापित्राचार्य्यव्यतिरिक्तविषयम्। तदाह वशिष्ठः। ब्रह्मचारिणः शवकर्म्मणा व्रतान्निवृत्तिरन्यत्र मातापित्रोर्गुरोर्वा। शवकर्म्मणेति शवनिमित्तकेन निर्हरणदहनोदकदानपूरकपिण्डषोडशश्राद्धादिकर्म्मणा। वक्ष्यति च आचार्य्यं स्वमुपाध्यायमिति ॥ ८८ ॥

वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठताम्।
आत्मनस्त्यागिनाञ्चैव निवर्त्तेतोदकक्रिया ॥ ८९ ॥

वृथेति। जातशब्दः प्रत्येकमभिसम्बध्यते वृथाजातानां बाहुल्येन त्यक्तस्वधर्म्मणां सङ्करजातानां हीनवर्णेनोत्कृष्टस्त्रीषूत्पन्नानां वेदबाह्यरक्तपटादिप्रव्रज्यासु वर्त्तमानानां अशास्त्रीयविषोद्बन्धनादिना कामतस्तु कृतजीवितत्यागिनामुदकादिक्रिया न कर्त्तव्या ॥ ८९ ॥

पाषण्डमाश्रितानाञ्च चरन्तीनाञ्च कामतः।
गर्भभर्तृद्रुहाञ्चैव सुरापीनाञ्च योषिताम्॥ ९०॥

पाषण्डमिति। वेदबाह्यरक्तपटमौण्ड्यादिव्रतचर्य्या पाषण्डं तदनुतिष्ठन्तीनां स्वच्छन्दमेकाऽनेकपुरुषगामिनीनां गर्भपातनभर्तृवधकारिणीनां द्विजातिस्त्रीणां सुरापीनां उदकक्रियाश्चौर्द्ध्वदेहिकं निवर्त्ततइति पूर्वेण सम्बन्धः॥ ९०॥

आचार्य्यं स्वमुपाध्यायम्पितरम्मातरं गुरुम्।
निर्हृत्य तु व्रती प्रेतान् न व्रतेन वियुज्यते॥ ९१॥

आचार्य्यमिति। आचार्य्यउपनयनपूर्व्वकं सम्पूर्णशाखाध्यापयिता उपाध्यायोवेदैकदेशस्याङ्गस्य वा अध्यापकः। वेदस्य वेदानाञ्च एकदेशस्यापि व्याख्याता गुरुः निर्हरणपूर्व्वकत्वादेतत्कृत्यस्य निर्हृत्य इति दाहदशाहपिण्डषोडशश्राद्धादिसकलप्रेतकृत्यस्य प्रदर्शनार्थं आचार्य्यादीन् पञ्च मृतान्निर्हृत्य ब्रह्मचारी न लुप्तव्रतोभवति। एवञ्चान्यान्निर्हृत्य व्रतलोपोभवतीति गम्यते। आचार्य्यं स्वमित्यभिधानाद्गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेदिति न्यायान्नाचार्य्याचार्य्यमपि स्वमिति सर्व्वत्र सम्बध्यते तेनोपाध्यायोपाध्यायमपि निर्हृत्य व्रतलोपएव॥ ९१॥

दक्षिणेन मृतं शूद्रम्पुरद्वारेण निर्हरेत्। पश्चिमोत्तरपूर्व्वैस्तु यथायोगं द्विजन्मनः ॥ ९२ ॥

दक्षिणेनेति। अमाङ्गलिकत्वादत्यन्तापकृष्टशूद्रक्रमेणाभिधानं शूद्रं मृतन्दक्षिणपुरद्वारेण निर्हरेत्। द्विजातीन् पुनर्यथायोगं यथायुक्त्या अपकृष्टवैश्यक्षत्रियक्रमेणैव पश्चिमोत्तरपूर्व्वद्वारेण निर्हरेत्॥ ९२ ॥

न राज्ञामघदोषोऽस्ति व्रतिनान्न च सत्त्रिणाम्। ऐन्द्रं स्थानमुपासीना ब्रह्मभूताहि ते सदा ॥ ९३ ॥

नराज्ञामिति। राज्ञामभिषिक्तक्षत्रियाणां सपिण्डमरणादौ अशौचदोषो नास्ति यतो राजान ऐन्द्रं स्थानं राज्याभिषेकाख्यं आधिपत्यकारणं प्राप्ताः। व्रतिनो ब्रह्मचारिणश्चान्द्रायणादिव्रतकारिणश्च। सत्त्रिणो गवामयनादियागप्रवृत्ताः। यतो ब्रह्मभूतास्ते ब्रह्मेव निष्पापाः। अशौचाभावश्चायं कर्म्मविशेषे। तदाह विष्णुः अशौचं न राज्ञां राजकर्म्मणि न व्रतिनां व्रते न सत्त्रिणां सत्त्रे। राजकर्म्म च व्यवहारदर्शनशान्तिहोमादि ...॥ ९३ ॥

राज्ञोमाहात्मिके स्थाने सद्यः शौचं विधीयते ।
प्रजानाम्परिरक्षार्थमासनञ्चात्र कारणम् ॥ ९४ ॥

राज्ञइति । महात्मनइदं स्थानं माहात्मिकं राज्यपदाख्यं सर्व्वाधिपत्यलक्षणं महात्मैव प्राचीनपुण्यराज्यमासादयति तस्मिन् वर्त्तमानस्य सद्यःशौचमुपदिश्यते नतु राज्यप्रच्युतस्य क्षत्रियजातेरपि अत्र जातिरविवक्षिता इत्यनेन श्लोकेन दर्शितं यतोन्यायनिरूपणेन दुर्भिक्षेऽन्नदानेनापसर्गेषु शान्तिहोमादिना प्रजारक्षार्थं राज्यासनेप्वत्रस्थानमशौचाभावेकारणं तस्याक्षत्रियाणामपि तत्कार्य्यकारिणां विप्रवैश्यशूद्राणामविशिष्टं अतएव सोमकार्य्यकारिणि फलचमसे सोमधर्म्मा अतएव व्रीहिधर्म्मान्विततया अवहननप्रघातादि तत्कार्य्यकारित्वस्य विवक्षितत्वात्प्रकृतौ यवे विकृतौ च नीवारादौ सम्बध्यतइति कर्म्ममीमांसायां तत्तदधिकरणेषु निरणायि ॥ ९४ ॥

डिम्बाहवहतानाञ्च विद्युता पार्थिवेन च ।
गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः ॥ ९५ ॥

डिम्बाहवेति । डिम्बाहवोनृपरहितयुद्धं तत्र हतानां विद्युता वज्रेण पार्थिवेन बधार्हेऽपराधे हते गोब्राह्मणरक्षणार्थं विनापि युद्धं जलाग्निव्याघ्रादिभिर्हतानां यस्य पुरोहितादेः

स्वकार्य्याविघातार्थं नृपतिरशौचाभावमिच्छति तस्यापि सद्यः शौचम् ॥ ९५ ॥

सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्य च।
अष्टानां लोकपालानां वपुर्धारयते नृपः ॥ ९६ ॥

सोमेति। चन्द्राग्निसूर्य्यवायुशक्रयमानां वित्तस्यापाञ्च पत्योः कुवेरवरुणयोरेवमष्टानां लोकपालानां सम्बन्धिदेहं राजा धारयति ॥ ९६ ॥

लोकेशाधिष्ठितोराजा नास्याशौचं विधीयते।
शौचाशौचं हि मर्त्यानां लोकेशप्रभवाप्ययं ॥ ९७ ॥

ततः किमतआह लोकेशेति। यतोलोकेशांशाक्रान्तोनृपतिरतोनास्याशौचमुपदिश्यते। यस्मान्मनुष्याणां यच्छौचमशौचं वा तल्लोकेशेभ्यः प्रभवति विनश्यति च। अप्ययोविनाशः। एतेनान्यदीयशौचाशौचोत्पादनविनाशशक्तस्य लोकेश्वररूपस्य नृपतेः कुतः स्वकीयाशौचमिति पूर्व्वोक्ताशौचाभावस्तुतिः ॥ ९७ ॥

उद्यतैराहवे शस्त्रैः क्षत्रधर्म्महतस्य च। सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः॥ ९८॥

उद्यतैरिति। उद्यतैः शस्त्रैः खड्गादिभिर्नतु लगुडपाषाणादिभिरपराङ्मुखत्वादिक्षत्रियधर्म्मयुक्तस्य संग्रामे हतस्य तत्क्षणादेव ज्योतिष्टोमादियज्ञः सन्तिष्ठते समाप्तिमेति, तत्पुण्येन युज्यतइत्यर्थः। तथाशौचमपि तत्क्षणादेव समाप्तिमेति इयं शास्त्रमर्य्यादा॥ ९८॥

विप्रः शुध्यत्यपःस्पृष्ट्वा क्षत्रियोवाहनायुधम्। वैश्यः प्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः॥ ९९॥

विप्रइति। अशौचान्ते कृतश्राद्धादिकार्य्योब्राह्मणः अपः स्पृष्ट्वेति जलस्पर्शमात्रन्दक्षिणहस्तेन कृत्वा शुद्धोभवति नतु संवत्सरे व्यतीते तु स्पृष्ट्वापोविशुध्यतीतिवत् स्नात्वा वाहनादिस्पर्शसाहचर्य्यात् स्पृष्ट्वेत्यस्य च सकृदुच्चरितस्यार्थभेदस्यान्याय्यत्वात् क्षत्रियोहस्त्यादिवाहनं खड्गाद्यस्त्रञ्च वैश्योवलीवर्दादिप्रतोदं लोहप्रोताग्रं योक्त्रं वा शूद्रोयष्टिं वंशदण्डिकाम् ॥ ९९॥

एतद्वोऽभिहितं शौचं सपिण्डेषु द्विजोत्तमाः
असपिण्डेषु सर्व्वेषु प्रेतशुद्धिं निबोधत ॥ १०० ॥

एतदिति। भो द्विजश्रेष्ठा एतच्छौचं सपिण्डेषु प्रेतेषु युष्माकमुक्तम्। इदानीमसपिण्डेषु प्रेतशुद्धिं शृणुत ॥ १०० ॥

असपिण्डं द्विजम्प्रेतं विप्रो निर्हृत्य बन्धुवत्। विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥ १०१ ॥

असपिण्डमिति। असपिण्डं ब्राह्मणं मृतं ब्राह्मणो बन्धुवत् स्नेहानुबन्धेन नलहंस्वबुद्ध्येत्यर्थादुक्तं मातुश्चाप्तान् सन्निकृष्टान् सहोदरभ्रातृभगिन्यादीन् बान्धवान्निर्हृत्य त्रिरात्रेण शुद्धो भवति ॥ १०१ ॥

यद्यन्नमत्ति तेषान्तु दशाहेनैव शुध्यति
अनदन्नन्नमह्नैव नचेत्तस्मिन् गृहे वसेत् ॥ १०२ ॥

यद्यन्नमिति। निर्हारकोयदि तेषां मृतस्य सपिण्डानां अशौचिनामन्नमश्नाति तदा तद्दशाहेनैव शुध्यति न त्रिरात्रेण अथ

तेषामन्नं नाश्नाति गृहेच तेषां न वसति निर्हरति च तदाहो रात्रेणैव शुध्यति एवञ्च तद्गृहवासे सति तदन्नाभोजिनोनिर्हारकस्य पूर्वोक्तस्त्रिराचम्॥ १०२ ॥

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा।
स्नात्वा सचेलः स्पृष्ट्वाग्निं घृतम्प्राश्य विशुध्यति ॥ १०३ ॥

अनुगम्येति। ज्ञातिमज्ञातिं वा मृतमिच्छातोऽनुगम्य सचेलस्नानञ्च कृत्वा ततोऽग्निं स्पृष्ट्वा पश्चाद्घृतप्राशनं कृत्वा अनुगमननिमित्ताशौचाद्विशुध्यति ॥ १०३ ॥

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत्। अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता ॥ १०४ ॥

न विप्रमिति। ब्राह्मणादिमृतं समानजातीयेषु स्थितेषु न शूद्रेण पुत्रादिर्निर्हारयेत्। यस्मात्सा शरीराहुतिः शूद्रस्पर्शदुष्टा सती मृतस्य स्वर्गाय हिता न भवति मृतं स्वर्गं न प्रापयतीत्यर्थः। स्वेषु तिष्ठत्स्वित्यभिधानात् ब्राह्मणाभावे क्षत्रियेण तदभावे वैश्येन तदभावे शूद्रेणापि निर्हारयेदित्युक्तं यथापूर्व्वं श्रेष्ठत्वादस्वर्ग्यदोषश्च ब्राह्मणादिसद्भावे शूद्रेण

स्वकार्य्याविघातार्थं नृपतिरशौचाभावमिच्छति तस्यापि सद्यः शौचम् ॥ ९५ ॥

सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्य च।
अष्टानां लोकपालानां वपुर्धारयते नृपः ॥ ९६ ॥

सोमेति। चन्द्राग्निसूर्य्यवायुशक्रयमानां वित्तस्यापाञ्च पत्योः कुवेरवरुणयोरेवमष्टानां लोकपालानां सम्बन्धिदेहं राजा धारयति ॥ ९६ ॥

लोकेशाधिष्ठितोराजा नास्याशौचं विधीयते।
शौचाशौचं हि मर्त्यानां लोकेशप्रभवाप्ययं ॥ ९७ ॥

ततः किमत आह लोकेशेति। यतोलोकेशांशाक्रान्तोनृपतिरतोनास्याशौचमुपदिश्यते। यस्मान्मनुष्याणां यच्छौचमशौचं वा तल्लोकेशेभ्यः प्रभवति विनश्यति च। अप्ययोविनाशः। एतेनान्यदीयशौचाशौचोत्पादनविनाशशक्तस्य लोकेश्वररूपस्य नृपतेः कुतः स्वकीयाशौचमिति पूर्व्वोक्ताशौचाभावस्तुतिः ॥ ९७ ॥

उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च । सद्यः
सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः ॥ ९८ ॥

उद्यतैरिति । उद्यतैः शस्त्रैः खड्गादिभिर्नतु लगुडपाषाणादिभिरपराङ्मुखत्वादिक्षत्रियधर्मयुक्तस्य संग्रामे हतस्य तत्क्षणादेव ज्योतिष्टोमादियज्ञः सन्तिष्ठते समाप्तिमेति, तत्पुण्येन युज्यत इत्यर्थः । तथाशौचमपि तत्क्षणादेव समाप्तिमेति इयं शास्त्रमर्य्यादा ॥ ९८ ॥

विप्रः शुध्यत्यपःस्पृष्ट्वा क्षत्रियोवाहनायुधम् । वैश्यः
प्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः ॥ ९९ ॥

विप्र इति । अशौचान्ते कृतश्राद्धादिकार्य्यो ब्राह्मणः अपः स्पृष्ट्वेति जलस्पर्शमात्रन्दक्षिणहस्तेन कृत्वा शुद्धो भवति नतु संवत्सरे व्यतीते तु स्पृष्ट्वापो विशुध्यतीतिवत् स्नात्वा वाहनादिस्पर्शसाहचर्य्यात् स्पृष्ट्वेत्यस्य च सकृदुच्चरितस्यार्थभेदस्यान्याय्यत्वात् क्षत्रियो हस्त्यादिवाहनं खड्गाद्यस्त्रञ्च वैश्यो वलीवर्दादिप्रतोदं लोहप्रोताग्रं योत्क्रं वा शूद्रोयष्टिं वंशदण्डिकाम्
॥ ९९ ॥

एतद्वोऽभिहितं शौचं सपिण्डेषु द्विजोत्तमाः।
असपिण्डेषु सर्व्वेषु प्रेतशुद्धिं निबोधत ॥ १०० ॥

एतदिति। भो द्विजश्रेष्ठा एतच्छौचं सपिण्डेषु प्रेतेषु युष्माकमुक्तम्। इदानीमसपिण्डेषु प्रेतशुद्धिं शृणुत ॥ १०० ॥

असपिण्डं द्विजम्प्रेतं विप्रो निर्हृत्य बन्धुवत्। विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥ १०१ ॥

असपिण्डमिति। असपिण्डम्ब्राह्मणं मृतं ब्राह्मणो बन्धुवत् स्नेहानुबन्धेन नतु दृष्टबुद्ध्येत्यर्थात्तद्वक्तं मातुश्चाप्तान् सन्निकृष्टान् सहोदरभ्रातृभगिन्यादीन् बान्धवान्निर्हृत्य त्रिरात्रेण शुद्धो भवति ॥ १०१ ॥

यद्यन्नमत्ति तेषान्तु दशाहेनैव शुध्यति।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥ १०२ ॥

यद्यन्नमिति। निर्हारको यदि तेषां मृतस्य सपिण्डानां अशौचिनामन्नमश्नाति तदा तद्दशाहेनैव शुध्यति न त्रिरात्रेण अथ

तेषामन्नं नाश्नाति गृहेच तेषां न वसति निर्हरति च तदाहो रात्रेणैव शुध्यति एवञ्च तद्गृहवासे सति तदन्नाभोजिनोनि र्हारकस्य पूर्वोक्तत्रिरात्रम् ॥ १०२ ॥

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा।
स्नात्वा सचेलः स्पृष्ट्वाग्निं घृतम्प्राश्य विशुध्यति ॥ १०३ ॥

अनुगम्येति। ज्ञातिमज्ञातिं वा मृतमिच्छातोऽनुगम्य सचे लस्नानञ्च कृत्वा ततोऽग्निं स्पृष्ट्वा पश्चाद्घृतप्राशनं कृत्वा अनुग मननिमित्ताशौचाद्विशुध्यति ॥ १०३ ॥

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत्। अस्व र्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता ॥ १०४ ॥

न विप्रमिति। ब्राह्मणादिमृतं समानजातीयेषु स्थितेषु न शूद्रेण पुत्रादिर्निर्हारयेत्। यस्मात्सा शरीराहुतिः शूद्र स्पर्शदुष्टा सती मृतस्य स्वर्गाय हिता न भवति मृतं स्वर्गं न प्राप यतीत्यर्थः। स्वेषु तिष्ठत्स्वित्यभिधानात् ब्राह्मणाभावे चत्रि येण तदभावे वैश्येन तदभावे शूद्रेणापि निर्हारयेदित्युक्तं यथापूर्व्वं श्रेष्ठत्वादस्वर्ग्यदोषस्य ब्राह्मणादिसद्भावे शूद्रेण

निर्द्धारणे सति बोद्धव्यः। गोविन्दराजस्तु दोषनिर्देशात् स्वेषु तिष्ठत्स्वित्यविवक्षितमित्याह। तदयुक्तम्। सम्भवदर्थपदद्वयोच्चारणवैयर्थ्यप्रसङ्गात् उपक्रमावगतेश्च वेदादितन्यायेनानुबोध्यत्वाद्गुणभूतशुद्ध्यनुरोधेन प्रधानभूताया आहुतेरुपेक्षायां गुणलोपे न मुख्यस्येत्यपि न्यायो बाध्येत। तस्मात् स्वेषु तिष्ठत्स्विति पदद्वितयं न विवक्षितम्। इमां गोविन्दराजस्य राजाज्ञां नाद्रियामहे ॥ १०४ ॥

ज्ञानन्तपोऽग्निराहारो मृन्मनो वार्य्युपाञ्जनम्। वायुः कर्मार्ककालौ च शुद्धेः कर्त्तॄणि देहिनां ॥ १०५ ॥

ज्ञानमिति। ज्ञानादीनि शुद्धेः साधनानि भवन्ति। तत्र ब्रह्मज्ञानं बुद्धिरूपान्तःकरणशुद्धेः साधनं यथावक्ष्यति बुद्धिर्ज्ञानेन शुध्यति। तपो यथा तपसा वेदवित्तमाः। अग्निर्यथा पुनःपाकेन मृण्मयम्। आहारो यथा हविष्येण यवाम्वा इति। मृदादिर्यथा मृद्वार्य्यादेयमर्थवदिति। मनो यथा मनःपूतं समाचरेदिति सङ्कल्पविकल्पात्मकं मनो निश्चयात्मिका बुद्धिरिति मनोबुद्ध्योर्भेदः। उपाञ्जनमुपलेपनं यथा मार्जनोपाञ्जनैर्वेश्म। कर्म यथा यजेत वाऽश्वमेधेन इत्यादि। अर्को यथा गोरजःस्पर्शार्कंसौर्य्य वा। कालो यथा शुद्धिर्दशाहेन। वायोस्तु शुद्धिहेतुत्वं मनुनानुक्तमपि पन्थानश्च विशुध्यन्ति सोमसूर्य्यांशुमारुतैरिति विष्णवादावुक्तं ग्राह्यम् ॥ १०५ ॥

सर्व्वेषामेव शौचानामर्थशौचम्परं स्मृतम्। योऽर्थे शुचिर्हि सशुचिर्न मृद्वारिशुचिः शुचिः॥ १०६॥

सर्व्वेषामेवेति। सर्वेषां मृद्वारिनिमित्तदेहशौचमनःशौचादीनां मध्यादर्थशौचं अन्यायेन परधनग्रहणपरीहारेण यद्भवेत् तत्परं प्रकृष्टं मन्वादिभिः स्मृतं यस्माद्योऽर्थे शुद्धः सशुद्धोभवति। यः पुनर्मृद्वारिशुचिरर्थेचाशुद्धः सोऽशुद्ध एव॥ १०६॥

क्षान्त्या शुध्यन्ति विद्वांसो दानेनाकार्य्यकारिणः। प्रच्छन्नपापाजप्येन तपसा वेदवित्तमाः॥ १०७॥

क्षान्त्येति। परेणापकारे कृते तस्मिन् प्रत्यपकारबुद्ध्यनुत्पत्तिरूपया क्षान्त्या पण्डिताः शुध्यन्ति यथा च वक्ष्यति। महायज्ञक्रियाः क्षमानाशयन्त्याशु पापानीति। अकार्यकारिणो दानेन। यथा वक्ष्यति सर्व्वस्वं वा वेदविदे ब्राह्मणायेति। असख्यातपापाजप्येन यथा वक्ष्यति जपंस्त्रपत्रसंहिर्नसिति। वेदवित्तमाः वेदार्थचान्द्रायणादितपोविदः। तपसैत्येकादशाध्याये वक्ष्यमाणेन॥ १०७॥

मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः॥१०८॥

मृत्तोयैरिति। मलाद्युपहतं शोधनीयं मृज्जलैः शोध्यते नदी प्रवाहस्य श्लेष्माद्यशुचिदूषितो वेगेन शुध्यति। स्त्री च परपुरुषमैथुनसंकल्पादिदूषितमानसा प्रतिमासार्त्तवेन तस्मात्पापाच्छुद्धा भवति ब्राह्मणस्य सन्न्यासेन षष्ठाध्यायाभिधेयेन पापाच्छुध्यति॥१०८॥

अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति।
विद्यातपोभ्याम्भूतात्मा बुद्धिर्ज्ञानेन शुध्यति॥१०९॥

अद्भिरिति। स्वेदाद्युपहतान्यङ्गानि जलेन क्षालितानि शुध्यन्ति मनश्च निषिद्धचिन्तादिना दूषितं सत्याभिधानेन शुध्यति भूतात्मा सूक्ष्मादिलिङ्गशरीरावच्छिन्नो जीवात्मा ब्रह्मविद्यया पापक्षयहेतुतपसा च शुद्धो भवति शुद्धः परात्मरूपेणावतिष्ठते बुद्धिश्च विपर्ययज्ञानोपहता यथार्थविषयज्ञानेन शुध्यति॥१०८॥

एष शौचस्य वः प्रोक्तः शारीरस्य विनिर्णयः।
नानाविधानान्द्रव्याणां शुद्धेः शृणुत निर्णयं॥११०॥

एष इति। अयं शरीरसम्बन्धिनः शौचस्य युष्माकं निश्चय उक्तः इदानीं नानाप्रकारद्रव्याणां येन यच्छुध्यति तस्य निर्णयं शृणुत॥११०॥

तैजसानां मणीनाञ्च सर्व्वस्याश्ममयस्य च। भस्म
नाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः॥ १११॥

तैजसेति। तैजसानां सुवर्णादीनां मरकतादिमणीनां पाषाणमयस्य च सर्वस्य भस्मना जलेन मृत्तिकया च मन्वादिभिः शुद्धिरुक्ता। निर्लेपस्य जलेनैवानन्तरं शुद्धेर्वक्ष्यमाणत्वात् इदमुच्छिष्टघृतादिलिप्तविषयं तत्र मृद्भस्मनोर्लेपगन्धापकर्षकार्थत्वाद्विकल्पः। आपस्तूभयत्र समुच्चीयन्ते॥ १११॥

निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति। अब्ज
मश्ममयञ्चैव राजतञ्चानुपस्कृतम्॥ ११२॥

निर्लेपमिति। [illegible] दिलेपरहितं सौवर्णभाण्डं जलभवञ्च शङ्खमुक्तादि पाषाणमयञ्च राजतञ्चानुपस्कृतं रेखादिगुणान्तराधानरहितं तथाविधमलासम्भवाज्जलेनैव भस्मादिरहितेन शुध्यति॥ ११२॥

अपामग्नेश्च संयोगाद्धैमं रूप्यञ्च निर्बभौ। तस्मा
त्तयोः स्वयोन्यैव निर्णेको गुणवत्तरः॥ ११३॥

अपामग्नेरिति। अग्निर्वै वरुणादीनकामयत इत्यादिवेदे श्रूयते तथाग्नेः सुवर्णमिन्द्रियं वरुणादीनां रजतमित्यादि

अग्निस्वरूपापःसंयोगात्सुवर्णं रजतञ्चोद्भूतं यस्मादतस्तयोः स्वेन कारणेनैव जलेनात्यन्तोपघातेनाग्निना निर्णेकः शुद्धिहेतुः। गुणवत्तरः प्रशस्ततरः ॥ ११३ ॥

ताम्रायःकांस्यरैत्यानान्त्रपुणः सीसकस्य च।
शौचं यथार्हं कर्त्तव्यं क्षाराम्लोदकवारिभिः ॥११४॥

ताम्रायइति। अयोलौहं रीतिः पित्तलं तद्भवस्यापि रैत्यं त्रपुरङ्गं एषां भस्माम्लोदकैः शोधनं कर्त्तव्यं यथार्हं यस्य यद्धेति। अत्मना हैरण्याय: कांस्यं शुध्यति भस्मना। अम्लैस्ता म्रञ्च रैत्यञ्च पुनःपाकेन मृण्मयमिति वृहस्पत्यादिवचनादिशेषोऽत्र बोद्धव्यः ॥ ११४ ॥

द्रवाणाञ्चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम्। प्रोक्षणं संहतानाञ्च दारवाणाञ्च तक्षणम् ॥ ११५ ॥

द्रवाणाञ्चेति। द्रवाणां घृततैलानां काककीटाद्युपहतानां बौधायनादिवचनात्प्रस्थतिमात्रप्रमाणानामादेशप्रमाणकुशपत्रद्वयाभ्यां उत्पवनेन शुद्धिः। संहतानाञ्च शय्यादीनामुच्छिष्टाद्युपघाते प्रोक्षणं। दारवाणां चात्यन्तोपघाते तक्षणेन ॥११५॥

मार्ज्जनं यज्ञपात्राणाम्पाणिना यज्ञकर्म्मणि।
चमसानां ग्रहाणाञ्च शुद्धिः प्रक्षालनेन तु ॥११६॥

मार्ज्जनमिति। चमसानां ग्रहाणां चान्येषां यज्ञपात्राणा मूर्ध्वम्पाणिना मार्जनं कार्य्यं पश्चात्प्रक्षालनेन यज्ञे कर्त्तव्ये शुद्धि र्भवति ॥ ११६ ॥

चरूणां स्रुक्स्रुवाणाञ्च शुद्धिरुष्णेन वारिणा।
स्फ्यशूर्पशकटानाञ्च मुषलोलूखलस्य च ॥११७॥

चरूणामिति। स्नेहाक्तानाञ्चरुस्रुगादीनां उष्णजलेन शुद्धिः। स्नेहाद्ययुक्तानान्तु जलमात्रेणैव शुद्धिर्यज्ञार्थं॥ ११७ ॥

अद्भिस्तु प्रोक्षणं शौचम्बहूनान्धान्यवाससां।
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥ ११८ ॥

अद्भिस्त्विति। बहूनान्धान्यानां वस्त्राणाञ्च चाण्डालाद्युपघाते जलेन प्रोक्षणाच्छुद्धिः। बहुत्वञ्च पुरुषभारहार्य्याधिकत्वमिति व्याचक्षते। तदल्पानान्तु प्रक्षालनाच्छुद्धिर्मन्वादिभिरुपदिश्यते॥ ११८ ॥

चेलवच्चर्म्मणां शुद्धिर्वैदलानान्तथैव च। शाक मूलफलानाञ्च धान्यवच्छुद्धिरिष्यते ॥ ११९ ॥

चेलवदिति। स्पृश्यपशुचर्म्मणां वंशादिदलनिर्म्मितानाञ्च वस्त्रवच्छुद्धिर्भवति शाकमूलफलानाञ्च धान्यवच्छुद्धिः ॥ ११९ ॥

कौषेयाविकयोरूषैः कुतपानामरिष्टकैः। श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥ १२० ॥

कौषेयेति। कृमिकोषोद्भवस्य वस्त्रस्य मेषादिलोमप्रभवस्य च कम्बलादेः ऊषैः क्षारमृत्तिकाभिः। कुतपानां नैपालकम्बलानां अरिष्टकैः अरिष्टचूर्णैः अंशुपट्टानां पट्टशाटकानां विल्वफलैः। क्षौमाणां दुकूलानां क्षुमावल्कलभवानां वस्त्राणान्तु पिष्टश्वेतसर्षपप्रक्षालनाच्छुद्धिः ॥ १२० ॥

क्षौमवच्छङ्खशृङ्गाणामस्थिदन्तमयस्य च। शुद्धिर्विजानता कार्य्या गोमूत्रेणोदकेन वा ॥ १२१ ॥

क्षौमवदिति। शङ्खस्य पशुशृङ्गाणां स्पृश्यपश्वस्थिभवस्य गजादिदन्तस्य च क्षौमवत्पिष्टश्वेतसर्षपकल्केन गोमूत्रजलयोरन्यतरयुक्तेन शास्त्रविदा शुद्धिः कर्त्तव्या ॥ १२१ ॥

प्रोक्षणात्तृणकाष्ठञ्च पलालञ्चैव शुध्यति। मार्ज्जनोपाञ्जनैर्वेश्म पुनःपाकेन मृण्मयम्॥ १२२॥

प्रोक्षणात्तृणकाष्ठञ्चेति। तृणकाष्ठपलालञ्च चाण्डालादिस्पर्शदूषितम्प्रोक्षणेन शुध्यति। तृणपलालमाहृचर्य्यादिदमिन्धनादिकाष्ठविषयम्। दारवाणाञ्च तक्षणमिति निर्मितदारुमयगृहपात्रविषयम्। गृहमुदक्यानिवासादिदूषितम् मार्जनगोमयाद्युपलेपनेन मृण्मयभाण्डमुच्छिष्टादिस्पर्शदूषितम्पुनःपाकेन शुध्यति॥ १२२॥

मद्यैर्मूत्रैः पुरीषैर्व्वा ष्ठीवनैः पूयशोणितैः। संस्पृष्टं नैव शुद्ध्येत पुनःपाकेन मृण्मयम्॥ १२३॥

मद्यैरिति। मद्यादिभिस्संस्पृष्टं मृण्मयपात्रम्पुनःपाकेनापि न शुद्ध्यति ष्ठीवनं श्लेष्मा पूयं शोणितविकारः॥ १२३॥

सम्मार्जनोपाञ्जनेन सेकेनोल्लेखनेन च। गवाञ्च परिवासेन भूमिः शुद्ध्यति पञ्चभिः॥ १२४॥

सम्मार्जनेति। अवकरशोधनेन गोमयाद्युपलेपनेन गोमूत्रोदकादिसेकेन खात्वा कतिचिन्मृदपनयनेन गवां अहो

रात्रनिवासेन पञ्चभिरेकैवभूमिः शुद्ध्यति। एषाञ्चोच्छिष्ट मूत्रपुरीषचण्डालनिवासाद्युपघातगौरवलाघवाभ्यां समुच्चय विकल्पाववगन्तव्यौ ॥ १२४ ॥

पक्षिजग्धं गवा घ्रातमवधूतमवक्षुतम्। दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुद्ध्यति ॥ १२५ ॥

पक्षिजग्धं गवा घ्रातमिति। भक्ष्यपक्षिभिर्नतु काकगृध्रादिभिः कश्चिद्भागो यस्य भक्षितः गवा यस्य घ्राणं कृतं पदा वा वधूननमुपरिकृतक्षुतं केशकीटदूषितं जग्धशब्दलिङ्गादन्नमत्र मृत्प्रक्षेपेण शुद्ध्यति ॥ १२५ ॥

यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः। तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु ॥ १२६ ॥

यावदिति। विष्ठादिलिप्ताद्द्रव्याद्यावन्नात्सम्बन्धिनौ गन्धलेपौ निवृत्तः तावद्द्रव्यमुद्धृत्य मृद्वारि प्रक्षिप्य ग्रहीतव्यम्। यत्र वसा मज्जादौ मृदा शुद्धिस्तत्र मृत्सहितजलग्रहणं कर्त्तव्यं यत्र कर्णमलादौ जलेनैव शुद्धिस्तत्र जलमात्रमित्यवगन्तव्यम् ॥ १२६ ॥

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते॥१२७॥

त्रीणिदेवा इति। केनापि प्रकारेणादृष्टोपघातहेतुसंसर्गम दृष्टं संजातोपघातशङ्कायाञ्जलेन प्रक्षालितम्। तदाह हारीतः यच्चन्मीमांस्यं स्यात्तत्तदद्भिः स्पर्शाच्छुद्धं भवति। उपघातशङ्कायामेव पवित्रम्भवत्विति ब्राह्मणवाचा यत् प्रशस्यते। तानि त्रीणि पवित्राणि देवाः ब्राह्मणानां कल्पितवन्तः ॥१२७॥

आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत्।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः॥१२८॥

आपःशुद्धा इति। यत्परिमाणास्वप्सु गौः पिपासाविच्छेदी भवति ता आपो गन्धवर्णरसशालिन्यः सत्यः यद्यमेध्यलिप्ता न भवन्ति तदा विशुद्धभूमिगता विशुद्धाः स्युः। भूमिगता इति विशुद्ध भूमि सम्बन्धप्रदर्शनाय नत्वन्तरीक्षगतानां निवृत्त्यर्थं॥१२८॥

नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम्।
ब्रह्मचारिगतम्भैक्ष्यं नित्यमेध्यमिति स्थितिः॥१२९॥

नित्यं शुद्ध इति। कारोर्मालाकारादेर्देवब्राह्मणाद्यर्थेपि माल्यादिग्रथने द्रव्यप्रयोजनाद्यपेक्षया शुद्धिविशेषाकरणेपि

स्वभावादेव हस्तः सर्व्वदा शुद्धः तथा जननमरणयोरपि स्वव्यापारे शुद्धः। नत्वशौचं कारूणां कारुकर्मणीति वच नात्। तथा यद्विक्रेतव्यम्पण्यवीथिकायाम्प्रसारितं नापणीय मन्नमस्पृश्योयादिति शङ्खवचनात् सिद्धान्नव्यतिरिक्तं तदनेक क्रेतृकरस्पर्शेऽपि शुद्धमेव तथा ब्रह्मचार्य्यादिगतभैक्ष्यमना चान्तस्त्रीदत्तमपि रथ्यादिक्रमणेऽपि सर्व्वदा शुद्धमिति शास्त्र मर्य्यादा॥ १२९॥

नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने।
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः॥ १३०॥

नित्यमास्यमिति। सर्व्वदा स्त्रीणां मुखं शुचितथा काकादि पक्षिणाञ्चञ्चूपघातपतितम्फलं शुचि वत्समुखञ्च दोहनसमये क्षीरप्रक्षरणे शुचि श्वा च यदा मृगादीन् हन्तुं गृह्णाति तदा तत्र व्यापारे शुचिः स्यात्॥ १३०॥

श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत्। क्रव्या द्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः॥ १३१॥

श्वभिरिति। कुक्कुरैर्हतस्य मृगादेर्यन्मांसं तत् शुचि मनुर बोचत्। तच्छ्राद्धाद्यतिथिभोजनादावेव द्रष्टव्यम्। अन्यैश्चाम

मांसादिभिर्ध्वांक्षश्वेनादिभिश्च व्याधादिभिश्च मृगबधजीविभिर्हतञ्च ॥ १३१ ॥

ऊर्द्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्व्वशः।
यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः॥ १३२॥

ऊर्द्ध्वं नाभेरिति। नाभेरुपरि यानीन्द्रियच्छिद्राणि तानि सर्व्वाणि पवित्राणि भवन्ति अतस्तेषां स्पर्शेनाशौचं यानि नाभेरधस्तान्यशुचीनि भवन्ति अधश्छिद्रेषु च बहुवचनं व्यक्तिबहुत्वापेक्षया। वक्ष्यमाणाश्च वसादयो देहमला देहान्निःसृता अशुद्धा भवन्ति ॥ १३२ ॥

मक्षिका विप्रुषश्छाया गौरश्वः सूर्य्यरश्मयः। रजो भूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत्॥ १३३ ॥

मक्षिकेति। मक्षिका अमेध्यस्पर्शिन्योऽपि विप्रुषा मुखनिःसृता अल्पा जलकणाः छायापतितादेरस्पृश्यस्यापि गवादीनि चाग्निपर्य्यन्तानि चण्डालादिस्पृष्टानि स्पर्शे शुचीनि जानीयात् ॥ १३३ ॥

विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्य्यादेयमर्थवत् ।
दैहिकानां मलानाञ्च शुद्धिषु द्वादशस्वपि ॥ १३४ ॥

विण्मूत्रेति । विण्मूत्रमुत्सृज्यते येन स विण्मूत्रोत्सर्गः पाय्वादिस्तस्य शुद्ध्यर्थं मृद्वारि गृहीतव्यं अर्थवत्प्रयोजनवत् यावता गन्धलेपक्षयो भवति तथा शारीराणां वसादिमलानां सम्बन्धिषु द्वादशस्वपि गन्धलेपक्षयार्थं मृद्वारि ग्राह्यं तत्र मूत्र्यन्तरात्पूर्व्वषट्के मृज्जलग्रहणं उत्तरषट्के जलमात्रग्रहणं । तदाह बोधायनः । आददीत मृदोऽपश्च षट्सु पूर्व्वेषु शुद्धये । उत्तरेषु च षट्स्वद्भिः केवलाभिर्विशुध्यति । ततश्च द्वादशस्वपीति मानवं मृद्वारिग्रहणवचनं व्यवस्थया मृद्वारिणोर्ग्रहणं इति न विरुध्यते । गोविन्दराजस्तु मनुबौधायनवचनसन्दर्शनादुत्तरषट्केऽपि विकल्पमाह । स च व्यवस्थितो दैवपित्र्याद्यदृष्टकर्म्मप्रवृत्ते उत्तरेष्वपि मृदमादद्यान्नान्यदा ॥ १३४ ॥

वसा शुक्रमसृङ्मज्जा मूत्रविट्घ्राणकर्णविट् ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥ १३५ ॥

वसेति । वसा कायस्नेहः शुक्रं रेतः असृक् रक्तं मज्जा शिरोमध्ये पिण्डितस्नेहः । दूषिका अक्षिमलः स्वेदः श्रमादिना देहनिःसृतञ्जलम् । वसादयो द्वादश नराणां दैहिका मला भवन्ति ॥ १३५ ॥

एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश। उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥ १३६ ॥

एकालिङ्ग इति। मूत्रपुरीषोत्सर्गे सति शुद्धिमभीप्सता गृद्यावार्यादेयमर्थवदित्युक्तत्वाज्जलसहिता मृदेका लिङ्गे दातव्या गुदे तिस्रो मृदः तथैकस्मिन् करे वामे। शौचविद्दक्षिणं हस्तं नाधःशौचे नियोजयेत्। तथैव वामहस्तेन नाभेरूर्द्ध्वं न शोधयेदिति देवलवचनात्तस्यैवाधःशौचसाधनत्वात् तत्रैव दश मृदो दातव्याः तत उभयोः करयोः सप्त दातव्याः यदात्र शौचेनापि गन्धलेपक्षयो न भवति तदा यावन्नापैत्यमेध्याक्ता दिति वचनादधिकसङ्ख्या अपि मृद्दातव्या एतद्विषयाण्येव मुनीना मधिकमृत्सङ्ख्यावचनानि। मृत्परिमाणमाह दक्षः। लिङ्गेपि मृत्समाख्याता त्रिपर्व्वी पूर्य्यते यया। द्वितीया च तृतीया च तदर्द्धार्द्धाः प्रकीर्त्तिता इति। यदात्र क्रमसङ्ख्यायाश्चेनापि गन्धलेपक्षयो भवति तदा सङ्ख्यावाक्यारम्भमाकर्ष्यासङ्ख्यापूरयितव्यैव ॥ १३६ ॥

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणां। त्रिगुणं स्याद्वनस्थानां यतीनान्तु चतुर्गुणम् ॥ १३७ ॥

एतच्छौचमिति। एकालिङ्ग इत्यादि यच्छौचमुक्तं तद्गृहस्थानामेव ब्रह्मचारिणां द्विगुणं वानप्रस्थानान्त्रिगुणं यतीनाम्पुनश्चतुर्गुणम् ॥ १३७ ॥

कृत्वा मूत्रं पुरीषं वा खान्याचान्त उपस्पृशेत् ।
वेदमध्येष्यमाणश्च अन्नमश्नंश्च सर्व्वदा ॥ १३८ ॥

कृत्वेति । मूत्रपुरीषं कृत्वा कृतयथोक्तशौचस्त्रिराचामान्त इन्द्रियच्छिद्राणि शीर्षाण्यन्याणि च स्पृशेत् । वेदाध्ययनञ्चिकीर्षन् अन्नञ्च अश्नन् । यत्तु द्वितीयाध्याये अध्येष्यमाणस्त्वाचान्तो निवेद्य गुरवे शौचादाचम्येत्युभयमुक्तं तद्ग्रताङ्गत्वार्थम् । इहतु पुरुषार्थशौचायेत्यपुनरुक्तिः ॥ १३८ ॥

त्रिराचामेदपः पूर्व्वं द्विः प्रमृज्यात्ततो मुखं । शारीरं शौचमिच्छन् हि स्त्री शूद्रस्तु सकृत्सकृत् ॥ १३९ ॥

आचान्त इति यदुक्तन्तत्र विशेषमाह त्रिराचामेदिति । देहस्य शुद्धिमिच्छन् प्रथमं वारत्रयमपोभक्षयेत् । ततोद्विर्मुखं परिमृज्यात् । स्त्री शूद्रश्चैकवारमाचमनार्थमुदकम्भक्षयेत् ॥ १३९ ॥

शूद्राणां मासिकङ्कार्य्यं वपनं न्यायवर्त्तिनाम् ।
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टञ्च भोजनं ॥ १४० ॥

शूद्राणामिति । शूद्राणां कार्य्यमिति कृत्यानाङ्कर्त्तरिवेति कर्त्तरि षष्ठी । यथाशास्त्रव्यवहारिभिर्द्विजशुश्रूषकैः शूद्रैर्मासि

मासि मुण्डनङ्कार्य्यं वैश्यवच्च मृतसूतकादौ शौचकल्पोऽनुष्ठातव्यः द्विजोच्छिष्टञ्च भोजनं भुज्यतइति भोजनं कार्य्यमिति ॥ १४० ॥

नोच्छिष्टं कुर्व्वते मुख्याविप्रुषोऽङ्गे पतन्ति याः।
न श्मश्रूणि गतान्यास्यन्नदन्तान्तरधिष्ठितं ॥ १४१ ॥

नोच्छिष्टमिति। निष्ठीव्योत्क्रान्तानिचेति निष्ठीवनाचमनविधानाद्विप्रुषामपि मुखान्निःसरणं निष्ठीवनमेवेति प्रसक्तौ शुद्ध्यर्थमपवादमाह। मुखभवाविप्रुषोयाअङ्गे निपतन्ति ता उच्छिष्टं न कुर्व्वंति तथा श्मश्रुलोमानि मुखप्रविष्टानि नोच्छिष्टताञ्जनयन्ति दन्तावकाशस्थितञ्चान्नादि नोच्छिष्टं कुरुते।' अत्र गौतमीये विशेषः दन्तास्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्षणात्प्राक्च्युतेरित्येके च्युतेष्वास्रावद्विद्यान्निगिरन्नेव तच्छुचिः ॥ १४१ ॥

स्पृशन्ति विन्दवः पादौ यआचामयतः परान्।
भौमिकैस्ते समाज्ञेया न तैरप्रयतोभवेत् ॥ १४२ ॥

स्पृशन्तीति। अन्येषामाचमनार्थं जलं ददतोये विन्दवः पादौ स्पृशन्ति न जङ्घादि। विशुद्धभूमिष्ठोदकतुल्यास्तेन नाचमनार्होभवति। तदा तत्र च्यवनावस्थैरकृताचमनः शुद्ध्यति द्रव्यञ्च शुद्ध्यति ॥ १४२ ॥

उच्छिष्टेन तु संस्पृष्टोद्रव्यहस्तः कथञ्चन। अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्॥१४३॥

उच्छिष्टेनेति। द्रव्यहस्तपदेन शरीरसम्बन्धमात्रं द्रव्यस्य विवक्षितं आमेणिबन्धात्पाणिं प्रक्षाल्येति द्रव्यहस्तस्याचमनासम्भवात् स्कन्धादिस्थितद्रव्योयद्युच्छिष्टेन संस्पृष्टोभवति तदा तद्द्रव्यमनवस्थाप्यैव कृताचमनः शुध्यति। द्रव्यञ्च शुद्धं भवति॥१४३॥

वान्तोविरिक्तः स्नात्वा तु घनप्राशनमाचरेत्। आचामेदेव भुक्त्वान्नं स्नानं मैथुनिनः स्मृतम्॥१४४॥

वान्तइति। कृतवमनः सञ्जातविरेकः स्नात्वा घृतप्राशनं कुर्य्यात्। दशविरेकैर्विरिक्तइति गोविन्दराजः। यदि भुक्त्वा अनन्तरमेव वमति तदा आचमनमेव कुर्य्यान्न स्नानघृतप्राशने मैथुनञ्च कृत्वा स्नायात्। इदन्तु ऋतुनतीविषयम्॥१४४॥

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च। पीत्वापोऽध्येष्यमाणश्च आचामेत्प्रयतोपि सन्॥१४५॥

सुप्तेति। निद्राक्षुद्भोजनश्लेष्मनिरसनमृषावादजलपानादि कृत्वा अध्ययनं चिकीर्षुः शुचिरप्याचामेत्। यत्तु भुक्त्वा चोप

स्पृशेत्स्वयमिति तथा अध्येष्यमाणस्त्वाचान्तइति द्वितीयाध्या
योक्तं तद्व्रताङ्गत्वेन । इहतु भुक्त्वाचमनविधानं पुरुषार्थं अध्य
यनाङ्गतयाचमनविधानं गृहस्थादीनामपीति ॥ १४५ ॥

एष शौचविधिः कृत्स्नो द्रव्यशुद्धिस्तथैव च ।
उक्तो वः सर्व्ववर्णानां स्त्रीणान्धर्मान्निबोधत ॥ १४६ ॥

एषशौचविधिरिति । एष वर्णानाञ्जननमरणादौ दश
रात्रादिरशौचविधिः समग्रद्रव्याणां तैजसादीनाञ्जलादी
नाञ्च कर्माद्दीनां शुद्धिविधिर्युष्माकमुक्तः इदानीं स्त्रीणामनु
ष्ठेयं धर्मं शृणुत ॥ १४६ ॥

बालया वा युवत्या वा वृद्धयावापि योषिता ।
न स्वातन्त्र्येण कर्त्तव्यं किञ्चित्कार्य्यं गृहेष्वपि ॥ १४७ ॥

बालया वेति । बाल्ये यौवने वार्द्धके च वर्त्तमानया स्त्रिया
किञ्चित्सूक्ष्ममपि कार्य्यं भर्त्राद्यननुमतन्न स्वातन्त्र्येण कर्त्तव्य
मिति ॥ १४७ ॥

बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने । पुत्राणां
भर्त्तरि प्रेते न भजेत्स्त्री स्वतन्त्रतां ॥ १४८ ॥

किन्तुबाल्येपितुरिति । बाल्ये पितुर्वशे तिष्ठेत् यौवने भर्त्तुः
भर्त्तरि मृते पुत्राणान्तदभावे । तत्सपिण्डेषु चासत्सु पितृपक्षः

प्रभुः स्त्रियाः। पक्षद्वयावसाने तु राजा भर्त्ता स्त्रियामतद्गति। नारदवचनात्। ज्ञातिराजादीनामायत्ता स्यात्कदाचिन्न स्वतन्त्रा भवेत् ॥ १४८ ॥

पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः।
एषां हि विरहेण स्त्री गर्ह्ये कुर्य्यादुभे कुले ॥ १४९ ॥

पित्राभर्त्रेति। पित्रा पत्या पुत्रैर्वा नात्मनोविरहं कुर्य्यात्। यस्मादेषां वियोगेन स्त्री बन्धकीभावं गता द्वे पतिपितृकुले निन्दिते करोति ॥ १४९ ॥

सदा प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ १५० ॥

सदाप्रहृष्टेति। सर्व्वदा भर्त्तरि विरुद्धेपि प्रसन्नवदनया गृहकर्म्मणि चतुरया सुशोधितकुण्डकटाहादिगृहभाण्डया व्यये चातत्प्रदया स्त्रिया भवितव्यम् ॥ १५० ॥

यस्मै दद्यात्पिता त्वेनां भ्राता वानुमते पितुः।
तं शुश्रूषेत जीवन्तं संस्थितञ्च न लङ्घयेत् ॥ १५१ ॥

यस्मै दद्यादिति। यस्मै पिता एनां दद्यात्पितुरनुमत्या भ्राता वा तं जीवन्तं परिचरेत्। मृतञ्च नातिक्रामेत्।

व्यभिचारेण तदीयश्राद्धतर्पणादिविरहितया पारलौकिक हात्यखण्डनेन च ॥ १५१ ॥

मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः । प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥ १५२ ॥

मङ्गलार्थमिति । यदासां स्वस्त्ययनं शान्त्यर्थमन्त्रवचनादि रूपं यज्ञश्चासां प्रजापतियागः प्रजापत्युद्देशेनाज्यहोमात्मको विवाहेषु क्रियते तन्मङ्गलार्थमभीष्टसम्पत्त्यर्थं कर्म्म । यत्पुनःप्रथमप्रदानं वाग्दानात्मकं तदेव भर्त्तुः स्वाम्यजनकं ततश्च वाग्दानादारभ्य स्त्री भर्तृपरतन्त्रा तस्मात्तं शुश्रूषेतेति पूर्वोक्तशेषः । यत्तु नवमे वक्ष्यते तेषां निष्ठातु विज्ञेया विद्वद्भिः सप्तमे पदे इति तद्भार्य्यात्वसंस्कारार्थमित्यविरोधः ॥ १५२ ॥

अनृतावृतुकाले च मन्त्रसंस्कारकृत्पतिः । सुखस्य नित्यंदातेह परलोके च योषितः ॥ १५३ ॥

यतःअनृतावृतुकालइति । मन्त्रसंस्कारोविवाहः तत्कर्त्ता भर्त्ताऋतावुपेयात्सर्व्वत्र वा प्रतिषिद्धवर्जमिति गौतमवचनात् । ऋतुकाले अन्यदाच नित्यमिह लोके सुखस्य दाता तदाराधनेन च स्वर्गादिप्राप्तेः परलोकेऽपि सुखस्य दातेति ॥ १५३ ॥

विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः । उपचर्यः स्त्रिया साध्व्या सततन्देववत्पतिः ॥ १५४ ॥

तस्मात् विशील इति । सदाचारशून्यः स्त्र्यन्तरानुरक्तो वा विद्यादिगुणहीनो वा तथापि साध्व्या स्त्रिया देववत्पतिराराधनीयः ॥ १५४ ॥

नास्ति स्त्रीणाम्पृथग्यज्ञो न व्रतन्नाप्युपोषितम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ १५५ ॥

यस्माच्च नास्तिस्त्रीणामिति । यथा भर्तुः कस्याश्चित्पत्न्या रजोयोगादिना अनुपस्थितावपि पत्न्यन्तरेण यज्ञनिष्पत्तिः तथा न स्त्रीणां भर्त्रा विना यज्ञसिद्धिः । नापि भर्तुरनुमतिमन्तरेण व्रतोपवासौ किन्तु भर्तृपरिचर्ययैव स्त्री स्वर्गलोके पूज्यते ॥ १५५ ॥

पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिलोकमभीप्सन्ती नाचरेत्किञ्चिदप्रियं ॥ १५६ ॥

पाणिग्राहस्येति । पत्या सह धर्माचरणेन योजितः स्वर्गादिलोकः तमिच्छन्ती साध्वी स्त्री जीवतो वा मृतस्य वा भर्तुर्न किञ्चिदप्रियमर्जयेत् । मृतस्याप्रियं व्यभिचारेण विहितश्राद्ध [illegible] त्यसम्भवेपि ॥ १५६ ॥

कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। नतु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥१५७॥

कामन्त्विति। पुष्पमूलफलैः पवित्रैश्च देहं क्षपयेत् अल्पाहारेण क्षीणं कुर्य्यात्। नच भर्त्तरि मृते व्यभिचारधिया परपुरुषस्य नामाप्युच्चारयेत्॥१५७॥

आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी। योधर्म्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमं॥१५८॥

एवञ्च सति आसीतेति। क्षमायुक्ता नियमवती एकभर्त्तृकानां योधर्म्मः प्रकृष्टतमः तमिच्छन्ती मधुमांसमैथुनवर्ज्जनात्मकब्रह्मचर्य्यशालिनीमरणपर्य्यन्तं तिष्ठेत्। अपुत्रापि पुत्रार्थं न परपुरुषं सेवेत॥१५८॥

अनेकानि सहस्राणि कुमारब्रह्मचारिणाम्। दिवङ्गतानि विप्राणामकृत्वा कुलसन्ततिम्॥१५९॥

यस्मात् अनेकानीति। बाल्यतएव ब्रह्मचारिणामकृतदाराणां सनकबालखिल्यादीनां ब्राह्मणानामनेकानि सहस्राणि कुलवृद्ध्यर्थं सन्ततिमनुत्पाद्यापि स्वर्गं गतानि॥१५९॥

मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः॥ १६०॥

मृते भर्त्तरीति। साध्वाचारा स्त्री मृते भर्त्तरि अक्षतपुरुषान्तरमैथुना पुत्ररहितापि स्वर्गं गच्छति। यथा ते सनकबालखिल्यादयः पुत्रशून्याः स्वर्गं गताः॥ १६०॥

अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते। सेह
निन्दामवाप्नोति पतिलोकाच्च हीयते॥ १६१॥

अपत्यलोभाद्यात् स्त्रीति। पुत्रो मे जायतां तेन स्वर्गम्प्राप्स्यामीति लोभेन या स्त्री भर्त्तारमतिक्रम्य वर्त्तते व्यभिचरतीत्यर्थः सेह लोके गर्हां प्राप्नोति परलोकञ्च स्वर्गं तेन पुत्रेण न लभते॥ १६१॥

नान्योत्पन्ना प्रजास्तीह नचाप्यन्यपरिग्रहे। न
द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते॥ १६२॥

अत्रैव हेतुमाह। नान्योत्पन्नेति। यस्माद्भर्त्तृव्यतिरिक्तेन पुरुषेण उत्पन्ना सा प्रजा तस्याः शास्त्रीया न भवति नचान्य

पत्यामुत्पादिता उत्पादकस्य प्रजा भवति एतच्चानियोगो त्पादितविषयम्। वस्तुभर्तृकेयमिति लोकप्रसिद्धेः द्वितीयापि भर्त्तैव तस्मादन्योत्पादितत्वमतिसिद्धमित्याशङ्क्याह नेति लोके प्रसिद्धावपि साध्वाचाराणां न क्वचित्काले द्वितीयाभर्त्ता पदिश्यते। एवञ्च सति पुनर्भूत्वमपि प्रतिषिद्धम्॥ १६२॥

पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते। निन्द्यैव सा भवेल्लोके परपूर्व्वेति चोच्यते॥ १६३॥

पतिमिति। अपकृष्टं क्षत्रियादिकं स्वकीयं पतिं त्यक्त्वा उत्कृष्टं ब्राह्मणादिकं या आश्रयति सा लोके गर्हणीयैव भवति। परोऽन्यः पूर्व्वो भर्त्ता अस्या अभूदिति च लोकैरुच्यते ॥ १६३॥

व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम्। शृगालयोनिञ्चाप्नोति पापरोगैश्च पीड्यते॥ १६४॥

व्यभिचारफलमाह। व्यभिचारेति। परपुरुषोपभोगेन स्त्री इहलोके गर्हणीयतां लभते मृता च शृगालो भवति कुष्ठादि रोगैश्च पीड्यते॥ १६४॥

पतिं या नाभिचरति मनोवाग्देहसंयता। सा भर्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥१६५॥

पतिं येति। मनोवाग्देहसंयतेति विशेषणोपादानात् या मनोवाग्देहैरेव भर्त्तारं न व्यभिचरति सा भर्तृमात्रनिष्ठमनोवाग्देहव्यापारत्वाद्भर्त्रा सहार्जितान् लोकान् प्राप्नोति इह च शिष्टैः साध्वीत्युच्यते। वाङ्मनसाभ्यामपि पतिं न व्यभिचरेदिति विधानार्थी देहिकव्यभिचारनिवृत्तेरुक्तायाश्चाप्यनुवादः॥१६५॥

अनेन नारी वृत्तेन मनोवाग्देहसंयता। इहाग्र्यां कीर्त्तिमाप्नोति पतिलोकम्परत्र च ॥ १६६ ॥

अनेनेति। अनेन स्त्रीधर्मप्रकारेण उक्तेनाचारेण पतिशुश्रूषाभर्त्रव्यभिचारादिना मनोवाक्कायसंयता स्त्री इह लोके प्रकृष्टां कीर्त्तिं परत्र च पत्या सहार्जितञ्च स्वर्गादिलोकमाप्नोतीति प्रकरणार्थोपसंहारः॥१६६॥

एवं वृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम्। दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥१६७॥

एवंवृत्तामिति। द्विजातिः समानवर्णां यथोक्ताचारयुक्तां पूर्व्वमृतां भार्य्यां श्रौतस्मार्त्ताग्निभिर्यज्ञपात्रैश्च दाहधर्मज्ञो दाहयेत्॥१६७॥

भार्य्यायै पूर्वमारिण्यै दत्वाग्नीनन्त्यकर्म्मणि। पुन
र्दारक्रियां कुर्य्यात्पुनराधानमेव च ॥ १६८ ॥

भार्य्येति। पूर्वमृतायै अन्त्यकर्म्मणि दाहनिमित्तमग्नीन्स
मर्प्य गृहस्थाश्रममिच्छन् उत्पन्नपुत्रोऽनुत्पन्नपुत्रोवा पुनर्विवाहं
कुर्य्यात् स्मार्त्ताग्नीन् श्रौताग्नीन्वा आदध्यात् ॥ १६८ ॥

अनेन विधिना नित्यं पञ्चयज्ञान्न हापयेत्।
द्वितीयमायुषोभागं कृतदारोगृहे वसेत् ॥ १६९ ॥

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां
शौचविधिः पञ्चमोऽध्यायः ॥

अनेनेति। अनेन तृतीयाध्यायाद्युक्तविधिना प्रत्यहम्पञ्च
यज्ञान्न त्यजेत्। द्वितीयमायुर्भागं कृतदारपरिग्रहोऽनेनैव
यथोक्तविधिना गृहस्थविहितान्धर्म्मानिनुतिष्ठेत् गृहस्थधर्म्मत्वेपि
पञ्चयज्ञानां प्रकृष्टधर्म्मज्ञापनार्थं पृथङ्निर्देशः ॥ १६९ ॥

इति कुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां पञ्चमो
ऽध्यायः ॥

## ॥ ६ षष्ठोऽध्यायः ॥

एवं गृहाश्रमे स्थित्वा विधिवत्स्नातकोद्विजः।
वने वसेत्तु नियतोयथावद्विजितेन्द्रियः॥ १ ॥

एवमिति। आश्रमसमुच्चयपक्षाश्रितोद्विजातिः क्रमसमावर्त्तन उक्तप्रकारेण यथाशास्त्रं गृहाश्रममनुष्ठाय नियतः कृतनिश्चयोयथाविधानं वक्ष्यमाणधर्मेण यथार्हं विशेषेण जितेन्द्रियः परिपक्वकषायइत्यर्थः वानप्रस्थाश्रममनुतिष्ठेत्॥१॥

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्॥ २ ॥

गृहस्थस्त्विति। गृहस्थोयदात्मदेहस्य त्वक्शैथिल्यं केशधावल्यं पुत्रस्य पुत्रञ्च पश्यति तथाविधवयोवस्थया विगतविषयरागतया वानप्रस्थत्वार्थं वनमाश्रयेत्॥ २ ॥

सन्त्यज्य ग्राम्यमाहारं सर्व्वञ्चैव परिच्छदम्।
पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत्सहैव वा ॥ ३ ॥

सन्त्यज्येत्यादि। ग्राम्यं ब्रीहियवादिकभक्ष्यं सर्व्वञ्च गवाश्वशय्यासनादिपरिच्छदं परित्यज्य विद्यमानभार्य्यश्च वनवासमनिच्छन्तीं भार्य्यां पुत्रेषु समर्प्य इच्छन्त्या सहैव वनं गच्छेत्॥३॥

अग्निहोत्रं समादाय गृह्यञ्चाग्निपरिच्छदम्।
ग्रामादरण्यं निःसृत्य निवसेन्नियतेन्द्रियः ॥ ४ ॥

अग्निहोत्रमिति। श्रौताग्निं आवसथ्याग्निमभ्युपकरणञ्च स्रुक्स्रुवादि गृहीत्वा ग्रामादरण्यं निःसृत्य गत्वा संयतेन्द्रियः सन्निवसेत् ॥ ४ ॥

मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा। एतानेव महायज्ञान्निर्व्वपेद्विधिपूर्वकम् ॥ ५ ॥

मुन्यन्नैरिति। मुन्यन्नैर्नीवारादिभिर्नानाप्रकारैः पवित्रैः शाकमूलफलैर्वारण्योद्भवैरेतानेवेति गृहस्थस्य पूर्वोक्तान् महायज्ञान् यथाशास्त्रमनुतिष्ठेत् ॥ ५ ॥

वसीत चर्म्म चीरं वा सायं स्नायात्प्रगे तथा ।
जटांश्च विभृयान्नित्यं श्मश्रुलोमनखानि च ॥ ६ ॥

वसीतइति । मृगादिचर्म्म वस्त्रखण्डं वा आच्छादयेत् हारीतेन तु वल्कलशाली चर्म्मचीरकुशमुञ्जफलकवासाइति विदधता वल्कलादिकमप्यनुज्ञातम् । सायम्प्रातःस्नायात् जटाश्मश्रुलोमनखानि नित्यन्धारयेत् ॥ ६ ॥

यद्भक्ष्यं स्यात्ततो दद्याद्बलिम्भिक्षाञ्च शक्तितः ।
अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् ॥ ७ ॥

यद्भक्ष्यमिति । यद्भुञ्जीत ततोयथाशक्ति बलिम्भिक्षाञ्च दद्यात् बलिमितितु वैश्वदेवनित्यश्राद्धयोरुपलक्षणं एतानेव महायज्ञानिति विहितत्वात् आश्रमागतान् जलफलमूल भिक्षादानेन पूजयेत् ॥ ७ ॥

स्वाध्याये नित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः ।
दाता नित्यमनादाता सर्व्वभूतानुकम्पकः ॥ ८ ॥

स्वाध्यायइति । वेदाभ्यासे नित्ययुक्तःस्यात् शीतातपादिद्वन्द सहिष्णुः सर्व्वोपकारकः संयतमनाः सततन्दाता प्रतिग्रहनिवृत्तः सर्व्वभूतेषु कृपावान् भवेत् ॥ ८ ॥

वैतानिकञ्च जुहुयादग्निहोत्रं यथाविधि।
दर्शमस्कंदयन् पर्व्व पौर्णमासञ्च योगतः ॥ ९॥

वैतानिकमिति। गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारो वितानं तत्र भवं वैतानिकमग्निहोत्रं यथाशास्त्रमनुतिष्ठेत् दर्शञ्च पौर्णमासञ्च पर्वेति श्रौतस्मार्त्तदर्शपौर्णमासौ योगतः स्वकाले अस्कन्दयन् अपरित्यजन् भार्य्यानिःचेपपक्षे च रजस्वलायामिव भार्य्यायामेतेषामनुष्ठानमुचितं विशेषाश्रवणात्॥ ९ ॥

ऋक्षेष्ट्याग्रयणञ्चैव चातुर्मास्यानि चाहरेत्।
उत्तरायणञ्च क्रमशो दाक्षस्यायनमेव च॥ १०॥

ऋक्षेति। ऋक्षेष्टिर्नचत्रेष्टिः अग्रयणं नवशस्येष्टिः ऋक्षेष्ट्याग्रयणञ्चेति समाहारद्वन्द्वः तथा चातुर्मास्योत्तरायणदाक्षायणानि श्रौतकर्माणि क्रमेण कुर्य्यात्। अत्र केचित् सर्व्वमेतत् श्रौतं दर्शपौर्णमासादि कर्म्म वानप्रस्थस्य स्तुत्यर्थमुच्यते नत्वस्यानुष्ठेयं ग्राम्यव्रीह्यादिसाध्यत्वादेषां च। नच स्मृतिः श्रौताद्यबाधने शक्तादित्याहुः। तदसत् वासन्तशारदैरित्युत्तरश्लोके मुन्यन्नैर्नीवारादिभिः वानप्रस्थविषयतया स्पष्टस्य चरुपुरोडाशादिविधेर्बाधनस्यान्याय्यत्वात्। गोविन्दराजस्तु व्रीह्यादिभिरेवकथञ्चिदरण्यजातैरेतान्निर्वर्त्तयिष्यतइत्याह॥ १०॥

वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः। पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत्पृथक्॥ ११॥

वासन्तेत्यादि। वसन्तोद्भवैः शरदुद्भवैर्मेध्यैर्यागाङ्गभूतैर्मुन्यन्नैर्नीवारादिभिः स्वयमानीतैः पुरोडाशांश्चरून् यथाशास्त्रं तत्तद्यागादिसिद्धये संपादयेत्॥ ११॥

देवताभ्यस्तु तद्धुत्वा वन्यं मेध्यतरं हविः। शेषमात्मनि युञ्जीत लवणञ्च स्वयं कृतम्॥ १२॥

देवताभ्य इत्यादि। तद्वनोद्भवनीवारादिसाधितमतिशयेन यागार्हं हविर्देवताभ्य उपकल्प्य शेषमात्मार्थमुपभुञ्जीत आत्मना च कृतं लवणमूषरलवणाद्युपभुञ्जीत॥ १२॥

स्थलजौदकशाकानि पुष्पमूलफलानि च। मेध्यवृक्षोद्भवान्यद्यात्स्नेहांश्च फलसम्भवान्॥ १३॥

स्थलजेति। स्थलजलोद्भवशाकानि अरण्ययज्ञियवृक्षोद्भवानि पुष्पमूलफलानि इङ्गुद्यादिफलोद्भवांश्च स्नेहानद्यात्॥१३॥

वर्जयेन्मधुमांसञ्च भौमानि कवकानि च। भूस्तृणं शिग्रुकञ्चैव श्लेष्मान्तकफलानि च ॥ १४ ॥

वर्जयेदित्यादि। माक्षिकं मांसं भौमानीति प्रदर्शनार्थं भौमादीनि कवकानि छत्राकान् भूस्तृणं मालवदेशे प्रसिद्धं शाकं शिग्रुकं वाह्लिकेषु प्रसिद्धं शाकं श्लेष्मान्तकफलानि वर्जयेत्। गोविन्दराजस्तु भौमानि कवकानीति अन्यव्यवच्छेदकं विशेषणमिच्छन् भौमानां कवकानां निषेधः वार्क्षाणान्तु भक्षणमाह। तदयुक्तं मनुनैव पञ्चमे द्विजातेरेव कवकमात्रनिषेधात् वनस्थगोचरतया नियमातिशयस्योचितत्वात्। यमस्तु। भूमिजं वृक्षजं वापि छत्राकम्भक्षयन्ति ये। ब्रह्मघ्नांस्तान् विजानीयात् ब्रह्मवादिषु गर्हितानिति। विशेषेण वृक्षजस्यापि निषेधमाह। मेधातिथिस्तु भौमानीति स्वतन्त्रं पदं वदन् गोजिह्विका नाम कश्चित्पदार्थो वनेचराणाम्प्रसिद्धः तद्विषयं निषेधमाह। तदपि बहुष्वभिधानकोशादिष्वप्रसिद्धत्वन्न श्रद्दधीमहि। कवकानां द्विजातिविषये पाञ्चमिके निषेधे सत्यपि पुनर्निषेधो भूस्तृणादीनां निषेधेऽपि च समप्रायश्चित्तविधानार्थः ॥ १४ ॥

त्यजेदाश्वयुजे मासि मुन्यन्नम्पूर्व्वसञ्चितम् ।
जीर्णानि चैव वासांसि शाकमूलफलानि च ॥१५॥

त्यजेदिति । संवत्सरनिचयपक्षे पूर्व्वसञ्चितनीवाराद्यन्नं जीर्णानि च वासांसि शाकमूलफलानि च आश्विने मासि त्यजेत् ॥ १५ ॥

न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् । न ग्रामजातान्यार्त्तोपि मूलानि च फलानि च ॥ १६ ॥

न फालइति । अरण्येपि फालकृष्टप्रदेशे जातं स्वामिनोपेक्षितमपि व्रीह्यादि नाद्यात् । तथा ग्रामजातान्यफालकृष्टभूभागेपि लतावृक्षमूलफलानि क्षुत्पीडितोपि न भक्षयेत् ॥ १६ ॥

अग्निपक्वाशनोवास्यात्कालपक्वभुगेव वा । अश्मकुट्टोभवेद्वापि दन्तोलूखलिकोपि वा ॥ १७ ॥

अग्निपक्वेति । अग्निपक्वं वन्यमन्नं कालपक्वं वा फलादि । यद्वा नोदूखलमुषलाभ्यां किन्तु पाषाणेन चूर्णीकृत्यापक्वमेवाद्यात् । दन्ताएवोदूखलस्थानानि यस्य तथाविधोवा भवेत् ॥ १७ ॥

सद्यः प्रक्षालकोवा स्यान्माससञ्चयिकोपि वा।
षण्मासनिचयोवा स्यात्समानिचयएव वा॥ १८॥

सद्यइत्यादि। एकाहमात्रजीवनोचितं माससंत्युचितं वा षण्माससंवत्सरनिर्वाहसमर्थं वा नीवारादिकं सञ्चिनुयात्। यथा पूर्व्वनियमातिशयः मासवृत्तियोग्यसञ्चयोमाससञ्चयः सोऽस्यास्तीति अतइनठनाविति ठन्प्रत्ययेन माससञ्चयिक इतिरूपम्॥ १८॥

नक्तञ्चान्नं समश्नीयाद्दिवा वाहृत्य शक्तितः। चतुर्थकालिकोवा स्यात्स्याद्वाप्यष्टमकालिकः॥ १९॥

नक्तमित्यादि। यथासामर्थ्यमन्नमाहृत्य प्रदोषे भुञ्जीत अहन्येव वा चतुर्थकालाशनोवा स्यात्सायंप्रातर्मनुष्याणामशनं देवनिर्म्मितमिति विहितं तत्रैकस्मिन्नहनि उपोष्यापरेद्युः सायम्भुञ्जीत अष्टमकालिकोवा भवेत्। त्रिरात्रमुपोष्य चतुर्थस्याह्नोरात्रौ भुञ्जीत॥ १९॥

चान्द्रायणविधानैर्वा शुक्लकृष्णे च वर्त्तयेत्।
पक्षान्तयोर्वाप्यश्नीयाद्यवागूं क्वथितां सकृत्॥ २०॥

चान्द्रायणेति। शुक्लकृष्णयोरेकैकं ह्रासयेत्पिण्डं शुक्ले कृष्णे च वर्द्धयेत्। इत्यादिनैकादशाध्याये वक्ष्यमाणैश्चान्द्रा

यणैर्वा वर्त्तयेत्। पचान्तौ पौर्णमास्यामावास्यौ तत्र शृतां यवागूं वाप्यश्नीयात् सकृदिति सायं प्रातर्वा ॥ २० ॥

पुष्पमूलफलैर्वापि केवलैर्वर्त्तयेत्सदा। कालपक्वैः स्वयंशीर्णैर्वैखानसमते स्थितः ॥ २१ ॥

पुष्पमूलेत्यादि। पुष्पमूलफलैरेव वा कालपक्वैः नाग्निपक्वैः स्वयम्पतितैर्जीवेत्। वैखानसो वानप्रस्थः तद्धर्मप्रतिपादकशास्त्रदर्शने स्थितः तेनैतदुक्तं अन्यदपि वैखानसशास्त्रोक्तन्धर्ममनुतिष्ठेत् ॥ २१ ॥

भूमौ विपरिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम्। स्थानासनाभ्यां विहरेत् सवनेषूपयन्नपः ॥ २२ ॥

भूमावित्यादि। केवलायाम्भूमौ लुठन् गतागतानि कुर्य्यात् स्थानासनादावुपविशेत्। उत्तिष्ठेत्पर्य्यटेदित्यर्थः आवश्यकं स्नानभोजनादिकालं विहाय चायन्नियमः एवमुत्तरत्रापि पादाग्राभ्यां वा दिनन्तिष्ठेत् कश्चित्कालं स्थित एव स्यात् कश्चिच्चोपविष्ट एव नत्वन्तरा पर्य्यटेत् सवनेषु सायंप्रातर्मध्याह्नेषु स्नायात्। यत्तु सायंप्रगे तथेत्युक्तं तेन सहास्य नियमातिशयापेक्षोविकल्पः ॥ २२ ॥

ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः। आर्द्र वासास्तु हेमन्ते क्रमशोवर्द्धयंस्तपः॥ २३॥

ग्रीष्मइत्यादि। आत्मतपोविवृद्ध्यर्थं ग्रीष्मे चतुर्दिगवस्थिते रग्निभिरूर्द्ध्वमादित्यतेजसा आत्मानं तापयेत्। वर्षास्वभ्राव काशमाश्रयेत् यत्र देशे देवोवर्षति तत्र कुचाद्यावरणरहित स्तिष्ठेदित्यर्थः। हेमन्ते चार्द्रवासाभवेत्। ऋतुत्रयसम्बत्सराव लम्बेनायं साम्वत्सरिकएव नियमः॥ २३॥

उपस्पृशंस्त्रिषवणम्पितॄन् देवांश्च तर्पयेत्। तप श्चरंश्चोग्रतरं शोषयेद्देहमात्मनः॥ २४॥

उपेति। विहितमपि त्रिषवणं स्नानं देवर्षिपितृतर्पणविधा नार्थमनूद्यते। प्रातर्मध्यन्दिनसायं सवनेषु त्रिष्वपि देवर्षिपितृ तर्पणं कुर्वन् अन्यदपि पक्षमासोपवासादिकं तीव्रव्रतं तपोऽनु तिष्ठन् यथोक्तं यमेन पक्षोपवासिनः केचिन्मासोपवासिनः इति स्वशरीरं शोषयेत्॥ २४॥

अग्नीनात्मनि वैतानान्समारोप्य यथाविधि। अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः॥ २५॥

अग्नीनित्यादि। श्रौतानग्नीन् वैखानसशास्त्रविधानेन भस्म पानादिना आत्मनि समारोप्य लौकिकाग्निगृहशून्योयथा

वक्ष्यति वृक्षमूलनिकेतन इति मुनिर्मौनव्रतचारी फलमूला
शन एव स्यात् नीवाराद्यपि नाश्नीयात् एतच्चोर्द्धं षण्मासेभ्यो
ऽप्युपरि अनग्निरनिकेतन इति वशिष्ठवचनात् षण्मासोपर्य्यनग्नित्व
मनिकेतनत्वञ्च ॥ २५ ॥

अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः ।
शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ २६ ॥

अप्रयत्न इति । सुखप्रयोजनेषु स्वादुफलभक्षणशीतातप
परीहारादिषु प्रयत्नशून्यः अस्त्रीसम्भोगी भूशायी च निवास
स्थानेषु ममत्वरहितो वृक्षमूलवासी स्यात् ॥ २६ ॥

तापसेष्वेव विप्रेषु यात्रिकम्भैक्षमाहरेत् । गृह
मेधिषु चान्येषु द्विजेषु वनवासिषु ॥ २७ ॥

फलमूलासम्भवे च तापसेष्विति । वानप्रस्थेभ्योब्राह्मणेभ्यः
प्राणमात्रधारणोचितम्भैक्षमाहरेत । तदभावे चान्येभ्योवनवा
सिभ्योगृहस्थेभ्योद्विजेभ्यः ॥ २७ ॥

ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन् ।
प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥ २८ ॥

तस्याप्यसम्भवे ग्रामादिति । ग्रामादानीय ग्रामस्थात्मस्याष्टौ
ग्रासान् पर्णपुटेन शरावादिखण्डेन पाणिनैव वा गृहीत्वा वान
प्रस्थोभुञ्जीत ॥ २८ ॥

एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन्।
विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥ २९ ॥

एताश्चेति। वानप्रस्थ एता दीक्षा एतान्नियमान् अन्यांश्च वानप्रस्थशास्त्रोक्तानभ्यसेत्। औपनिषदीश्च श्रुतीः उपनिषत्पठिता ब्रह्मप्रतिपादकवाक्यानि विविधान्यात्मनो ब्रह्मत्वसिद्धये ग्रन्थतोऽर्थतश्चाभ्यसेत् ॥ २९ ॥

ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः। विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये ॥ ३० ॥

ऋषिभिरिति। यस्मादेता ऋषिभिर्ब्रह्मदर्शिभिः परिव्राजकैर्गृहस्थैश्च वानप्रस्थैर्ब्राह्मणैतज्ज्ञानधर्मयोर्विवृद्ध्यर्थं उपनिषच्छ्रुतयः सेविताः तस्मादेताः सेवेतेति पूर्व्वस्यानुवादः ॥ ३० ॥

अपराजितां वास्थाय व्रजेद्दिशमजिह्मगः। आनिपाताच्छरीरस्य युक्तो वार्य्यनिलाशनः ॥ ३१ ॥

अपरेति। अचिकित्सितव्याध्याद्युद्भवे अपराजितामैशानीं दिशमाश्रित्याकुटिलगतिर्युक्तो योगनिष्ठो जलानिलाशनः आश

रीरनिपाताद्गच्छेत्। महाप्रस्थानाख्यं शास्त्रे विहितं चेदं मरणं तेन न पुरायुषः स्वःकामी प्रेयादिति श्रुत्यापि न विरोधः यतः स्वःकामिशब्दप्रयोगात् अवैधं मरणमनया. निषिध्यते न शास्त्रीयम्॥ ३१ ॥

आसां महर्षिचर्य्याणां त्यक्त्वान्यतमया तनुम्। वीतशोकभयोविप्रोब्रह्मलोके महीयते॥ ३२ ॥

आसामित्यादि। एषाम्पूर्व्वोक्तानुष्ठानानामन्यतमेनानुष्ठानेन शरीरं त्यक्त्वा अपगतदुःखभयोब्रह्मैव लोकस्तत्र पूजां लभते मोक्षमाप्नोतीत्यर्थः। केवलकर्म्मणोवानप्रस्थस्य कथं मोक्ष इतिचेन्न विविधाश्चौपनिषदीरात्मसंशुद्धये श्रुतीरित्यनेनाध्यात्मज्ञानसम्भवात्॥ ३२ ॥

वनेषु तु विहृत्यैवं तृतीयम्भागमायुषः। चतुर्थमायुषोभागन्त्यक्त्वा संगान् परिव्रजेत्॥ ३३ ॥

यस्तु मरणाभावस्तस्याह वनेष्वित्यादि। अनियतपरिमाणत्वात् आयुषस्तृतीयभागस्य दुर्व्विज्ञानात्तृतीयमायुषोभागमिति रागक्षयावधि वानप्रस्थकालोपलक्षणार्थं अतएव शङ्खलिखितौ। वनवासादूर्द्ध्वं शान्तस्य परिणतवयसः परिव्राज्यमित्याचचतुः एवं वनेषु विहृत्यैवं विधिवद्दुस्तरतपोनुष्ठानप्रकारेण वानप्रस्थाश्रमं विषयरागोपशमनाय कञ्चित्कालं

मनुष्ठाय चतुर्थमायुषोभागमिति शेषायुः काले सर्व्वथा विषय सङ्गान् त्यक्त्वा परिव्राजकाश्रममनुतिष्ठेत् ॥ ३३ ॥

आश्रमादाश्रमङ्गत्वा हुतहोमोजितेन्द्रियः।
भिक्षाबलिपरिश्रान्तः प्रव्रजन् प्रेत्य वर्द्धते ॥ ३४ ॥

आश्रमादिति। पूर्व्वपूर्व्वाश्रमादुत्तरोत्तराश्रमङ्गत्वा ब्रह्म चर्य्याद्गृहाश्रमं ततोवानप्रस्थाश्रममनुष्ठायेत्यर्थः यथाशक्ति गता श्रमहुतहोमोजितेन्द्रियोभिक्षाबलिदानचिरसेवया श्रान्तः परिव्रज्याश्रममनुतिष्ठन् परलोके मोक्षलाभात् ब्रह्मभूतत्वह्य तिशयं प्राप्नोति ॥ ३४ ॥

ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत्।
अनपाकृत्य मोक्षन्तु सेवमानोव्रजत्यधः ॥ ३५ ॥

ऋणानीत्यादि। आश्रमसमुच्चयपक्षमाश्रितोब्राह्मण उत्तरश्लोकाभिधेयानि त्रीणि ऋणानि संशोध्य मोक्षे मोक्षान्त रङ्गे परिव्रज्याश्रमे मनोनियोजयेत्। तानि ऋणानि त्वसंशोध्य मोक्षस्तुर्थाश्रममनुतिष्ठन्नरकं व्रजति ॥ ३५ ॥

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः।
इष्ट्वा च शक्तितोयज्ञैर्मनोमोक्षे निवेशयेत् ॥ ३६ ॥

तान्येव ऋणानि दर्शयति अधीत्येति। जायमानोब्राह्मण स्त्रिभिर्ऋणैर्ऋणवान् जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यः

स्वाध्यायेन ऋषिभ्यइति श्रूयते। अतोयथाशास्त्रं वेदानधीत्य पर्वगमनवर्जनादिधर्म्मेण च पुत्रानुत्पाद्य यथासामर्थ्यं ज्योतिष्टोमादियज्ञांश्चानुष्ठाय मोक्षान्तरङ्गे चतुर्थाश्रमे मनोनियाजयेत् ॥ ३६ ॥

अनधीत्य द्विजोवेदाननुत्पाद्य तथा सुतान्।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥ ३७ ॥

अनधीत्येति। वेदाध्ययनमकृत्वा पुत्रमनुत्पाद्य यज्ञांश्चाननुष्ठाय मोक्षमिच्छन्नरकं व्रजति ॥ ३७ ॥

प्राजापत्यां निरूप्येष्टिं सर्व्ववेदसदक्षिणाम्। आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥ ३८ ॥

प्राजापत्येति। यजुर्वेदीयोपाख्यानग्रन्थोक्तां सर्व्वस्वदक्षिणां प्रजापतिदेवताकां इष्टिं कृत्वा तदुक्तविधिनैवात्मन्यग्नीन्समारोप्य गृहादित्यभिधानात् वानप्रस्थाश्रममनुष्ठायैव चतुर्थाश्रममनुतिष्ठेत्। एतेन मनुना चातुराश्रमस्यासमुच्चयोपि दर्शितः श्रुतिभिद्धाश्च एकद्वित्रिचतुराश्रमाणां समुच्चयोविकल्पितः। तथा जावालश्रुतिः ब्रह्मचर्य्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् इतरथा ब्रह्मचर्य्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा ॥ ३८ ॥

योदत्वा सर्व्वभूतेभ्यः प्रव्रजत्यभयं गृहात्। तस्य तेजोमयालोका भवन्ति ब्रह्मवादिनः॥ ३९ ॥

यदत्यादि। यः सर्वेभ्योभूतारभ्येभ्यः स्थावरजङ्गमेभ्योऽभयन्दत्वा गृहाश्रमात्प्रव्रजति तस्य ब्रह्मप्रतिपादकोपनिषन्निष्ठस्य सूर्य्याद्यालोकरहिताहिरण्यगर्भादेर्लोकाः तत्तेजसैव प्रकाशा भवन्ति तानाप्नोतीत्यर्थः॥ ३९ ॥

यस्मादण्वपि भूतानां द्विजान्नोत्पद्यते भयम्। तस्य देहाद्विमुक्तस्य भयन्नास्ति कुतश्चन॥ ४० ॥

यस्मादित्यादि। यस्मात् द्विजात् सूक्ष्ममपि यं भभूतानान्न भवति तस्य देहाद्विमुक्तस्य वर्त्तमान देहनाशे कस्मादपि भयं नभवति॥ ४० ॥

आगारादभिनिष्क्रान्तः पवित्रोपचितोमुनिः। समुपोढेषु कामेषु निरपेक्षः परिव्रजेत्॥ ४१ ॥

आगारादित्यादि। गृहान्निर्गतः पवित्रैर्दण्डकमण्डल्वादिभिर्युक्तोमुनिर्मौनी समुपोढेषु कामेषु केनचित्सम्यक् समीपमापितेषु स्वाद्वन्नादिषु विगतस्पृहः परिव्रजेत्। मेधातिथिस्तु पवित्रैर्मन्त्रजपैरथवा पावनैः कृच्छ्रैरुपचितोयुक्तइति व्याचष्टे॥ ४१॥

एक एव चरेन्नित्यं सिद्ध्यर्थमसहायवान्। सिद्धिमेकस्य सम्पश्यन्न जहाति न हीयते ॥ ४२ ॥

एकइत्यादि। एकस्य सर्व्वसङ्गविरहिणो मोक्षावाप्तिर्भवतीति जानन् एक एव सर्व्वदा मोक्षार्थञ्चरेत्। एक एवेत्यनेन पूर्व्वपरिचितपुत्रादित्याग उच्यते असहायवान् इत्युत्तरस्यापि एकाकी यदि चरति स किञ्चिन्न त्यजति न कस्यापि त्यागेन दुःखमनुभवति नापि केनापि त्यज्यते न कोप्यनेन त्यागदुःखमनुभाव्यते ततश्च सर्व्वत्र निर्ममत्वः सुखेन मुक्तिमाप्नोति ॥ ४२ ॥

अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेत्। उपेक्षकोऽसंकसुको मुनिर्भावसमाहितः ॥ ४३ ॥

अनग्निरित्यादि। अनग्निर्लौकिकाग्निसंयोगरहितः शास्त्रीयाग्निं समारोप्येति पूर्व्वमुक्तत्वादनिकेतो गृहशून्यः उपेक्षकः शरीरस्य व्याध्याद्युत्पादे तत्प्रतीकाररहितः असंकसुकः स्थिरमतिः असञ्चयिकइति अन्ये पठन्ति मुनिर्ब्रह्ममननान्मौनस्य पूर्व्वोक्तत्वात्। भावे ब्रह्मणि समाहितः तदेकतानमनाः अरण्ये च दिवारात्रौ वसन् भिक्षार्थमेव ग्रामं प्रविशेत् ॥ ४३ ॥

कपालं वृक्षमूलानि कुचेलमसहायता। समता चैव सर्व्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ ४४ ॥

कपालमित्यादि। मृण्मयकर्परादिभिक्षापात्रं वासार्थं वृक्षमूलानि स्थूलजीर्णवस्त्रं कौपीनकंन्थादि सर्व्वत्र ब्रह्मबुद्ध्या शत्रुमित्राभावः एतन्मुक्तिसाधनत्वान्मुक्तस्य लिङ्गम् ॥ ४४ ॥

नाभिनन्देत मरणन्नाभिनन्देत जीवितम्। कालमेव प्रतीक्षेत निर्द्देशम्भृतको यथा ॥ ४५ ॥

नेत्यादि। मरणं जीवनञ्च द्वयमपि न कामयेत्किन्तु स्वकर्म्माधीनं मरणं कालमेव प्रतीक्षेत निर्द्दिश्यते इति निर्द्देशो भृतिः तत्परिशोधनकालमिव भृतकः ॥ ४५ ॥

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलम्पिबेत्। सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ४६ ॥

दृष्टिपूतमित्यादि। केशास्थ्यादिपरिहारार्थं दृष्टिशोधितं पादौ भूमौ क्षिपेत्। जलेषु क्षुद्रजन्त्वादिवारणार्थं वस्त्रशोधितं जलम्पिबेत्। सत्यपवित्रां वाचं वदेत्। ततश्च मौनेन सह सत्यस्य विकल्पः प्रतिषिद्धसङ्कल्पशून्यमनसा सर्वदा पवित्रात्मा स्यात् ॥ ४६ ॥

अतिवादांस्तितिक्षेत नावमन्येत कञ्चन। नचे
मन्देहमाश्रित्य वैरं कुर्व्वीत केनचित्॥ ४७॥

अतिवादानित्यादि। अतिक्रमवादान् परोक्तान् सहेत न कञ्चित् परिभवेत् नेमन्देहमस्थिरं व्याध्याद्यायतनमाश्रित्य तदर्थं केनचित् सह वैरं कुर्य्यात्॥ ४७॥

क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत्। सप्त
द्वारावकीर्णाञ्च न वाचमनृतां वदेत्॥ ४८॥

क्रुध्यन्तमित्यादि। सञ्जातक्रोधाय कस्मैचित् प्रतिक्रोधं न कुर्य्यात्। निन्दितस्त्वान्येन वाचं भद्रां वदेत् नतु निन्देत् सप्त द्वारावकीर्णामिति चक्षुरादीनि पञ्च वहिर्बुद्धीन्द्रियाणि मनो बुद्धिरित्यन्तःकरणद्वयं वेदान्तदर्शने एतैर्गृहीतेष्वर्थेषु वाक् प्रवृत्तेरेतानि सप्त द्वाराणीत्युच्यन्ते। एतैरवकीर्णां विक्षिप्तां तद्गृहीतार्थविषयां वाचन्न वदेत् किन्तु ब्रह्ममात्रविषयां वदेत्। ननु मनसैव ब्रह्म उपास्यते ब्रह्मविषयवागुच्चारणमपि मनो व्यापारः तत्कथं सप्तद्वारावकीर्णत्वाविशेषेऽपि ब्रह्मविषयां वदेदिति अन्यविषयां न वदेदिति लभ्यते। उच्यते। अतएवानृतामिति विशेषयति स अनृतमसत्यं विनाशीति यावत्तद्विषय

वागप्यनृतोच्यते। तेन विनाशिकार्थविषयां वाचं नोच्चारयेत् अविनाशिब्रह्मविषयान्तु प्रणवोपनिषदादिरूपां वदेत् गोविन्दराजस्तु धर्मोर्थः कामोधर्मार्थावर्थकामौ धर्मकामौ धर्मार्थकामाइति एतानि सप्त वाग्विषयतया वाक्प्रवृत्तेर्द्वाराणि तेष्ववकीर्णां विच्छिन्नां सर्व्वस्य भेदस्यासत्यत्वात् तद्विषयां असत्यरूपां वाचं न वदेत्। अन्येतु सप्तभुवनान्येव वाग्विषयत्वात्सप्तद्वाराणि तेषां भेदादिनाशित्वाच्च असत्यतया तद्विषयां वाचमसत्यां न वदेत्केवलं ब्रह्मविषयां वदेत्॥ ४८॥

अध्यात्मरतिरासीनोनिरपेक्षोनिरामिषः। आत्मनैव सहायेन सुखार्थी विचरेदिह॥ ४९॥

अध्यात्मेति। आत्मानं ब्रह्माधिकृत्य रतिर्य्यस्य सोऽध्यात्मरतिः सर्वदा ब्रह्मध्यानपरः। आसीनइति स्वस्तिकादियोगासननिष्ठः निरपेक्षोदण्डकमण्डल्वादिष्वपि विशेषापेक्षाशून्यः निरामिषः आमिषं विषयाः तदभिलाषरहितः आत्मनोदेहेनैव सहायेन मोक्षसुखार्थीह संसारे विचरेत्॥ ४९॥

नचोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया। नानुशासनवादाभ्यामिक्षां लिप्सेत कर्हिचित्॥ ५०॥

नेत्यादि। भूकम्पाद्युत्पातचक्षुःस्पन्दादिनिमित्तफलकथनेन अद्याश्विनीहस्तरेखादेरीदृशम्फलमिति नक्षत्राङ्गविद्यया

ईदृशोनीतिमार्ग इत्थं वर्त्तितव्यं अनुशासनेन शास्त्रार्थकथनेन च कदाचिन्न भिक्षां लब्धुमिच्छेत् ॥ ५० ॥

न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः। आकीर्णम्भिक्षुकैर्वान्यैरागारमुपसंव्रजेत् ॥ ५१ ॥

नतापसैरित्यादि। वानप्रस्थैरन्यैर्वा ब्राह्मणैर्भक्षणशीलैः पक्षिभिः कुक्कुरैर्वा व्याप्तं गृहम्भिक्षार्थं न प्रविशेत् ॥ ५१ ॥

कॢप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान्। विचरेन्नियतोनित्यं सर्व्वभूतान्यपीडयन् ॥ ५२ ॥

कॢप्तेत्यादि। कॢप्तकेशनखश्मश्रुर्भिक्षापात्रवान् दण्डी कुसुम्भः कमण्डलुस्तद्युक्तः सर्वप्राणिनोऽपीडयन्सर्व्वदा परिभ्रमेत् ॥ ५२ ॥

अतैजसानि पात्राणि तस्य स्युर्न्निर्व्रणानि च। तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ॥ ५३ ॥

अतैजसेति। सौवर्णादिवर्ज्जितानि निश्छिद्राणि भिक्षोर्भिक्षापात्राणि भवेयुः। तथायमः। सुवर्णरूप्यपात्रेषु ताम्रकांस्यायसेषु च। दत्त्वा भिक्षां न धर्मोऽस्ति गृहीत्वा नरकं व्रजेत्। तेषाञ्च यतिपात्राणां जलेनैव तु शुद्धिः यज्ञे चमसामिव। ॥ ५३ ॥

अलाबुन्दारुपात्रञ्च मृण्मयं वैदलन्तथा। एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत्॥ ५४॥

तान्येव दर्शयति अलाबुमित्यादि। अलाबुदारुमृत्तिका वंशादिखण्डनिर्मितानि यतीनाम्भिक्षापात्राणि स्वायम्भुवो मनुरवदत्। वैदलं तत्त्वक्निर्मितमिति गोविन्दराजः॥ ५४॥

एककालञ्चरेद्भैक्षं न प्रसज्जेत विस्तरे। भैक्षे प्रसक्तोहि यतिर्विषयेष्वपि सज्जति॥ ५५॥

एककालमिति। एकवारं प्राणधारणार्थंभैक्षञ्चरेत्। तत्रापि प्रचुरभिक्षाप्रसङ्गं न कुर्य्यात्। यतोबहुतरभिक्षाभक्षण प्रसक्तोयतिः प्रधानधातुवृद्ध्या स्त्र्यादिविषयेष्वपि प्रसज्जते॥ ५५॥

विधूमे सन्नमुषले व्यङ्गारे भुक्तवज्जने। वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत्॥ ५६॥

विधूमइत्यादि। विगतपाकधूमे निवृत्तावहननमुषले निर्वाणपाकाङ्गारे गृहस्थपर्य्यन्तभुक्तवज्जने उत्सृष्टशरावेषु त्यक्तेषु सर्व्वदा यतिर्भिक्षाञ्चरेत्। एतच्च दिनशेषमुहूर्त्तत्रय रूपसायाह्नोपलक्षणं। यथाह याज्ञवल्क्यः। अप्रमत्तश्चरेद्भैक्षं सायाह्ने नाभिसन्धितः॥ ५६॥

अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत्।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ॥ ५७ ॥

अलाभे इत्यादि। भिक्षादेरलाभे न विषीदेदिति। लाभे च हर्षं न कुर्य्यात् प्राणस्थितिमात्रोपचितान्नभोजनपरः स्यात् दण्डकमण्डलुमात्रास्वपि इदमशोभनन्त्यजामि इदं रुचिरं गृह्णामि इत्यादिप्रसङ्गं न कुर्य्यात् ॥ ५७ ॥

अभिपूजितलाभांस्तु जुगुप्सेतैव सर्वशः। अभिपूजितलाभैश्च यतिर्मुक्तोपि बध्यते ॥ ५८ ॥

अभीत्यादि। पूजापूर्व्वकभिक्षालाभं सर्व्वकालं निन्देत् न स्वीकुर्यादित्यर्थः। यस्मात्पूजापूर्व्वकलाभस्वीकारे दातृगोचरस्नेहममत्वादिभिः आसन्नमुक्तिरपि यतिर्जन्मबन्धान् लभते ॥ ५८ ॥

अल्पान्नाभ्यवहारेण रहःस्थानासनेन च।
ह्रियमाणानि विषयैरिन्द्रियाणि निवर्त्तयेत् ॥ ५९ ॥

अल्पेत्यादि। आहारलाघवेन निर्जनदेशस्थानादिना च रूपादिविशेषैराकृष्यमाणानीन्द्रियाणि निवर्त्तयेत् ॥ ५९ ॥

इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च। अहिंसया च भूतानाममृतत्वाय कल्पते ॥ ६० ॥

यस्मात् इन्द्रियाणामित्यादि। इन्द्रियाणां नियहेण रागद्वेषाभावेन च प्राणिहिंसाविरतेन च मोक्षयोग्यो भवति। ॥ ६० ॥

अवेक्षेत गतीर्नृणां कर्म्मदोषसमुद्भवाः। निरये चैव पतनं यातनाश्च यमक्षये ॥ ६१ ॥

इदानीं इन्द्रियनियमोपायं विषयवैराग्याय संसारतत्त्व चिन्तनमुपदिशति अवेक्षेतेत्यादि। विहिताकरणनिन्दिताचरणरूपकर्म्मदोषजन्यां मनुष्याणामश्वादिदेहप्राप्तिं नरकेषु पतनं यमलोके नरकस्थस्य निशितनिस्त्रिंशच्छेदनादिभवास्तीव्रवेदनाः श्रुतिपुराणादिषूक्ताश्चिन्तयेत् ॥ ६१ ॥

विप्रयोगम्प्रियैश्चैव संयोगञ्च तथाप्रियैः। जरया चाभिभवनं व्याधिभिश्चोपपीडनम् ॥ ६२ ॥

विप्रयोगमित्यादि। इष्टपुत्रादिवियोगं अनिष्टहिंसकादियोगं जराभिभवनं व्याध्यादिभिश्चपीडनं कर्म्मदोषसमुद्भवमनुचिन्तयेत् ॥ ६२ ॥

देहादुत्क्रमणञ्चास्मात्पुनर्गर्भे च सम्भवम् । योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः ॥ ६३ ॥

देहादित्यादि । अस्माद्देहादस्य जीवात्मनः उत्क्रमणं तथाच मर्म्मभिद्भिर्महारोगैः पतितस्य श्लेष्मादिदोषनिरुद्ध कण्ठस्य महतीं वेदनाञ्चैवोत्पत्तिदुःखबहुलां श्वशृगालादि निकृष्टजातियोनिकोटिसहस्रगमनानि स्वकर्म्मबन्धान्यनुचिन्तयेत् ॥ ६३ ॥

अधर्म्मप्रभवञ्चैव दुःखयोगं शरीरिणाम् । धर्म्मार्थप्रभवञ्चैव सुखसंयोगमक्षयम् ॥ ६४ ॥

अधर्म्मेत्यादि । शरीरवताञ्जीवात्मनां अधर्म्महेतुकं दुःखसम्बन्धं धर्म्महेतुकोऽर्थो ब्रह्मसाक्षात्कारस्तत्प्रभवं मोक्षलक्षणमक्षयम्ब्रह्मसुखसंयोगं चिन्तयेत् ॥ ६४ ॥

सूक्ष्मताञ्चान्ववेक्षेत योगेन परमात्मनः । देहेषु च समुत्पत्तिमुत्तमेष्वधमेषु च ॥ ६५ ॥

सूक्ष्मतामित्यादि । योगेन विषयान्तरचित्तवृत्तिनिरोधन परमात्मनः स्थूलशरीराद्यपेक्षया सर्व्वान्तर्यामित्वेन सूक्ष्मतां

निरवयवतां तत्त्यागादुत्कृष्टापकृष्टेषु देवपश्वादिशरीरेषु जीवानां शुभाशुभफलभोगार्थमुत्पत्तिमधिष्ठानमनुचिन्तयेत् ॥ ६५ ॥

दूषितोपि चरेद्धर्म्मं यत्र तत्राश्रमे रतः। समः सर्व्वेषु भूतेषु न लिङ्गन्धर्म्मकारणम् ॥ ६६ ॥

दूषितइति। यस्मिन् कस्मिंश्चिदाश्रमे स्थितस्तदाश्रमविरुद्धाचारदूषितोपि आश्रमलिङ्गरहितोपि सर्व्वभूतेषु ब्रह्मबुद्ध्या समदृष्टिः सन् धर्म्ममनुतिष्ठेत् नहि दण्डादिलिङ्गधारणमात्रं धर्म्मकारणं किन्तु विहितानुष्ठानं एतच्च धर्म्मप्राधान्यबोधनायोक्तं नतु लिङ्गपरित्यागार्थं ॥ ६६ ॥

फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम्। न नाम ग्रहणादेव तस्य वारि प्रसीदति ॥ ६७ ॥

अत्र दृष्टान्तमाह फलमिति। यद्यपि कतकवृक्षस्य फलं कलुषजलस्वच्छताजनकं तथापि तन्नामोच्चारणवशात् न प्रसीदति किन्तु फलप्रक्षेपेण एवं न लिङ्गधारणमात्रं धर्म्मकारणङ्किन्तु विहितानुष्ठानम् ॥ ६७ ॥

संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा। शरीरस्यात्यये चैव समीक्ष्य वसुधाञ्चरेत् ॥ ६८॥

संरक्षणार्थमित्यादि। शरीरस्यापि पीडायां सूक्ष्मपिपीलिकादिप्राणरक्षार्थं रात्रौ दिवसे वा सदा भूमिं निरीक्ष्य पर्य्यटेत् पूर्वं केशादिपरिहारार्थं दृष्टिपूतं न्यसेत्पादमित्युक्तं इदन्तु हिंसापरिहारार्थं इत्यपुनरुक्तिः ॥ ६८ ॥

अह्ना रात्र्या च याञ्जन्तून् हिनस्त्यज्ञानतो यतिः। तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत्॥६९॥

अत्र प्रायश्चित्तमाह अह्ना रात्र्येति। यतिर्यानज्ञानतो दिवसे रात्रौ वा प्राणिनो हन्ति तद्धननजनितपापनाशार्थं स्नात्वा षट् प्राणायामान् कुर्य्यात् प्राणायामस्तु सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। त्रिःपठेदायतप्राणः प्राणायामः स उच्यते इति वशिष्ठोक्तो अत्र द्रष्टव्यः ॥ ६९ ॥

प्राणायामा ब्राह्मणस्य त्रयोपि विधिवत्कृताः। व्याहृतिप्रणवैर्युक्ता विज्ञेयम्परमन्तपः ॥ ७० ॥

प्राणायामा इति। ब्राह्मणस्येतिनिर्देशात् ब्राह्मणजातेरयमुपदेशोन यतेरेव त्रयोपि प्राणायामाः सप्तभिर्व्याहृति

भिर्दशभिः प्रणवैर्युक्ताविधिवदित्यनेन सावित्र्या शिरसा च युक्ताः पूरककुम्भकरेचकविधिना कृताब्राह्मणस्य श्रेष्ठन्तपो ज्ञातव्यं पूरकादिस्वरूपं स्मृत्यन्तरेषु ज्ञेयम्। यथा योगियाज्ञवल्क्यः। नासिकोत्कृष्टउच्छ्वासोध्मातः पूरकउच्यते। कुम्भको निश्चलश्वासोमुच्यमानस्तु रेचकः। त्रयोपीत्यपिशब्देन त्रयोऽवश्यकर्त्तव्याः अधिककरणे त्वधिकपापक्षयः॥ ७० ॥

दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः। तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात्॥ ७१ ॥

दह्यन्तइति। धातूनां स्वर्णरजतादीनां यथा मूषायां अग्निनाध्मायमानानां मलद्रव्याणि दह्यन्ते एवं मनसोरागादयश्चक्षुरादेश्च विषयप्रवणत्वादयोदोषाः प्राणायामेन विषयानभिध्यानात् दह्यन्ते॥ ७१॥

प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषं। प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान्॥ ७२ ॥

एवं सतिप्राणायामैरित्यादि। अनन्तरोक्तप्रकारेण प्राणायामैरागादिदोषान् दहेत्। अपेक्षितदेशे परंब्रह्मादौ यन्म

नसोधारणं सा धारणा तया पापं नाशयेत्। प्रत्याहारेण विषयेभ्य: इन्द्रियाकर्षणैर्विषयसम्पर्कान् वारयेत् ब्रह्मध्यानेनेति सोऽहमस्मीति सजातीयप्रत्ययप्रवाहरूपेण अनीश्वरान् गुणान् ईश्वरस्य परमात्मनो ये गुणा न भवन्ति क्रोधलोभासूयादय: तान्निवारयेत् ॥ ७२ ॥

उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः। ध्यानयोगेन सम्पश्येद्गतिमस्यान्तरात्मनः ॥ ७३ ॥

उच्चावचेष्वित्यादि। अस्य जीवस्य उत्कृष्टापकृष्टेषु देवपश्वादिषु जन्मप्राप्तिमकृतात्मभिः शास्त्रैरसंस्कृतान्तःकरणैर्दुर्ज्ञेयां ध्यानाभ्यासेन सम्यक् सकारणिकां जानीयात्। ततश्चाविद्याकाम्यनिषिद्धकर्मनिर्मितेयङ्गतिरिति ज्ञात्वा ब्रह्मज्ञाननिष्ठो भवेदिति तात्पर्य्यार्थः ॥ ७३ ॥

सम्यग्दर्शनसम्पन्नः कर्म्मभिर्न निबध्यते। दर्शनेन विहीनस्तु संसारम्प्रतिपद्यते ॥ ७४ ॥

ततस्तसम्यग्दर्शनेति। तत्त्वतोब्रह्मसाक्षात्कारवान् कर्म्मभिर्न निबध्यते कर्म्माणि तस्य पुनर्जन्मने न प्रभवन्ति पूर्वार्जितपाप

पुण्यस्य ब्रह्मज्ञानेन नाशात्। तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्तउभे ते वैषतरतीति श्रुत्या चीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरइत्यविशेष श्रुत्या च पुण्यसम्बन्धोपि बाध्यते उत्तरकाले च दैवात्पापे कर्माणि कृतेपि न पापसंश्लेषः। तथाच श्रुतिः। पुष्करपलाश आपोन श्लिष्यन्तएवमेवम्विदि पापं कर्म न श्लिष्यतइति। देहारम्भकपापपुण्यसम्बन्धः परं न नश्यति अयमेवचार्थो ब्रह्ममीमांसायां तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति सूत्रेण बादरायणेन निरणायि। ब्रह्मसाक्षात्कारशून्यस्तु जन्ममरणप्रबन्धं लभते॥ ७४॥

अहिंसयेन्द्रियासंगैर्वैदिकैश्चैव कर्म्मभिः। तपसश्चरणैश्चोग्रैः साधयन्तीह तत्पदम्॥ ७५॥

अहिंसेति। निषिद्धहिंसावर्जनेन इन्द्रियाणाञ्च विषयसङ्गपरिहारेण वैदिकैर्नित्यैः कर्म्मभिः काम्यकर्मणां बन्धहेतुत्वात्। उक्तञ्च कामात्मता न प्रशस्तेति तपसश्च यथासम्भवमुपवासकृच्छ्रचान्द्रायणादेरनुष्ठानैरिह लोके तत्पदं ब्रह्मणात्यन्तिकलयलक्षणं प्राप्नुवन्ति। पूर्वश्लोकेन ब्रह्मदर्शनस्य मोक्षहेतुत्वमुक्तं अनेन तत्सहकारितया कर्मणोऽभिहितं॥ ७५॥

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्।
चर्म्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ ७६ ॥

इदानीं मोक्षान्तरङ्गोपायसंसारवैराग्याय देहस्वरूप माह श्लोकद्वयेन अस्थीत्यादि। अस्थीन्येव स्थूणा इव यस्य तं अस्थिस्थूणं स्नायुरज्जुभिराबद्धं मांसरुधिराद्युपलिप्तं चर्म्माच्छादितं मूत्रपुरीषाभ्यां पूर्णं अतएव दुर्गन्धि ॥ ७६ ॥

जराशोकसमाविष्टं रोगायतनमातुरम्। रजस्वलमनित्यञ्च भूतावासमिमन्त्यजेत् ॥ ७७ ॥

जरेत्यादि च। जरोपतापाभ्यां आक्रान्तं विविधव्याधीनामाश्रयं आतुरं क्षुत्पिपासाशीतोष्णादिकातरं प्रायेण रजोगुणयुक्तं विनश्वरस्वभावञ्च आवासोगृहं पृथिव्यादिभूतनिर्म्मितमावासं देहमेव जीवस्य गृहत्वेन निरूपितन्त्यजेत्। यथा पुनर्देहसम्बन्धोन भवेत् तथा कुर्य्यात्। गृहसाम्यमेवोक्तं अस्थीत्यादिना ॥ ७७ ॥

नदीकूलं यथा वृक्षोवृक्षं वा शकुनिर्यथा। तथा त्यजन्निमन्देहं कृच्छ्राद्ग्राहाद्विमुच्यते ॥ ७८ ॥

नदीकूलमिति। ब्रह्मोपासकस्य देहत्यागसमये मोक्षः आरब्धदेहस्य कर्म्मणोभोगेनैव नाशात तत्र देहत्यक्त

द्वैविध्यमाह यः कर्म्माधीनं देहपातमवेक्षते स नदीकूलं यथा वृक्षस्त्यजति स्वपातमजानन्नेव नदीरयेण पात्यते तथा देहन्त्यजन् यस्तु ज्ञानकर्म्मप्रकर्षात् भीष्मादिवत् स्वाधीनमृत्युः स यथा पक्षी वृक्षं स्वेच्छया त्यजति तथा देहमिमन्त्यजन् संसारकष्टाद्ग्राहादिव जलचरप्राणिभेदाद्विमुच्यते ॥ ७८ ॥

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम्। विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ॥ ७९ ॥

प्रियेष्वित्यादि। ब्रह्मविदात्मीयेषु प्रियेषु हितकारिषु सुकृतं अप्रियेष्वहितकारिषु दुष्कृतं निःक्षिप्य ध्यानयोगेन नित्यं ब्रह्माभ्येति ब्रह्मणि लीयते। तथा च श्रुतिः। तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति अपरा श्रुतिः तत्र सुकृतदुःकृते विधुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतमिति एवमादीन्येव वाक्यान्युदाहृत्य सुकृतदुष्कृतयोर्हानिमात्रश्रवणेप्युपायनं प्रतिपत्तव्यं इति ब्रह्ममीमांसायां हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तमित्यादिसूत्रैर्बादरायणेन निरणायि ननु परकीयसुकृतदुष्कृतयोः कथम्परत्र संक्रान्तिः उच्यते धर्म्माधर्म्मव्यवस्थायां शास्त्रमेव प्रमाणं संक्रमोपि तयोः शास्त्रप्रमाणक एव अतः शास्त्रात्संक्रमणयोग्यावेतौ सिद्धतः अतः शास्त्रेण

बाधात् न प्रतिपक्षानुमानोदयः शुचि नरशिरःकपालं प्राण्यङ्गत्वात् शंखादिवदितिवत्। मेधातिथिगोविन्दराजौतु। स्वपुप्रियेषु केनचित् कृतेषु ध्यानाभ्यासेनात्मीयमेव सुकृतं तत्र कारणत्वेनारोप्य एवमप्रियेष्वपि केनचित्कृतेषु आत्मीयमेव प्राग्जन्मार्जितं दुष्कृतं कारणत्वेन प्रकल्प्योत्सृज्य ततसंपादयितारौ पुरुषौ रागद्वेषाख्यौ त्यक्त्वा नित्यब्रह्माभ्यासात् ब्रह्मस्वभावमुपगच्छतीति व्याचक्षाते। तन्न। विसृज्येति क्रियायां सुकृतं दुष्कृतमिति श्रुतकर्म्मद्वयत्यागेन तत्सम्पादयितारावित्यश्रुतकर्म्माध्याहारात् कर्म्मद्वये च श्रुतक्रियात्यागेन कारणत्वेन प्रकल्प्येत्याद्यश्रुतक्रियाध्याहारात्। किञ्च। व्यासव्याख्यातवेदार्थमेवमस्यामनुस्मृतेः।, मन्ये न कल्पितं गर्व्वादर्व्वाचीनविचक्षणैः ॥ ७९ ॥

यदा भावेन भवति सर्व्वभावेषु निःस्पृहः। तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥ ८० ॥

यदेति। यदा परमार्थतोविषयदोषभावनया सर्व्वविषयेषु निरभिलाषोभवति तदेह लोके सन्तोषजन्यसुखम्परलोके च मोक्षसुखं अविनाशि प्राप्नोति ॥ ८०

अनेन विधिना सर्व्वांस्त्यक्त्वा संगान् शनैः शनैः। सर्व्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥ ८१ ॥

अनेनेति। पुत्रकलत्रक्षेत्रादिषु ममत्वरूपान् क्रमेण संगान्सर्व्वान् त्यक्त्वा द्वन्द्वैर्मानापमानादिभिर्निर्मुक्तोऽनेन यथोक्तेन ज्ञानकर्म्मानुष्ठानेन ब्रह्मण्येवात्यन्तिकं लयमाप्नोति॥ ८१ ॥

ध्यानिकं सर्व्वमेवैतत् यदेतदभिशब्दितम्। न ह्यनध्यात्मवित् कश्चित्क्रियाफलमुपाश्नुते ॥ ८२ ॥

ध्यानिकमिति। यदेतदित्यत्यन्तसन्निधानात्पूर्व्वश्लोकोदितम्परामृश्यते यदेतदुक्तम्पुत्रादिममत्वत्यागो मानापमानादिहानिर्ब्रह्मण्येवावस्थानं सर्व्वमेवैतत् ध्यानिकं आत्मनः परमात्मत्वेन ध्याने सति भवति यदात्मानं परमात्मेति जानाति तदा सर्व्वत्वात्स्व विशिष्यते तस्य न कुत्रचिन्ममत्वं मानापमानादिकं वा भवति तथाविधज्ञानात् ब्रह्मात्मत्वञ्च जायते ध्यानिकविशेषात् ध्येयविशेषलाभे परमात्मध्यानार्थमाह। नह्यनध्यात्मविदिति यस्मादात्मानं जीवमधिकृत्य यदुक्तन्तस्य परमात्मत्वं तथैव न जानाति न ध्यायति स प्रकृतध्यानक्रियाफलं ममत्वत्यागमानापमानादिहानिं मोक्षञ्च न प्राप्नोति ॥ ८२ ॥

अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च। आध्यात्मिकञ्च सततं वेदान्ताभिहितञ्च यत्॥ ८३॥

अधियज्ञमिति। पूर्व्वं ब्रह्मध्यानस्वरूपमुपासनमुक्तं इदानीं तदङ्गतया वेदजपं विधत्ते। तथाच श्रुतिः। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीति विद्याङ्गतया वेदजपमुपदिशति। अधियज्ञमिति यज्ञमधिकृत्य प्रवृत्तं ब्रह्म वेदस्तथा देवतामधिकृत्य प्रवृत्तं तथाजीवमधिकृत्य तथावेदान्तेषूक्तं सत्यं ज्ञानमनन्तं ब्रह्म इत्यादिब्रह्मप्रतिपादकं सर्व्वदा जपेत्॥ ८३॥

इदं शरणमज्ञानामिदमेव विजानताम्। इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम्॥ ८४॥

इदमिति। इदं वेदाख्यं ब्रह्म तदर्थानभिज्ञानामपि शरणङ्गतिः पाठमात्रेणापि पापक्षयहेतुत्वात्तुतराञ्ज्ञानतां तदर्थाभिज्ञानां स्वर्गमपवर्गञ्च इच्छतामिदमेव शरणं तदुपायोपदेशकत्वेन तत्प्राप्तिहेतुत्वात्॥ ८४॥

अनेन क्रमयोगेन परिव्रजति योद्विजः। स विधूयेह पाप्मानम्परं ब्रह्माधिगच्छति॥ ८५॥

अनेनेति। अनेन यथाक्रमोक्तानुष्ठानेन यःप्रव्रज्याश्रममाश्रयति स इह लोके पापं विसृज्य परं ब्रह्म प्राप्नोति ब्रह्मसाक्षात्कारेण औपाधिकलिंगशरीरनाशात् ब्रह्मणैक्यं गच्छति॥८५॥

एष धर्मोऽनुशिष्टो वो यतीनां नियतात्मनाम्।
वेदसंन्यासिकानान्तु कर्मयोगन्निबोधत ॥ ८६ ॥

एषधर्मइति। एष यतीनां यतात्मनाञ्चतुर्णामेव कुटीचर बहूदकहंसपरमहंसानां साधारणो धर्मो वो युष्माकमुक्तमिदानीं यतिविशेषाणां कुटीचराख्यानां वेदविहिताग्निहोत्रादि कर्मत्यागिनां असाधारणं वक्ष्यमाणं पुत्रैश्वर्य्ये सुखं वसेदिति कर्मसम्बन्धं शृणुत। भारते चतुर्विधाभिक्षवस्तुकाः। चतुर्विधा भिक्षवस्तु: कुटीचरो बहूदक:। हंस: परमहंसश्च योय: पश्चात्स उत्तम इति कुटीचरस्यायं पुत्रभिक्षाचरणरूपासाधारणकर्मोपदेश:। गोविन्दराजस्तु गृहस्थविशेषमेव वेदोदिताग्निहोत्रादिकर्मत्यागिनं ज्ञानमात्रसम्पादितवैदिककर्माणं वेदसंन्यासिकमाह। तन्न यतो गृहस्थस्याहिताग्नेरन्येष्टौ विनियोग: चतुर्थाश्रमाश्रयणे चात्मनि समारोप: शास्त्रेणोच्यते तदुभयाभावे सत्येवमेवाग्नीनां त्याग: स्यात्। गोविन्दराजो गृहस्थं वेदसंन्यासिकं ब्रुवन्। एवमेवाहिताग्नीनान्त्यागमर्यादां पेतवान्। वेदसंन्यासिकं मेधातिथि: प्राह निराश्रमम्। तन्मते चातुराश्रम्यनियमोक्ति: कथं मनो: ॥ ८६ ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा। एते गृहस्थप्रभवाश्चत्वार: पृथगाश्रमा: ॥ ८७ ॥

इदानीं वेदसंन्यासिकस्य प्रतिज्ञाते कर्मयोगेऽनन्तरं वक्तुम्

चितेपि' वेदसंन्यासिकः पञ्चमाश्रमी निराश्रमी वा चत्वार एवाश्रमानियताइति दर्शयितुमुक्तानाश्रमाननुवदति ब्रह्म चारीति। ब्रह्मचर्य्यादयोयएते पृथगाश्रमाउक्ताएते चत्वार एव गृहस्थजन्याभवन्ति ॥ ८७ ॥

सर्व्वेपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः। यथो क्तकारिणं विप्रं नयन्ति परमाङ्गतिम् ॥ ८८ ॥

सर्वेपोत्यादि। एते सर्व्वे चत्वारोप्याश्रमाः शास्त्रानतिक्रमे णानुष्ठिताः अपिशब्दात्त्रयोद्वावेकोपि यथोक्तानुष्ठातारं विप्रं मोक्षलक्षणाङ्गतिम्प्रापयन्ति ॥ ८८ ॥

सर्व्वेषामपि चैतेषां वेदस्मृतिविधानतः। गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्त्ति हि ॥ ८९ ॥

प्रकृतवेदसंन्यासिकस्य गृहे पुत्रैश्वर्य्ये सुखे वासं वक्ष्यति तदर्थं गृहस्थोत्कर्षमाह सर्व्वेषामिति। सर्वेषामेतेषां ब्रह्म चार्य्यादीनामध्ये गृहस्थस्य श्रूयमाणत्वेन प्रायशोऽग्निहोत्रादि विधानात् गृहस्थोमन्वादिभिः श्रेष्ठउच्यते तथा यस्माद्ब्रह्म चारिवानप्रस्थयतीनसौ भिक्षादानेन पोषयति तेनाप्यसौ श्रेष्ठः यथोक्तं यस्मात्त्रयोप्याश्रमिणो ज्ञानेनान्नेनचान्वहमिति ॥ ८९ ॥

यथा नदीनदाः सर्व्वे सागरे यान्ति संस्थितिम्।
तथैवाश्रमिणः सर्व्वे गृहस्थे यान्ति संस्थितिम्॥ ९०॥

यथेत्यादि। यथा सर्व्वे नदीनदा गङ्गाशोणाद्याः समुद्रे अवस्थितिं लभन्ते एवं गृहस्थादपरे सर्व्वाश्रमिणः तदधीन जीवनत्वात् गृहस्थसमीपे अवस्थितिं लभन्ते॥ ९०॥

चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः। दश लक्षणको धर्म्मः सेवितव्यः प्रयत्नतः॥ ९१॥

चतुर्भिरित्यादि। एतैर्ब्रह्मचार्य्यादिभिराश्रमिभिश्चतुर्भिरपि द्विजातिभिः वक्ष्यमाणोदशविधस्वरूपोधर्म्मः प्रयत्नतः सततमनुष्ठेयः॥ ९१॥

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधोदशकन्धर्म्मलक्षणम्॥ ९२॥

तमेव स्वरूपतः सङ्ख्यादिभिश्च दर्शयति धृतिरित्यादि। सन्तोषोधृतिः परेणापकारे कृते तस्य प्रत्युपकारानाचरणं क्षमा विकारहेतुविषयसन्निधानेप्यविक्रियत्वं मनसोदमः। मनसा

दमनं दम इति सनन्दवचनात्। शीतातपादिद्वन्द्वसहिष्णुता दम इति गोविन्दराजः। अन्यायेन परधनादिग्रहणं स्तेयं तद्भिन्नं अस्तेयं यथाशास्त्रं मृज्जलाभ्यान्देहशोधनं शौचं विषयेभ्यश्चक्षुरादिवारणमिन्द्रियनिग्रहः शास्त्रादितत्त्वज्ञानं धीः आत्मज्ञानं विद्या यथार्थाभिधानं सत्यं क्रोधहेतौ सत्यपि क्रोधानुत्पत्तिरक्रोधः एतद्दशविधं धर्मस्वरूपम्॥ ९२॥

दशलक्षणानि धर्मस्य ये विप्राः समधीयते।
अधीत्य चानुवर्त्तन्ते ते यान्ति परमाङ्गतिम्॥९३॥

दशलक्षणेति। ये विप्राएतानि दशविधधर्मस्वरूपाणि पठन्ति पठित्वा चात्मज्ञानसाचिव्येनानुतिष्ठन्ते ते ब्रह्मज्ञानसमुत्कर्षात्परमाङ्गतिं मोक्षलक्षणामाप्नुवन्ति॥ ९३॥

दशलक्षणकं धर्ममनुतिष्ठन्समाहितः। वेदान्तं
विधिवच्छ्रुत्वा संन्यसेदनृणोद्विजः॥ ९४॥

दशलक्षणेति। उक्तन्दशलक्षणकन्धर्मं संयतमनाः सन्ननुतिष्ठन् उपनिषदाद्यर्थं गृहस्थावस्थायां यथोक्ताध्ययनधर्मान् गुरुमुखादवगम्य परिशोधितदेवादिऋणत्रयः सन्न्यासमनुतिष्ठेत॥ ९४॥

संन्यस्य सर्व्वकर्म्माणि कर्म्मदोषानपानुदन्।
नियतोवेदमभ्यस्य पुत्रैश्वर्य्ये सुखं वसेत्॥ ९५॥

सन्न्यस्येति। सर्व्वाणि गृहस्थानुष्ठेयाग्निहोत्रादिकर्म्माणि परित्यज्य अज्ञातजन्तुवधादिकर्म्मजनितपापानि च प्राणायामादिना नाशयन्नियतेन्द्रिय उपनिषदाद्यन्यतोऽर्थतश्चाभ्यस्य पुत्रैश्वर्य्ये इति पुत्रगृहे पुत्रोपकल्पितभोजनाच्छादनत्वेन वृत्तिचिन्तारहितः सुखं वसेत्। अयमेवासाधारणोधर्म्मः कुटीचरकस्योक्तः इदमेव वक्तृवेदसन्न्यासिनामिति पूर्व्वमुक्तम् ॥ ९५ ॥

एवं संन्यस्य कर्म्माणि स्वकार्य्यपरमोऽस्पृहः।
संन्यासेनापहत्यैनः प्राप्नोति परमाङ्गतिम्॥ ९६॥

एवमिति। एवमुक्तप्रकारेण वर्त्तमानोऽग्निहोत्रादिगृहस्थकर्म्माणि परित्यज्यात्मसाक्षात्कारस्वरूपस्वकार्य्यप्रधानः स्वर्गादावपि बन्धहेतुतया निस्पृहः प्रव्रज्यया पापानि विनाश्य ब्रह्मसाक्षात्कारेण परमाङ्गतिं मोक्षलक्षणाम्प्राप्नोति ॥ ९६ ॥

एषवोऽभिहितोधर्म्मोब्राह्मणस्य चतुर्विधः। पुण्योऽक्षयफलः प्रेत्य राज्ञां धर्मं निबोधत ॥ ९७ ॥

इतिमानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां षष्ठोऽध्यायः ॥ ० ॥

एषइति। ऋषीन्सम्बोध्य उच्यते एष युष्माकम्ब्राह्मणस्य सम्बन्धी क्रियाकलापोधर्म्मस्तस्यैव ब्रह्मचारिगृहस्थवानप्रस्थादिभेदेन चतुर्विधः परत्राक्षयफलउक्तः इदानीं राजधर्म्मविषयं धर्मं शृणुत अत्र च श्लोके ब्राह्मणस्य चातुराश्रम्योपदेशात् ब्राह्मणः प्रव्रजेदिति पूर्व्वमभिधानात् ब्राह्मणस्यैव प्रव्रज्याधिकारः ॥ ९७ ॥

॥ इतिश्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां षष्ठोऽध्यायः ॥

## ॥ ७ अध्यायः ॥

---

राजधर्म्मान् प्रवक्ष्यामि यथावृत्तोभवेन्नृपः।
सम्भवश्च यथा तस्य सिद्धिश्च परमा यथा ॥ १ ॥

राजधर्म्मेति। धर्म्मशब्दोऽत्र दृष्टादृष्टार्थानुष्ठेयपरः षाड्गुण्यादेरपि वक्ष्यमाणत्वात् राजशब्दोपि नात्र क्षत्रियजाति वचनः किन्त्वभिषिक्तजनपदपुरपालयितृपुरुषवचनः। अतएवाह यथावृत्तोभवेन्नृपइति यथाचारोनृपतिर्भवेत्तथा तस्यानुष्ठेयानि कथयिष्यामि यथा येन प्रकारेण वा राजानमसृजत्प्रभुः इत्यादिना तस्योत्पत्तिः। यथाच दृष्टादृष्टफलसम्पत्तिस्तदपि वक्ष्यामि ॥ १ ॥

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि।
सर्व्वस्यास्य यथान्यायङ्कर्त्तव्यम्परिरक्षणम् ॥ २ ॥

ब्राह्ममित्यादि। ब्रह्म वेदस्तत्प्राप्त्यर्थतया उपनयनसंस्कारस्तं यथाशास्त्रं प्राप्तवता क्षत्रियेणास्य सर्व्वस्य स्वविषयावस्थितस्य शास्त्रानुसारेण नियमतोरक्षणं कर्त्तव्यं एतेन क्षत्रियएव

मुख्यो रक्षाधिकारीति दर्शितं अतएव शास्त्रार्थतत्त्वं क्षत्रियस्य जीवनार्थं तथा क्षत्रियस्य तु रक्षणं स्वकर्मसु श्रेष्ठञ्च वक्ष्यति ब्राह्मणस्त्वापदि जीवेत् क्षत्रियधर्मेणेत्यभिधास्यति वैश्यस्यापि क्षत्रियधर्मं शूद्रस्य च क्षत्रियवैश्यकर्मणी जीवनार्थमापदि जगाद नारदः। न कथञ्चन कुर्वीत ब्राह्मणः कर्मवार्षलम्। वृषलः कर्म च ब्राह्मं पतनीये हि ते तयोः। उत्कृष्टञ्चापकृष्टञ्च तयोः कर्म न विद्यते। मध्यमे कर्मणी हित्वा सर्व्वसाधारणे हि ते। रक्षणं वेदधर्मार्थं तपःक्षत्रस्य रक्षणमिति। सर्व्वतोधर्म्म षड्भागोराज्ञोभवति रक्ष्यतइतिच वक्ष्यमाणत्वात्। रक्षितुर्व लिषड्भागग्रहणात् दृष्टार्थमपि योऽरक्षन् बलिमादत्तइति नरकपातं वक्ष्यति ॥ २ ॥

अराजके हि लोकेऽस्मिन्सर्वतोविद्रुते भयात्।
रक्षार्थमस्य सर्व्वस्य राजानमसृजत्प्रभुः ॥ ३ ॥

अराजकइति। यस्मादराजके जगति बलवद्भयात्सर्वतः प्रचलिते सर्व्वस्यास्य चराचरस्य रक्षार्थे राजानं सृष्टवान् तस्मात्तेन रक्षणं कार्य्यं ॥ ३ ॥

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च। चन्द्र
वित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः ॥ ४ ॥

कथं सृष्टवानित्याह। इन्द्रानिलयमार्काणामित्यादि।

इन्द्रवातयमसूर्य्याग्निवरुणचन्द्रकुबेराणां मात्राअंशान्सार भूतान् आकृष्य राजानमसृजत् ॥ ४ ॥

यस्मादेषां सुरेन्द्राणां मात्राभ्योनिर्मितोनृपः ।
तस्मादभिभवत्येषसर्व्वभूतानि तेजसा ॥ ५ ॥

यस्मादिति । यस्मादिन्द्रादीनान्देवश्रेष्ठानामंशेभ्योनृपतिः सृष्टस्तस्मादेष सर्व्वप्राणिनोवीर्य्येणातिशेते ॥ ५ ॥

तपत्यादित्यवच्चैष चक्षूंषि च मनांसिच । न चैनम्भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥ ६ ॥

तपतीत्यादि । अयञ्च राजा स्वतेजसा सूर्य्यइव पश्यतां चक्षूंषि मनांसि च सन्तापयति नचैनं राजानम्पृथिव्याङ्कश्चिद प्याभिमुख्येन द्रष्टुं क्षमते ॥ ६ ॥

सोग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्म्मराट् ।
स कुवेरः स वरुणः स महेन्द्रः प्रभावतः ॥ ७ ॥

सइत्यादि । एवञ्चाग्न्यादीनाम्पूर्वोक्तानामंशभवत्वात्त त्कर्म्मकारित्वाच्च प्रतापयुक्तस्तेजस्वीत्यादिना नवमाध्याये वक्ष्य माणत्वात् । स राजा प्रकृत्यतिशयेनाग्न्यादिरूपोभवति ॥ ७ ॥

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः। महती देवता ह्येषा नररूपेण तिष्ठति ॥ ८॥

ततश्च बाल इत्यादि। मनुष्य इति बुद्ध्या बालोऽपि राजा नावमन्तव्यः यस्मान्महतीयं काचिद्देवता मानुषरूपेणावतिष्ठते एतेन देवतावज्ञायां अधर्मोदयाददृष्टदोष उक्तः ॥ ८॥

एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्। कुलन्दहति राजाग्निः सपशुद्रव्यसञ्चयम् ॥ ९ ॥

सम्प्रति दृष्टदोषमाह एकमित्यादि। योऽग्नेरतिसमीपं अनवहितः सन् उपसर्पति स दुरुपसर्पी तमेकमेवाग्निर्दहति न तत्पुत्रादिकं क्रुद्धो राजाग्निः पुत्रदारभ्रात्रादिरूपं कुलमेव गवाश्वादिपशुसुवर्णादिधनसञ्चयसहितं सापराधस्य निहन्ति ॥ ९॥

कार्य्यं सोऽवेक्ष्य शक्तिञ्च देशकालौ च तत्त्वतः। कुरुते धर्म्मसिद्ध्यर्थं विश्वरूपम्पुनः पुनः ॥ १० ॥

कार्य्यमित्यादि। स राजा प्रयोजनापेक्षया स्वशक्तिन्देशकालौ चावेक्ष्य कार्य्यसिद्ध्यर्थं तत्त्वतो विश्वरूपं बहूनि रूपाणि

करोति जातिविवक्षया बहुष्वेकवचनं। अशक्तिदशायां क्षमते शक्तिमाप्याप्युन्मूलयति एवमेकस्मिन्नपि देशे काले च प्रयोजनानुरोधेन शत्रुर्वा मित्रं वा उदासीनोवा भवति अतोराजवल्लभोऽहमिति बुद्ध्या नावज्ञेयः॥ १०॥

यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे। मृत्युश्च वसति क्रोधे सर्व्वतेजोमयोहि सः॥ ११॥

यस्येत्यादि। पद्माशब्दः श्रीपर्य्यायोपि महत्त्वविवक्षयाऽत्र प्रयुक्तः यस्य प्रसादे सति महती श्रीर्भवति अतः श्रीकामेन सेव्यः यस्य शत्रवः सन्ति तानपि सन्तोषितोहन्ति तेन च शत्रुवधकामेनाऽऽराधनीयः यस्मै क्रुध्यति तस्य मृत्युङ्करोति तस्माज्जीवनार्थिना न क्रोधनीयः यस्मात्सर्वेषां सूर्य्याग्निसोमादीनान्तेजो बिभर्त्ति॥ ११॥

तं यस्तु द्वेष्टि संमोहात्सविनश्यत्यसंशयम्। तस्यह्याशु विनाशाय राजा प्रकुरुते मनः॥ १२॥

तमित्यादि। तं राजानमज्ञतया योद्वेष्टि तस्याप्रीतिमुत्पादयति स निश्चितं राजक्रोधान्नश्यति यस्मात्तस्य विनाशाय शीघ्रं राजा मनोनियुङ्क्ते॥ १२॥

तस्माद्धर्म्मं यमिष्टेषु स व्यवस्येन्नराधिपः। अनि
ष्टञ्चाप्यनिष्टेषु तन्धर्म्मं न विचालयेत् ॥ १३ ॥

तस्मादित्यादि। यतः सर्व्वतेजोमयोनृपतिस्तस्मादपेक्षि
तेषु यमिष्टं शास्त्रानुष्ठेयं शास्त्राविरुद्धं निश्चित्य व्यवस्थापयति
अनपेक्षितेषु चानिष्टं नियमं नातिक्रामेत् ॥ १३ ॥

तस्यार्थे सर्व्वभूतानां गोप्तारन्धर्म्ममात्मजम्।
ब्रह्मतेजोमयन्दण्डमसृजत्पूर्व्वमीश्वरः ॥ १४ ॥

तस्यार्थे सर्व्वेति। तस्य राज्ञः प्रयोजनसिद्धये सर्व्वप्राणिनां
रक्षितारं धर्म्मस्वरूपमुक्तं ब्रह्मणोयत्कैवल्यन्तेजस्तेन निर्मितं
न पाञ्चभौतिकन्देहम्ब्रह्मा पूर्व्वं सृष्टवान् ॥ १४ ॥

तस्य सर्व्वाणि भूतानि स्थावराणि चराणि च।
भयाद्भोगाय कल्पन्ते स्वधर्म्मान्न चलन्ति च ॥ १५ ॥

तस्येत्यादि तस्य दण्डस्य भयेन चराचराः सर्व्वे प्राणिनो
भोगं कर्त्तुं समर्था भवन्ति। अन्यथा बलवता दुर्ब्बलस्य धन
दारादिग्रहणे तस्यापि तदपेक्ष्य बलिष्ठेति कस्यापि भोगोन

सिद्धेत् वृक्षादीनामपि स्थावराणां छेदने भोगासिद्धिः तथा सतामपि नित्यनैमित्तिकस्वधर्म्मानुष्ठानं अकरणे याम्ययातनाभयादेव ॥ १५ ॥

**तन्देशकालौ शक्तिञ्च विद्याञ्चावेक्ष्य तत्त्वतः।**
**यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्त्तिषु ॥ १६ ॥**

तमित्यादि। तन्दण्डं देशकालौ दण्डस्य च शक्तिं विद्यादिकं यस्मिन्नपराधे योदण्डोऽर्हति इत्यादिकं शास्त्रानुसारेण तत्त्वतोनिरूप्यापराधिषु प्रवर्त्तयेत् ॥ १६ ॥

**स राजा पुरुषोदण्डः स नेता शासिता च सः।**
**चतुर्णामाश्रमाणाञ्च धर्म्मस्य प्रतिभूः स्मृतः ॥ १७ ॥**

सइत्यादि। सएव दण्डोवस्तुतोराजा तस्मिन् सति राजशक्तियोगात् सएव पुरुषस्ततोन्ये स्त्रियइव तद्विधत्वात् सएव नेता तेन कार्य्याणि नीयन्ते प्राप्यन्ते सएव शासिता शासनमाज्ञातद्दातृत्वात् सएव चतुर्णामप्याश्रमाणां योधर्म्मस्तस्य सम्पादने प्रतिभूरिव प्रतिभूर्मुनिभिः स्मृतः ॥ १७ ॥

दण्डः शास्ति प्रजाः सर्व्वा दण्डएवाभिरक्षति।
दण्डः सुप्तेषु जागर्त्ति दण्डन्धर्म्मं विदुर्बुधाः ॥१८॥

दण्डःशास्तीति। यस्माद्दण्डः सर्व्वाः प्रजाश्शास्तिं करोति तस्मात् साधूक्तं शासितेति ज्ञेयं यस्मात् सएव प्रजारक्षति ततोयुक्तमुक्तं राजेति निद्रास्वपि रक्षिष्वपि दण्डएव जागर्त्ति तद्भयेनैव चौरादीनामप्रवृत्तेः दण्डएव धर्म्महेतुत्वात् धर्म्मं जानन्ति कारणं कार्य्योपचारः ऐहिकपारत्रिकदण्डभयादेव धर्म्मानुष्ठानात्॥ १८ ॥

समीक्ष्य सधृतः सम्यक् सर्व्वारञ्जयति प्रजाः।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्व्वतः॥ १९ ॥

समीक्ष्येत्यादि। सदण्डः शास्त्रतः सम्यङ्निरूप्यापराधानुरूपेण देहधनादिषु धृतः सर्व्वाः प्रजाः सानुरागाः करोति अविचार्य्य तु लोभादिना प्रयुक्तः सर्वाणि राष्ट्रार्थपुत्रादीनि नाशयति सर्व्वतइति द्वितीयार्थे तसिः॥ १९ ॥

यदि न प्रणयेद्राजा दण्डन्दण्ड्येष्वतन्द्रितः।
शूलेमत्स्यानिवापक्ष्यन् दुर्ब्बलान् बलवत्तराः॥ २०॥

यदीत्यादि। यदि राजाऽनलसोभूत्वा दण्डप्रणयनं न कुर्य्यात् तदा शूले कृत्वा मत्स्यानिव बलवन्तोदुर्वलान् अपक्ष्यन्

लुङन्तस्य पचिधातोरूपमिदं बलिनोऽल्पबलानां हिंसाम करिष्यन् इत्यर्थः शूले मत्स्यानिवापच्यन् इत्यपमेधातिथि गोविन्दराजलिखितः पाठः जले मत्स्यानिवाहिंस्युरिति च पाठान्तरं अत्र बलवन्तोदुर्वलान् हिंस्युरिति मत्स्यन्याय एवस्यादित्युक्तम् ॥ २० ॥

अद्यात्काकः पुरोडाशं श्वावलिह्याद्धविस्तथा।
स्वाम्यञ्च न स्यात्कस्मिंश्चित्प्रवर्त्तेताधरोत्तरम् ॥२१॥

अद्यादित्यादि। यदि राजा दण्डं नाचरिष्यत् तदा यज्ञेषु सर्व्वथा हविरनर्हः काकः पुरोडाशमखादिष्यत् तथा कुक्कुरः पायसादिहविरवालेच्यत् न कस्यचित् कुत्रचित् स्वाम्यमभविष्यत् ततो बलिना तद्ग्रहणात् ब्राह्मणादिवर्णानाञ्च मध्ये यदधरं शूद्रादि तदेवोत्तरप्रधानमावर्त्तिष्यत् ॥ २१ ॥

सर्व्वोदण्डजितोलोकोदुर्लभोहि शुचिर्नरः।
दण्डस्य हि भयात्सर्व्वं जगद्भोगाय कल्पते ॥ २२ ॥

सर्व्वइति। सर्व्वोयं लोकः दण्डेनैव नियमितः सन्मार्गेऽवतिष्ठते स्वभावविशुद्धोहि मानुषः कष्टेन लभ्यते तथा सर्व्वमिदञ्जगत् दण्डस्यैव भयादावश्यकभोजनादिरूपेपि भोगे समर्थं भवति ॥ २२ ॥

देवदानवगन्धर्वारक्षांसि पतगोरगाः। तेपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥ २३ ॥

देवेति। उक्तमपि दण्डस्य भोगसम्पादकत्वन्दार्ढ्यार्थं पुनरुच्यते इन्द्राग्निसूर्य्यवाय्वादयोदेवाः तथा दानवगन्धर्व्व राक्षसपक्षिसर्पा अपि जगदीश्वरपरमार्थभयपीडिताएव वर्ष णाद्युपकाराय प्रवर्त्तन्ते। तथाच श्रुतिः। भयादस्याग्निस्त पति भयात्तपति सूर्य्यः भयादिन्द्रश्च वायुश्च मृत्युर्द्धावति पञ्चमइति ॥ २३ ॥

दुष्येयुः सर्व्ववर्णाश्च भिद्येरन् सर्व्वसेतवः। सर्व्व लोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥ २४ ॥

दुष्येयुरिति। दण्डस्यानाचरणात् अनुचितेन वा प्रवर्त्त नात् सर्व्वे ब्राह्मणादिवर्णाइतरेतरस्त्रीगमनेन सङ्कीर्य्येरन् सर्व्वशास्त्रीयनियमाश्चतुर्वर्गफलाउत्सीदेयुः चौर्य्यसाहसादिना च परस्यापकारात् सर्व्वलोकसंक्षोभश्च जायेत ॥ २४ ॥

यत्र श्यामोलोहिताक्षोदण्डश्चरति पापहा। प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ २५ ॥

यत्रेति। यत्र देशे शास्त्रप्रमाणावगतः श्यामवर्णः लोहितनय नोऽधिष्ठातृदेवताकोदण्डोविचरति तत्र प्रजाव्याकुलानभवन्ति दण्डप्रणेता यदि विषयानुरूपं दण्डं सम्यक् जानाति ॥ २५ ॥

तस्याहुः सम्प्रणेतारं राजानं सत्यवादिनम्।
समीक्ष्य कारिणं प्राज्ञं धर्मकामार्थकोविदम्॥ २६ ॥

तस्येत्यादि। तस्य दण्डस्य प्रवर्त्तयितारं अभिषेकादिगुणयुक्तं नृपतिमवितथवादिनं समीक्ष्यकारिणं तत्त्वातत्त्वविचारोचितं प्रज्ञाशालिनन्धर्म्मार्थकामानां ज्ञातारं मन्वादय आहुः॥ २६ ॥

तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्द्धते।
कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते॥ २७ ॥

तमिति। तन्दण्डं राजा सम्यक् प्रवर्त्तयन् धर्म्मार्थकामैर्वृद्धिङ्गच्छति यः पुनर्विषयाभिलाषी विषमः कोपनः क्षुद्रः छलान्वेषी नृपः स स्वकृतेनैव दण्डेनामात्यादिकोपादधर्माद्वा विनाश्यते॥ २७ ॥

दण्डो हि सुमहत्तेजो दुर्द्धरश्चाकृतात्मभिः। धर्म्माद्विचलितं हन्ति नृपमेव सबान्धवम्॥ २८ ॥

दण्ड इति। यतो दण्डः प्रकृष्टतेजःस्वरूपः स्वशास्त्रैरसंस्कृतात्मभिः दुःखेन ध्रियते अतो राजधर्मरहितं नृपमेव पुत्रबन्धुसहितं नाशयति॥ २८ ॥

ततो दुर्गञ्च राष्ट्रञ्च लोकञ्च सचराचरम्। अन्तरीक्षगतांश्चैव मुनीन् देवांश्च पीडयेत् ॥ २९ ॥

तत इति। दोषाद्यनपेक्षया यो दण्डः क्रियते स बन्धुनृपनाशानन्तरं धन्वादिदुर्गराष्ट्रं देशम्पृथिवीलोकं जङ्गमस्थावरसहितं हविःप्रदानजीवनादेवा इति श्रुत्या हविःप्रदानाभावे अन्तरीक्षगतानृषीन् देवांश्च पीडयेदिति ॥ २९ ॥

सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना। न शक्योन्यायतोनेतुं सक्तेन विषयेषु च ॥ ३० ॥

स इत्यादि। स दण्डोमन्त्रिसेनापतिपुरोहितादिसहायरहितेन मूर्खेण लोभवता शास्त्रासंस्कृतबुद्धिपरेण नृपतिना शास्त्रतान प्रणेतुं शक्यते ॥ ३० ॥

शुचिना सत्यसन्धेन यथाशास्त्रानुसारिणा। प्रणेतुं शक्यते दण्डः सुसहायेन धीमता ॥ ३१ ॥

शुचिनेति। अर्थादिशौचयुक्तेन सत्यप्रतिज्ञेन यथाशास्त्रव्यवहारिणा शोभनसहायेन तत्त्वज्ञेन दण्डः कर्तुं शक्यते इति पूर्वोक्तदोषप्रतिपक्षे गुणा अनेन श्लोकेनोक्ताः ॥ ३१ ॥

स्वराष्ट्रे न्यायवृत्तः स्याद्भृशदण्डश्च शत्रुषु। सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ ३२ ॥

स्वराष्ट्र इति। आत्मदेशे यथाशास्त्रव्यवहारी स्यात् शत्रुविषयेषु तीक्ष्णदण्डोभवेन्निसर्गस्नेहविषयेष. मित्रेष्वकुटिलः

स्यान्न कार्य्यमित्येषु। ब्राह्मणेषु च कृताल्पापराधेषु क्षमावान् भवेत्॥ ३२॥

एवं वृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः।
विस्तीर्य्यते यशोलोके तैलविन्दुरिवाम्भसि ॥ ३३॥

एवमित्यादि। शिलोञ्छेनेति क्षीणकोषत्वं विवक्षितं क्षीणकोषस्यापि नृपतेरुक्ताचारवतोजले तैलविन्दुरिव कीर्त्तिं र्लोके विस्तारमेति ॥ ३३ ॥

अतस्तु विपरीतस्य नृपतेरजितात्मनः।
संक्षिप्यते यशोलोके घृतविन्दुरिवाम्भसि ॥ ३४ ॥

अत इति। उक्ताचाराद्विपरीताचारवतोनृपतेरजितेन्द्रियस्य जले घृतविन्दुरिव कीर्त्तिर्लोके सङ्कोचमेति ॥ ३४ ॥

स्वे स्वे धर्म्मे निविष्टानां सर्व्वेषामनुपूर्व्वशः। वर्णानामाश्रमाणाञ्च राजा सृष्टोऽभिरक्षिता॥ ३५ ॥

स्वे स्वे इत्यादि। क्रमेण स्वधर्म्मानुष्ठातॄणां ब्राह्मणादिवर्णानां ब्रह्मचार्य्याद्याश्रमाणाञ्च विश्वसृजा राजा रक्षिता सृष्टः तस्मात्तेषां रक्षणमकुर्व्वतोराज्ञः प्रत्यवायः स्वधर्म्मविरहिणान्तु रक्षणेपि न प्रत्यवायइत्यस्य तात्पर्य्यार्थः॥ ३५ ॥

तेन यद्यत्सभृत्येन कर्त्तव्यं रक्षता प्रजाः। तत्त
दोऽहम्प्रवक्ष्यामि यथावदनुपूर्व्वशः ॥ ३६ ॥

तेनेत्यादि। वक्ष्यमाणावतारार्थोऽयं श्लोकः तेन राज्ञा प्रजारक्षणं कुर्व्वता सामात्येन यद्यत्कर्त्तव्यं तत्तत्समग्रं युक्ताक्रमभिधास्यामि ॥ ३६ ॥

ब्राह्मणान् पर्य्युपासीत प्रातरुत्थाय पार्थिवः।
त्रैविद्यवृद्धान् विदुषस्तिष्ठेत्तेषाञ्च शासने ॥ ३७ ॥

ब्राह्मणानिति। प्रत्यहम्प्रातरुत्थाय ब्राह्मणान् ऋग्यजुःसामाख्यविद्यात्रयग्रन्थार्थाभिज्ञान् विदुष इति नीतिशास्त्राभिज्ञान्सेवेत तदाज्ञां कुर्य्यात् ॥ ३७ ॥

वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन्।
वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते ॥ ३८ ॥

वृद्धानित्यादि। तांश्च ब्राह्मणान् वयस्तपआदिवृद्धान् अर्थतोग्रन्थतश्च वेदज्ञान्वहिरन्तश्चार्थदानादिना शुचीन्नित्यं सेवेत यस्माद्वृद्धसेवी सततं हिंस्रैराक्षसैरपि पूज्यते तैरपि तस्य हितं क्रियते सुतराम्मनुष्यैः ॥ ३८ ॥

तेभ्योऽधिगच्छेद्विनयं विनीतात्मापि नित्यशः।
विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ॥३९॥

तेभ्य इत्यादि। सहजप्रज्ञया अर्थशास्त्रादिज्ञानेन च विनीतोऽप्यतिशयार्थं तेभ्यो विनयमभ्यसेत्। यस्माद्विनीतात्मा राजा न कदाचिन्नश्यति ॥ ३९ ॥

बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः।
वनस्था अपि राज्यानि विनयात्प्रतिपेदिरे ॥ ४० ॥

बहव इत्यादि। करितुरगकोषादिपरिच्छदयुक्ता अपि राजानः विनयरहिता नष्टाः बहवश्च वनस्था निष्परिच्छदा अपि विनयेन राज्यं प्राप्नुवन् ॥ ४० ॥

वेणो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः। सुदा सो यवनश्चैव सुमुखो निमिरेव च ॥ ४१ ॥

उभयत्रैव श्लोकद्वयेन दृष्टान्तमाह वेण इत्यादि। वेणो नहुषश्च राजापि यवनश्च च पुनः सुदासो नामा सुमुखो निमिश्चाविनयादनश्यन् ॥ ४१ ॥

पृथुस्तु विनयाद्राज्यं प्राप्तवान् मनुरेव च। कुवेरश्च धनैश्वर्य्यम्ब्राह्मण्यञ्चैव गाधिजः॥ ४२॥

पृथुरिति। पृथुर्मनुश्च विनयाद्राज्यं प्रापतुः कुवेरश्च विनयाद्धनाधिपत्यं लेभे गाधिपुत्रोविश्वामित्रश्च चत्रियः सन् तेनैव देहेन ब्राह्मण्यं प्राप्तवान्। राज्यलाभावसरे ब्राह्मण्यप्राप्तिरप्रस्तुतापि विनयोत्कर्षार्थमुक्ता दृष्टश्चायं शास्त्रानुष्ठाननिषिद्धवर्जनरूपोविनयोयद्नेन चत्रियोपि दुर्लभं ब्राह्मण्यं लेभे॥ ४२॥

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीं। आन्वीक्षिकीञ्चात्मविद्यां वार्त्तारम्भांश्च लोकतः॥ ४३॥

त्रैविद्येभ्यइति। त्रिवेदीरूपविद्याविज्ञः त्रिवेदीमर्थतोग्रन्थतश्चाभ्यसेत् ब्रह्मचर्य्यदशायामेव वेदग्रहणात्समावृत्तस्य च राज्याधिकारात् अभ्यासार्थोयमुपदेशः दण्डनीतिञ्चार्थशास्त्ररूपां अर्थयागचेमोपदेशिनीं पारम्पर्य्यागतत्वेन नित्यां तद्विज्ञाऽधिगच्छेत्तथा आन्वीक्षिकीं तर्कविद्याम्भूतायुक्तिप्रत्युत्तरोपयोगिनीं ब्रह्मविद्याञ्चाभ्युदयव्यसनयोर्हर्षविषादप्रशमनहेतुं शिक्षेत् कृषिवाणिज्यपशुपालनादिवार्त्ता तदारम्भान् धनोपायार्थान् तदभिज्ञकर्षकादिभ्यः शिक्षेत्॥ ४३॥

इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम्।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः॥ ४४॥

इन्द्रियाणामित्यादि। चक्षुरादीनां इन्द्रियाणां विषया सक्तिवारणे सर्व्वकालं यत्नं कुर्य्यात्। यस्माज्जितेन्द्रियः प्रजा नियन्तुं शक्नोति नतु विषयोपभोगव्यग्रः ब्रह्मचारिधर्म्मेषु सर्व्व पुरुषोपादेयतया अभिहितोपीन्द्रियजयो राजधर्म्मेषु मुख्यत्व ज्ञानार्थत्वादनन्तरवक्ष्यमाणव्यसननिवृत्तिहेतुत्वाच्च पुनरुक्तः ॥ ४४ ॥

दश कामसमुत्थानि तथाष्टौ क्रोधजानि च।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्॥ ४५॥

दशेत्यादि। दश कामसम्भवानि अष्टौ क्रोधजानि वक्ष्य माणव्यसनानि यत्नतस्त्यजेत् दुरन्तानि दुःखावसानानि आदौ सुखयन्ति अन्ते दुःखानि कुर्व्वन्ति यद्वा दुर्लभोऽन्तो येषान्तानि दुरन्तानि नहि व्यसनिनस्ततो निवर्त्तयितुं शक्नुवन्ति ॥ ४५ ॥

कामजेषु प्रसक्तोहि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैवतु ॥ ४६ ॥

वर्जनप्रयोजनमाह कामजेष्विति। यस्मात्कामजनितेषु व्यसनेषु प्रसक्तोराजा धर्मार्थाभ्यां हीयते क्रोधजेषु प्रसक्तः प्रकृतिकोपाद्देहनाशं प्राप्नोति ॥ ४६ ॥

मृगयाक्षोदिवास्वप्नः परिवादः स्त्रियोमदः। तौर्य्यत्रिकं वृथाट्या च कामजोदशकोगणः ॥ ४७ ॥

तानि व्यसनानि नामतोदर्शयति मृगयेत्यादि। आखेटकाख्योमृगवधोमृगया अक्षोद्यूतक्रीडा सकलकार्य्यविघातिनी दिवानिद्रा परदोषकथनं स्त्रीसम्भोगोमद्यपानजनितोमदः तौर्य्यत्रिकं नृत्यगीतवादित्राणि वृथाभ्रमणं एषदशपरिमाणोदशकः सुखेच्छाप्रभवोगणः ॥ ४७ ॥

पैशुन्यं साहसन्द्रोहईर्षासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोपि गणाष्टकः ॥ ४८ ॥

पैशुन्यमिति। पैशुन्यमविज्ञातदोषाविष्करणं साधोर्बन्धनादिनानिग्रहः। द्रोहश्छद्मवधः ईर्षाऽन्यगुणासहिष्णुता

परगुणेषु दोषाविष्करणमसूया अर्थदूषणमर्थानामपहरणं देयानामदानञ्च वाक्पारुष्यमाक्रोशादि दण्डपारुष्यं ताडनादि एषोऽष्टपरिमाणोव्यसनगणः क्रोधाद्भवति ॥ ४८ ॥

द्वयोरप्येतयोर्मूलं यं सर्व्वे कवयोविदुः। तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ ४९ ॥

द्वयोरिति। एतयोर्द्वयोरपि कामक्रोधजव्यसनसङ्घयोः कारणं यं स्मृतिकाराजानन्ति तं व्यसनहेतुकं यत्नतोलोभन्त्यजेत्। यस्मादेतद्गणद्वयं लोभाज्जायते क्वचिद्धनलाभतः क्वचित्प्रकारान्तरलोभतः प्रवृत्तेः ॥ ४९ ॥

पानमचाः स्त्रियश्चैव मृगया च यथाक्रमम्। एतत्कष्टतमं विद्याच्चतुष्कङ्कामजे गणे ॥ ५० ॥

पानमिति। मद्यपानमचैः क्रीडा स्त्रीसम्भोगोमृगया चेति क्रमपठितमेतच्चतुष्कङ्कामजव्यसनमध्ये बहुदोषत्वादतिशयेन दुःखहेतुं जानीयात् ॥ ५० ॥

दण्डस्य पातनञ्चैव वाक्पारुष्यार्थदूषणे। क्रोधजेपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥ ५१ ॥

दण्डस्येत्यादि। दण्डपातनं वाक्पारुष्यं अर्थदूषणञ्चेति क्रोधजेपि व्यसनगणे दोषबहुलत्वादतिशयितदुःखसाधनं मन्येत ॥ ५१ ॥

सप्तकस्यास्य वर्गस्य सर्व्वत्रैवानुषङ्गिणः। पूर्व्वं पूर्व्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ ५२ ॥

सप्तकेति। अस्य पानादेः कामक्रोधसम्भवस्य सप्तपरिमाणस्य व्यसनवर्गस्य सर्व्वस्मिन्नेव राजमण्डले प्रायेणावस्थितस्य पूर्व्वं पूर्व्वव्यसनमुत्तरोत्तरात् कष्टतरं प्रशस्तात्मा राजा जानीयात् तथाहि द्यूतात्पानङ्कष्टतरं मद्यपानेन मत्तस्य संज्ञाप्रणाशात् यथेष्टचेष्टया देहधनादिविरोधइत्यादयोदोषाः द्यूतेतु पाक्षिकी धनावाप्तिरप्यस्ति स्त्रीव्यसनात् द्यूतं कष्टं द्यूते हि वैरोद्भवादयोनीतिशास्त्रोक्तादोषाः मूत्रपुरीषवेगधारणाच्च व्याध्युत्पत्तिः स्त्रीव्यसने पुनः अपत्योत्पत्त्यादिगुणयोगोप्यस्ति मृगयास्त्रीव्यसनयोः स्त्रीव्यसनन्दुष्टं तत्रादर्शनं कार्य्याणां कालातिपातेन धर्म्मलोपादयोदोषाः मृगयायान्तु व्यायामे नारोग्यादिगुणयोगोप्यस्तीत्येवं कामजचतुष्कस्य पूर्व्वं पूर्व्वं गुरु दोषं क्रोधजेष्वपि त्रिषु वाक्पारुष्याद्दण्डपारुष्यं दुष्टं अङ्गच्छेदादेरशक्यसमाधानत्वात् वाक्पारुष्ये तु कोपानलोदान मानपानीयसेकैः शक्यः शमयितुं। अर्थदूषणाद्वाक्पारुष्यं दोषवन्मर्म्मपीडाकरं वाक्पारुष्यस्य दुश्चिकित्स्यत्वात्। तदुक्तं न संरोहति वाक्क्षतं अर्थदूषणन्तु प्रचुरतरार्थदानाच्छक्य समाधानं एवं क्रोधजत्रिकस्यापि पूर्व्वं पूर्व्वं दुष्टतरं यत्नतस्त्यजेत् ॥ ५२ ॥

व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ॥ ५३ ॥

व्यसनेति । यद्यपि मृत्युव्यसने द्वे अपीह लोके संज्ञाप्रणाशादिदुःखहेतुतया शास्त्रानुष्ठानविरोधितया च तुल्ये तथापि व्यसनं कष्टतरम्परत्रापि नरकपातहेतुत्वात् तदाह व्यसन्यधोऽधो व्रजति बहून्नरकान् गच्छति इत्यर्थः अव्यसनी तु मृतः शास्त्रानुष्ठानप्रतिपक्षव्यसनाभावात्स्वर्गं गच्छति एतेनातिप्रसक्तिर्व्यसनेषु निषिध्यते नतु तस्य सेवनमपि ॥ ५२ ॥

मौलान् शास्त्रविदः शूरान् लब्धलक्षान्कुलोद्गतान् । सचिवान्सप्त चाष्टौ वा प्रकुर्व्वीत परीक्षितान् ॥ ५४ ॥

मौलानिति । मौलान् पितृपितामहक्रमेण सेवकान् तेषामपि लोभादिना व्यभिचारात् तद्वारणार्थं दृष्टादृष्टार्थशास्त्रज्ञान् विक्रान्तान् लब्धलक्षान् लक्ष्यादप्रच्युतशरशूलादीन् आयुधविद इत्यर्थः विशुद्धकुलभवान् देवतास्पर्शादिनियतान् अमात्यान्सप्ताष्टौ वा मन्त्रादौ कुर्व्वीत ॥ ५४ ॥

अपि यत्सुकरं कर्म्म तदप्येकेन दुष्करम् । विशेषतोऽसहायेन किन्तु राज्यं महोदयम् ॥ ५५ ॥

यस्मात् अपीत्यादि । सुखेनापि यत्क्रियते कर्म्म तदप्येकेन दुष्करम्भवति विशेषतो राज्यं यन्महाफलं तत्कथमसहायेन क्रियते ॥ ५५ ॥

तैः सार्द्धञ्चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम्।
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥ ५६ ॥

तैरित्यादि। तैः सचिवैः सह सामान्यं मन्त्रेष्वगोपनीयं सन्धिविग्रहादि तन्निरूपयेत् तथा तिष्ठत्यनेनेति स्थानं दण्ड कोषपुरराष्ट्रात्मकञ्चतुर्विधञ्चिन्तयेत्। दण्ड्यतेऽनेनेति दण्डो हस्त्यश्वरथपदातयः तेषाम्पोषणं रक्षणादि तच्चिन्तयेत् कोषो ऽर्थनिचयः तस्यायव्ययादि पुरस्य रक्षणादि राष्ट्रं देशः तद्वासि मनुष्यपश्वादिधारणक्षमत्वादि चिन्तयेत् तथा समुदयन्त्युत्पद्यन्ते अस्मादर्थादिति समुदयो धान्यहिरण्याद्युत्पत्तिस्थानं तन्निरूपयेत् तथा गुप्तिं रक्षामात्मगतां राष्ट्रगताञ्च स्वपरीक्षितमन्नाद्यमद्यात् परीक्षिताः स्त्रियश्चैवमित्यादिनात्मरक्षणं राष्ट्रस्य संग्रहे नित्यमित्यादिना राष्ट्ररक्षाञ्च वक्ष्यति लब्धस्य च धनस्य प्रशमनानि सत्पात्रे प्रतिपादनादीनि चिन्तयेत्तथा च वक्ष्यति। जित्वा सम्पूजयेद्देवानित्यादि ॥ ५६ ॥

तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक्।
समस्तानाञ्च कार्य्येषु विदध्याद्धितमात्मनः ॥ ५७ ॥

तेषामिति। तेषां सचिवानां रहसि निष्प्रतिपक्षतया हृदयगतभावज्ञानसम्भवात् प्रत्येकमभिप्रायं समस्तानामपि युगपदभिप्रायम्बुद्ध्वा कार्य्येषु यदात्मनो हितन्तत्कुर्य्यात् ॥ ५७ ॥

सर्व्वेषान्तु विशिष्टेन ब्राह्मणेन विपश्चिता।
मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥ ५८ ॥

सर्व्वेषामिति। एषामेव सर्व्वेषां सचिवानां मध्यादन्यतमेन धार्म्मिकत्वादिना विशिष्टेन विदुषा ब्राह्मणेन सह सन्धिविग्रहादिवक्ष्यमाणगुणषट्कोपेतमत्कृष्टं मन्त्रन्निरूपयेत् ॥ ५८ ॥

नित्यं तस्मिन्समाश्वस्तः सर्व्वकार्य्याणि निःक्षिपेत्।
तेन सार्द्धं विनिश्चित्य ततः कर्म्म समारभेत् ॥ ५९ ॥

नित्यमिति। सर्व्वदा तस्मिन् ब्राह्मणे संजातविश्वासो भूत्वा यानि कुर्य्यात्तानि सर्व्वकार्य्याणि समर्पयेत्। तेन सह निश्चित्य सर्व्वं कर्म्मारभेत् ॥ ५९ ॥

अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान्।
सम्यगर्थसमाहर्तॄनमात्यान् सुपरीक्षितान् ॥ ६० ॥

अन्यानित्यादि। अन्यानपि अर्थदानादिना शुचीन् प्रज्ञाशालिनः सम्यग्धनार्जनशीलान्धर्म्मादिना परीक्षितान् कर्म्मसचिवान् कुर्य्यात् ॥ ६० ॥

निर्व्वर्त्तेतास्य यावद्भिरिति कर्त्तव्यता नृभिः। ताव तोऽतन्द्रितान् दक्षान् प्रकुर्वीत विचक्षणान् ॥ ६१ ॥

निर्व्वर्त्तेतेति। अस्य राज्ञो यत्संख्याकैर्म्मनुष्यैः कर्म्मजातं सम्पद्यते तत्संख्यकान्मनुष्यानालस्यशून्यान् क्रियासु सोत्साहान् तत्कर्म्मज्ञान् तत्र कुर्य्यात् ॥ ६१ ॥

तेषामर्थे नियुञ्जीत शूरान् दक्षान् कुलोद्गतान्। शुचीनाकरकर्म्मान्ते भीरूनन्तर्निवेशने ॥ ६२ ॥

तेषामिति। तेषां सचिवानां मध्ये विक्रान्तांश्चतुरान् कुलाङ्कुशनियमितान् शुचीन् अर्थनिःस्पृहान् धनोत्पत्तिस्थाने नियुञ्जीत। अस्यैवोदाहरणं आकरकर्म्मान्त इति आकरेषु सुवर्णाद्युत्पत्तिस्थानेषु कर्म्मान्तेषु च इक्षुधान्यादि संग्रहस्थानेषु अन्तर्निवेशने भोजनशयनगृहान्तःपुरादौ भीरून् नियुञ्जीत शूराहि तत्र राजानमप्यायेणैकाकिनं स्त्रीवृतं वा कदाचित् शत्रूपजापदूषिता हन्युरपि ॥ ६२ ॥

दूतञ्चैव प्रकुर्व्वीत सर्व्वशास्त्रविशारदम्। इङ्गिताकारचेष्टज्ञं शुचिन्दक्षं कुलोद्गतम् ॥ ६३ ॥

दूतमिति। दूतञ्च दृष्टादृष्टार्थशास्त्रज्ञं इङ्गितमभिप्रायसूचकं वचनस्वरादि आकारो देहधर्म्मादि सुखप्रसाद

वैवर्ण्यादिरूपः प्रीत्यप्रीतिसूचकः चेष्टा करास्फालनादिक्रिया कोपादिसूचिका तदीयतत्त्वज्ञं अर्थदानस्त्रीव्यसनाद्यभावात्मकं शौचयुक्तश्चतुरं कुलीनं कुर्य्यात् ॥ ६३ ॥

अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् ।
वपुष्मान् वीतभीर्वाग्मी दूतोराज्ञः प्रशस्यते ॥ ६४ ॥

यस्मात् । अनुरक्तइति । जनेषु अनुरागवान् तेन प्रतिराजादेरपि अद्वेषविषयः अर्थस्त्रीशौचयुक्तः तेन धनस्त्रीदानादिना ऽभेद्यः दक्षश्चतुरः तेन कार्य्यकालन्नातिक्रामति स्मृतिमान् तेन सन्देशं न विस्मरति देशकालज्ञः तेन देशकालौ ज्ञात्वा अन्यदपि सन्दिष्टं देशकालोचितमन्यथा कथयति सुरूपः तेनादेयवचनः विगतभयः तेनाप्रियसन्देशस्यापि वक्ता वाग्मी तेन संज्ञताद्युक्तिचमः एवं विधोदूतोराज्ञः प्रशस्तो भवति ॥ ६४ ॥

अमात्ये दण्डआयत्तोदण्डे वैनयिकी क्रिया ।
नृपतौ कोषराष्ट्रे च दूते सन्धिविपर्य्ययौ ॥ ६५ ॥

अमात्यइति । अमात्ये सेनापतौ हस्त्यश्वरथपादाताद्यात्मकोदण्डआयत्तः तदिच्छया तस्य कार्य्येषु प्रवृत्तेः विनय

योगात् वैनयिको योविनयः स दण्डआयत्तः नृपतावर्थसञ्च यस्मात्तद्देशावायत्तौ राज्ञा पराधीनौ न कर्त्तव्यौ स्वयमेव चिन्तनीयन्धनं यामस्य दूते सन्धिविग्रहावायत्तौ तदिच्छया तत्प्रवृत्तेः॥ ६५॥

दूतएव हि सन्धत्ते भिनत्त्येव च संहतान्।
दूतस्तत् कुरुते कर्म्म भिद्यन्ते येन वा न वा॥ ६६॥

दूतएवेति। यस्माद्दूतएव भिन्नानां सन्धिसम्पादने क्षमः संहतानाञ्च भेदने तथा परदेशे दूतः तत्कर्म्म करोति येन संहताभिद्यन्ते तस्माद्दूते सन्धिविग्रहौ विपर्य्ययावायत्ता विति यदुक्तन्तस्यैवायमप्रपञ्चः॥ ६६॥

सविद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः। आकारमिङ्गितञ्चेष्टां भृत्येषु च चिकीर्षितम्॥ ६७॥

दूतस्य कार्य्यान्तरमाह। स विद्यादिति। स दूतोऽस्य प्रतिराजस्य कर्त्तव्ये आकारेङ्गितचेष्टाजानीयात् निगूढाश्च चराः प्रतिपक्षनृपस्यैव परिजनाः तस्मिन् युक्ताः तत्सन्निधावपि तेषामिङ्गितचेष्टितैः भृत्येषु च लुब्धक्षुब्धापमानितेषु प्रतिराजस्य कर्त्तुमीप्सितं जानीयात्॥ ६७॥

बुद्ध्वा च सर्वं तत्त्वेन परराजचिकीर्षितम्।
तथाप्रयत्नमातिष्ठेद्यथात्मानं न पीडयेत्॥ ६८॥

बुद्ध्वा चेति। उक्तलक्षणदूतद्वारेण प्रतिपक्षराजस्य कर्त्तुमिष्टं सर्वं तत्त्वतो ज्ञात्वा तथा प्रयत्नं कुर्य्यात् यथात्मनःपीडा न भवति ॥ ६८॥

जाङ्गलं शस्यसम्पन्नमार्य्यप्रायमनाविलम्। रम्यमानतसामन्तं स्वाजीव्यन्देशमावसेत्॥ ६९॥

जाङ्गलमिति। अल्पोदकतृणोयस्तु प्रवातः प्रचुरातपः। स ज्ञेयो जाङ्गलोदेशो बहुधान्यादिसंयुतः.। प्रचुरधार्म्मिकजनं रोगोपसर्गाद्यैरनाकुलं फलपुष्पतरुलतादिमनोहरं प्रणतसमीपवास्तव्याधिकारादिजनं सुलभकृषिवाणिज्याद्याजीवनमाश्रित्यावासं कुर्य्यात्॥ ६९॥

धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा। नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम्॥ ७०॥

धन्वदुर्गमिति। धन्वदुर्गं मरुवेष्टितश्चतुर्दिशम्पञ्चयोजनमनुदकं। महीदुर्गम्पाषाणेन इष्टकेन वा विस्ताराद्द्वैगुण्योच्छ्रा

येण द्वादशहस्तायुच्छ्रितेन युद्धार्थमुपरि भ्रमणयोग्येन साव रणगवाचादियुक्तेन प्राकारेण वेष्टितं। जलदुर्गं अगाधोदकेन सर्व्वतः परिवृतं। वार्चदुर्गं वहिः सर्व्वतोयोजनमात्रं व्याप्य तिष्ठन्महावृचकण्ठकिगुल्मलताद्याचितं नृदुर्गं चतुर्द्दिगवस्थायि हस्त्यश्वरथयुक्तवज्ञपादातेरचितं। गिरिदुर्गं पर्व्वतपृष्ठमति दुरारोहं संकटैकमार्गोपेतं अन्तर्नदीप्रस्रवणाद्युदकयुक्तं वज्ञशस्योत्पन्नचेत्रवृचान्वितं एतेषु दुर्गेषु मध्यादन्यतमं दुर्ग माश्रित्य पुरं विरचयेत्॥ ७०॥

सर्व्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत्। एषां हि वज्ञगुण्येन गिरिदुर्गं विशिष्यते॥ ७१॥

सर्व्वेणेति। यस्मादेषां दुर्गाणां मध्यात् दुर्गगुणवज्ञत्वेन गिरिदुर्गमतिरिच्यते तस्मात्सर्व्वप्रयत्नेन तदाश्रयेत् गिरिदुर्गं शत्रुदुरारोहत्वं महत्प्रदेशादल्पप्रयत्नप्रेरितशिलादिना वज्ञ विपचसैन्यव्यापादनमित्यादयोवहवोगुणाः॥ ७१॥

चीण्याद्यान्याश्रितास्त्वेषां मृगगर्त्ताश्रयाप्चराः। चीण्युत्तराणि क्रमशः स्रवङ्गमनरामराः॥ ७२॥

चीणीति। एषां दुर्गाणां मध्यात्प्रथमोक्तानि चीणि दुर्गाणि मृगादय आश्रिताः तच धन्वदुर्गं मृगैराश्रितं महीदुर्गं

गर्त्ताश्रितैर्मूषिकादिभिः अब्दुर्गं जलचरैर्नक्रादिभिः इतराणि त्रीणि वृक्षदुर्गादीनि वानरादयश्चाश्रिताः तत्र वृक्षदुर्गं वानरैराश्रितं नृदुर्गं मानुषैः गिरिदुर्गं देवैः ॥ ७२ ॥

यथा दुर्गाश्रितानेतान्नोपहिंसन्ति शत्रवः। तथारयो न हिंसन्ति नृपं दुर्गसमाश्रितं ॥ ७३ ॥

यथेत्यादि। यथैतान्दुर्गवासिनोमृगादीन् व्याधादयः शत्रवो न हिंसन्ति एवन्दुर्गाश्रितं राजानं न शत्रवः ॥ ७३ ॥

एकः शतं योधयति प्राकारस्थो धनुर्द्धरः। शतन्दशसहस्राणि तस्माद्दुर्गं विधीयते ॥ ७४ ॥

एकइति। यस्मादेकोधानुष्कः प्राकारस्थः शत्रूणां शतं योधयति प्राकारस्थं धानुष्कशतञ्च शत्रूणां दशसहस्राणि तस्माद्दुर्गं कर्त्तुमुपदिश्यते ॥ ७४ ॥

तत्स्यादायुधसम्पन्नं धनधान्येन वाहनैः। ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥ ७५ ॥

तदित्यादि। तद्दुर्गं खड्गाद्यायुधसुवर्णादिधनधान्यकरितुरगादिवाहनब्राह्मणभक्ष्यादिशिल्पियन्त्रघासोदकसम्पन्नं कुर्य्यात् ॥ ७५ ॥

तस्य मध्ये सुपर्य्याप्तं कारयेद्गृहमात्मनः। गुप्तं सर्व्वर्त्तकं शुभ्रं जलवृक्षसमन्वितम्॥ ७६॥

तस्येत्यादि। तस्य दुर्गस्य मध्ये सष्टु पर्य्याप्तं पृथक् पृथक् स्त्रीगृहदेवागारायुधागाराग्निशालादियुक्तं परिखाप्राकारादैर्गुप्तं सर्व्वर्त्तुफलपुष्पादियोगेन सर्व्वर्त्तुकं सुधाधवलितं वाप्यादिजलयुक्तं वृक्षान्वितमात्मनो गृहं कारयेत्॥ ७६॥

तदध्यास्योद्वहेद्भार्य्यां सवर्णां लक्षणान्विताम्। कुले महति सम्भूतां हृद्यां रूपगुणान्विताम्॥ ७७॥

तदित्यादि। तद्गृहमाश्रित्य समानवर्णां शुभसूचकलक्षणोपेतां महाकुलप्रसूतां मनोहारिणीं सुरूपां गुणवतीं भार्य्यामुद्वहेत्॥ ७७॥

पुरोहितञ्च कुर्व्वीत वृणुयादेव चर्त्विजम्। तेऽस्य गृह्याणि कर्माणि कुर्य्युर्वैतानि कानि च॥ ७८॥

पुरोहितमिति। पुरोहितञ्चाथर्वणविधिना कुर्व्वीतच्छलिजञ्च कर्म्माणि कर्त्तुं वृणुयात ते चास्य राज्ञो गृह्योक्तानि चैतासम्भाद्यानि कर्म्माणि कुर्युः॥ ७८॥

यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः। धर्म्मार्थं
चैव विप्रेभ्यो दद्याद्भोगान् धनानि च ॥ ७९ ॥

यजेतेति। राजा नानाप्रकारान् बहुदक्षिणान् अश्व
मेधादियज्ञान् कुर्य्यात्। ब्राह्मणेभ्यश्च स्त्रीगृहशय्यादीन्
भोगान् सुवर्णवस्त्रादीनि धनानि च दद्यात्॥ ७९ ॥

सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम्।
स्याच्चाम्नायपरो लोके वर्त्तेत पितृवन्नृषु ॥ ८० ॥

साम्वत्सरिकमिति। राजा शक्तैरमात्यैर्वर्षग्राह्यं धान्यादि
भागमानाययेत् लोके च करादिग्रहणे शास्त्रनिष्ठः स्यात्
स्वदेशवासिषु नरेषु पितृवत् स्नेहादिना वर्त्तेत ॥ ८० ॥

अध्यक्षान् विविधान् कुर्य्यात्तत्र तत्र विपश्चितः।
तेऽस्य सर्व्वाण्यवेक्षेरन्नृणां कार्य्याणि कुर्व्वताम्॥ ८१ ॥

अध्यक्षानिति। तत्र तत्र हस्त्यश्वरथपदात्यर्थादिस्थाने
ध्यक्षानवेक्षितृन् विविधान् पृथक् पृथक् विपश्चितः कर्म्मकुश
लान् कुर्य्यात् ते चास्य राज्ञः तेषु हस्त्यश्वादिस्थानेषु मनुष्याणां
कुर्व्वतां सर्व्वाणि कार्य्याणि सम्यककरणार्थमवेक्षेरन ॥ ८१ ॥

आवृत्तानां गुरुकुलाद्विप्राणां पूजकोभवेत्।
नृपाणामक्षयोह्येषनिधिर्ब्राह्मोभिधीयते॥ ८२॥

आवृत्तानामिति। गुरुकुलान्निवृत्तानां अधीतवेदानां ब्राह्मणानां गार्हस्थ्यार्थिनां नियमतोधनधान्येन पूजां कुर्य्यात्। यस्माद्योयम्ब्राह्मोब्राह्मणेषु स्थापितधनधान्यादिर्निधिरिव निधिः। अक्षयोब्रह्मफलत्वात् अविनाशी राज्ञां शास्त्रेणोप दिश्यते॥ ८२॥

न तं स्तेनानचामित्राहरन्ति न च नश्यति। तस्मा द्राज्ञा निधातव्योब्राह्मणेष्वक्षयोनिधिः॥ ८३॥

अतएव न तमिति। तम्ब्राह्मणस्यार्पितनिधिं न चौरानापि शत्रवोहरन्ति अन्यनिधिवत् भूम्यादिस्थापितः कालवशान्नन श्यति स्थानभ्रान्त्या वाऽदर्शनमुपैति तस्माद्योयमक्षयोऽनन्त फलोनिधिरिव निधिः धनौघः स राज्ञा ब्राह्मणेषु निधातव्यः तेभ्योदेयइत्यर्थः॥ ८३॥

न स्कन्दते न व्यथते न विनश्यति कर्हिचित्।
वरिष्ठमग्निहोत्रेभ्योब्राह्मणस्य मुखे हुतम्॥ ८४॥

नेत्यादि। अग्नौ यत् हविर्हूयते तत् कदाचित् स्कन्दते स्रवत्यधः पतति कदाचिद्व्यथते शुष्यति कदाचिद्दाहादिना

नश्यति ब्राह्मणस्य मुखे अहुतं पाण्यास्ये हि द्विजः स्मृतइति ब्राह्मणहस्तदत्तमित्यर्थः। तस्य नोक्तादोषाः तस्मादग्निहोत्रा दिभ्यः श्रेष्ठं ब्राह्मणाय दानमित्यर्थः॥ ८४॥

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। प्राधीते शतसाहस्रमनन्तं वेदपारगे॥ ८५॥

सममित्यादि। ब्राह्मणेतरक्षत्रादिविषयेयद्दानं तत्सम फलं यस्यदेयद्रव्यस्य यत् फलं श्रुतं ततोनाधिकं नच न्यूनमभ वति योब्राह्मणः क्रियारहितआत्मानं ब्राह्मणं ब्रवीति स ब्राह्म णब्रुवः तद्विषयदानम्पूर्व्वापेक्षया द्विगुणफलं एवम्प्राधीते प्रक्रान्ताध्ययने ब्राह्मणे लक्षगुणं फलं समस्तशाखाध्यायिन्यन न्तफलं सहस्रगुणमाचार्य्ये इति वा तृतीयपदस्य पाठः॥८५॥

पात्रस्य हि विशेषेण श्रद्दधानतयैव च। अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम्॥८६॥

पात्रस्येति। विद्यातपोवृत्तियुक्ततया पात्रस्य तारतम्य मपेक्ष्य शास्त्रार्थे तथेतिप्रत्ययरूपायाः श्रद्धायास्तारतम्येन पात्रमासाद्य दानस्याल्पं महद्वा फलम्परलोके लभ्यते॥ ८६॥

समोत्तमाधमैराजा त्वाहूतः पालयन् प्रजाः।
न निवर्त्तेत संग्रामात् क्षात्रं धर्ममनुस्मरन्॥८७॥

समोत्तमेति। समबलेनाधिकबलेन हीनबलेन च राज्ञा युद्धार्थमाहूतोराजा प्रजारक्षणं कुर्व्वन् युद्धान्न निवर्त्तेत क्षत्रियेण युद्धार्थमाहूतेनावश्यं योद्धव्यमिति क्षात्रं धर्मं स्मरन् ॥८७॥

संग्रामेष्वनिवर्त्तित्वम्प्रजानाञ्चैव पालनम्।
शुश्रूषा ब्राह्मणानाञ्च राज्ञां श्रेयस्करम्परम्॥ ८८॥

यस्मात् संग्रामेष्विति। युद्धेष्वपराङ्मुखत्वं प्रजानाञ्च रक्षणं ब्राह्मणपरिचर्य्या एतद्राज्ञामतिशयितं स्वर्गादिश्रेयः साधनं ॥ ८८ ॥

आहवेषु मिथोऽन्योन्यं जिघांसन्तोमहीक्षितः।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥८९॥

अतएव आहवेष्विति। राजानोमिथःस्पर्द्धमानायुद्धेष्व न्योन्यं हन्तुमिच्छन्तः प्रकृष्टया शक्त्या संमुखीभूय युध्यमानाः स्वर्गं गच्छन्ति यद्यपि युद्धस्य शत्रुजयधनलाभादिरूपं दृष्ट मेव फलं न स्वर्गः तथापि युद्धाश्रितापरांमुखत्वनियमस्य स्वर्गः फलमिति न दोषः॥ ८९ ॥

न कूटैरायुधैर्हन्यात् युध्यमानोरणे रिपून्। न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः ॥ ९० ॥

नेत्यादि। कूटान्यायुधानि वहिःकाष्ठादिमयानि अन्तर्गुप्तनिशितशस्त्राणि तैः समरे युध्यमानः शत्रून्न हन्यात् नापि कर्णाकारफलकैर्वाणैः नापि विषाक्तैः नाप्यग्निदीप्तफलकैः ॥ ९० ॥

न च हन्यात् स्थलारूढन्न क्लीवं न कृताञ्जलिम्। न मुक्तकेशन्नासीनन्न तवास्मीति वादिनम्॥ ९१ ॥

नचेति। स्वयं रथस्थोरथं त्यक्त्वा स्थलारूढं न हन्यात्। तथा नपुंसकं वद्धाञ्जलिं मुक्तकेशं उपविष्टं त्वदीयोहमित्येवं वादिनं न हन्यात्॥ ९१ ॥

न सुप्तन्न विसंन्नाहन्न नग्नं न निरायुधम्। नायुध्यमानम्पश्यन्तं न परेण समागतम् ॥ ९२ ॥

न सुप्तमिति। सुप्तं मुक्तसन्नाहं विवस्त्रं अनायुधमयुद्ध्यमानं प्रेक्षकमन्येन सह युद्ध्यमानञ्च न हन्यात्॥ ९२ ॥

नायुधव्यसनप्राप्तन्नार्त्तन्नातिपरीक्षतम्। नभीतं न पराङ्मुखं सतान्धर्म्ममनुस्मरन्॥ ९३॥

नेत्यादि। भग्नखड्गाद्यायुधम्पुत्रशोकादिना आर्त्तम्बहुप्रहाराकुलभीतं युद्धपराङ्मुखञ्च शिष्टक्षत्रियाणां धर्म्मं स्मरन् न हन्यात्॥ ९३॥

यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः। भर्त्तुर्यद्दुष्कृतङ्किञ्चित्तत्सर्व्वम्प्रतिपद्यते॥ ९४॥

यस्त्विति। यस्तु योधोभीतः पराङ्मुखस्सन् युद्धे शत्रुभिर्हन्यते सपोषणकर्त्तुः प्रभोर्यद्दुष्कृतन्तत्सर्व्वम्प्राप्नोति। शास्त्रप्रमाणके च सुकृतदुष्कृते यथाशास्त्रं संक्रमयोग्ये एव सिद्धतः अतएवोपजीव्यशास्त्रेण बाधनात् न प्रतिपक्षानुमानोदयोपि एतच्च षष्ठे प्रियेषु स्वेषु सुकृतमित्यत्राविस्तृतमस्माभिः। पराङ्मुखहतस्य स्यात् पापमेतद्विवक्षितं। नत्वत्र प्रभपापं स्यादिति गोविन्दराजकः। मेधातिथिस्त्वर्थवादमात्रमेतन्निरूपयन्। मन्ये नैतद्द्वयं युक्तं व्यक्तमन्वर्थवर्जनात्। अन्यदीयपुण्यपापे अन्यत्र संक्रमेते इति शास्त्रप्रामाण्याद्वेदान्तसूत्रकृता वादरायणेन निर्णीतोयमर्थः इतियथोक्तमेव रमणीयम्॥ ९४॥

यच्चास्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम्।
भर्त्ता तत्सर्व्वमादत्ते परावृत्तहतस्य तु ॥ ९५ ॥

यच्चेत्यादि। पराङ्मुखहतस्य यत्किञ्चित्सुकृतम्परलोकार्थमनेनार्जितमस्ति तत्सर्व्वं प्रभुर्लभते ॥ ९५ ॥

रथाश्वं हस्तिनञ्छत्त्रन्धनन्धान्यम्पशून् स्त्रियः।
सर्व्वद्रव्याणि कुप्यञ्च यो यज्जयति तस्य तत् ॥ ९६ ॥

रथाश्वमित्यादि। राज्ञः स्वामिनः सर्व्वधनग्रहणे प्राप्ते तदपवादार्थमाह। रथाश्वहस्तिछत्रवस्त्रादिधनधान्यगवादिदास्यादिस्त्रियः सर्वाणि द्रव्याणि गुडलवणादीनि कुप्यञ्च सुवर्णरजतव्यतिरिक्तन्ताम्रादिधनं यः पृथग्जित्वा गृहमानयति तस्यैव तद्भवति सुवर्णरजतरत्नाद्यनपकृष्टधनन्तु राज्ञ एव समर्पणीयं एतदर्थमेवाच परिगणनीयं ॥ ९६ ॥

राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः। राज्ञा च सर्व्वयोधेभ्यो दातव्यमपृथग्जितम् ॥ ९७ ॥

अतएवाह राज्ञ इत्यादि। उद्धारं योद्धारो राज्ञे दद्युः उद्ध्रियत इत्युद्धारः जितधनादुत्कृष्टधनं सुवर्णरजतभूम्यादि

राज्ञे समर्पणीयं करितुरगादिवाहनमपि राज्ञे देयं वाहनञ्च राज्ञ उद्धारस्थमिति गौतमवचनात् उद्धारदाने च श्रुतिः इन्द्रो वै वृत्रं हत्वेत्युपक्रम्य समहान् भूत्वा देवता अब्रवीत् उद्धारं समुद्धरतेति। राज्ञा चापृथग्जितं सहजितं सर्व्वयोधेभ्यो यथापौरुषं संविभजनीयम् ॥ ९७ ॥

एषोऽनुपस्कृतः प्रोक्तो योधधर्म्मः सनातनः।
अस्माद्धर्म्मान्न च्यवेत क्षत्रियो घ्नन् रणे रिपून् ॥ ९८ ॥

एष इत्यादि। अविगर्हित एषोऽनादिसर्गप्रवाहसम्भवतया नित्यो योधधर्म्म उक्तः युद्धे शत्रून् हिंसन् क्षत्रिय एतद्धर्म्मं न त्यजेत् युद्धाधिकारित्वात्क्षत्रियग्रहणं अन्योपि तत्स्थानपतितो न त्यजेत् ॥ ९८ ॥

अलब्धञ्चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः। रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निःक्षिपेत् ॥ ९९ ॥

अलब्धमिति। अजितं भूमिहिरण्यादि जेतुमिच्छेत् जितं प्रयत्नतो रक्षेत् रक्षितञ्च वाणिज्यादिना वर्द्धयेत् वृद्धञ्च पात्रेभ्यो दद्यात् ॥ ९९ ॥

एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम्। अस्य नित्यमनुष्ठानं सम्यक्कुर्य्यादतन्द्रितः॥ १००॥

एतदिति। एतच्चतुःप्रकारम्पुरुषार्थो यः स्वर्गादिस्तत्प्रयोजनं यस्मादेवं रूपञ्जानीयात् अतोऽनलसः सन्सर्व्वदा अस्यानुष्ठानं कुर्य्यात्॥ १००॥

अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया। रक्षितं वर्द्धयेद्वृद्ध्या वृद्धन्दानेन निःक्षिपेत्॥ १०१॥

अलब्धमिति। यदलब्धं तद्धस्त्यश्वरथपादातात्मकेन दण्डेन जेतुमिच्छेत् जितञ्च प्रत्यवेक्षणेन रक्षेत् रक्षितञ्च वृद्ध्युपायेन स्थलजलपथवाणिज्यादिना बर्द्धयेत् वृद्धं शास्त्रीयविभागेन पात्रेभ्यो दद्यात्॥ १०१॥

नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः। नित्यं संवृतसंवार्य्यो नित्यञ्छिद्रानुसार्य्यरेः॥ १०२॥

नित्यमिति। नित्यं हस्त्यश्वादियुद्धादिशिक्षाभ्यासोदण्डो यस्य स तथा स्यात् नित्यञ्च प्रकाशीकृतमस्त्रविद्यादिना पौरुषं यस्य तथा स्यात्। नित्यं संवृतं संवरणीयं मन्त्राचारचेष्टादिकं यस्य स तथा स्यात्। नित्यञ्च शत्रोर्व्यसनादिरूपच्छिद्रानुसन्धानतत्परः स्यात्॥ १०२॥

नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत्।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥ १०३ ॥

नित्यमिति। यस्मान्नित्योद्यतदण्डस्य सर्व्वं जगदुद्विजेदिति तस्मात्सर्व्वप्राणिनो दण्डेनैवात्मसात्कुर्य्यात् ॥ १०३ ॥

अमाययैव वर्त्तेत न कथञ्चन मायया। बुद्ध्येतारिप्रयुक्ताञ्च मायान्नित्यं स्वसंवृतः ॥ १०४ ॥

अमाययेति। मायया च्छद्मतया अमात्यादिषु न वर्त्तेत तथासति सर्व्वेषामविश्वसनीयः स्यात् धर्म्मरक्षार्थं यथातत्त्वं नैव व्यवहरेत्। यत्नकृतात्मपक्षरक्षश्च शत्रुकृतात्मप्रकृतिभेदरूपां मायाञ्चारद्वारेण जानीयात् ॥ १०४ ॥

नास्य छिद्रम्परो विद्यात् विद्याच्छिद्रम्परस्य तु।
गूहेत्कूर्म्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ १०५ ॥

नैत्यादि। तथायत्नं कुर्य्याद्यथास्य प्रकृतिभेदादिछिद्रं शत्रुर्न्न जानाति शत्रोस्तु प्रकृतिभेदादिकञ्चारैर्ज्जानीयात्कूर्म्मो यथा मुखचरणादीन्यङ्गान्यात्मदेहे गोपयत्येवं राज्याङ्गान्यमात्यादीनि दानसम्मानादिना आत्मसात्कुर्य्यात् दैवाच्च प्रकृतिभेदादिरूपे छिद्रे जाते यत्नतः प्रतीकारं कुर्य्यात् ॥१०५॥

वकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत्। वृक वच्चावलुम्पेत शशवच्च विनिष्पतेत्॥ १०६ ॥

वकवदिति। यथा वकोजले मीनमतिचञ्चलस्वभावमपि ग्रहणार्थं एकतानान्तःकरणश्चिन्तयति एवं रहसि सुविहित रक्षस्यापि विपक्षस्य देशग्रहणादीनर्थांश्चिन्तयेत् यथाच सिंहः प्रबलमतिस्थूलमपि दन्तावलं हन्तुमाक्रमत्येवं अल्पबलोबल वताक्रान्तः संश्रयाद्युपायान्तरासम्भवे सर्व्वशक्त्या शत्रुं हन्तु माक्रामेत्। यथाच वृकः पालकृतरक्षणमपि पशुन्दैवात्पा लानवधानमासाद्य व्यापादयत्येवन्दुर्गाद्यवस्थितमपि रिपुङ्कथ ञ्चित्प्रमादमासाद्य व्यापादयेत् यथा शशः धनुर्द्धरविविध व्याधमध्यगतोपि कुटिलगतिरुत्प्लुत्य पलायते एवं स्वय मबलोबलवदरिपरिवृतोपि कथञ्चिदरिव्यामोहमाधाय गुण वत्पार्थिवान्तरं संश्रयितुमुपसर्पेत्॥ १०६ ॥

एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः। तानानयेद्वशं सर्व्वान्सामादिभिरुपक्रमैः॥ १०७ ॥

एवमित्यादि। एवमुक्तप्रकारेण विजयप्रवृत्तस्य नृपतेः ये विजयविरोधिनोभवेयुः तान्सर्व्वान्सामदानभेददण्डैरुपायैः वशमानयेत्॥ १०७ ॥

यदि ते तु न तिष्ठेयुरुपायैः प्रथमैस्त्रिभिः। दण्डेनैव प्रसह्यैतान्छनकैर्वशमानयेत्॥ १०८॥

यदीत्यादि। ते च विजयविरोधिनो यद्याद्यैस्त्रिभिरुपायैर्न निवर्त्तन्ते तदा बलाद्ग्रामोपमर्द्दादिना युद्धेन शनकैर्लघुगुरुदण्डक्रमेण दण्डेनैव वशीकुर्य्यात्॥ १०८॥

सामादीनामुपायानाञ्चतुर्णामपि पण्डिताः। सामदण्डौ प्रशंसन्ति नित्यं राष्ट्राभिवृद्धये॥१०९॥

सामादीति। चतुर्णामपि सामादीनामुपायानामध्यात्सामदण्डावेव राष्ट्रवृद्ध्यर्थं पण्डिताः प्रशंसन्ति साम्नि प्रयासधनव्ययसैन्यक्षयादिदोषाभावात् दण्डे तु तत्सद्भावेपि कार्य्यसिद्धातिशयात्॥ १०९॥

यथोद्धरति निर्द्दाता कक्षं धान्यञ्च रक्षति। तथा रक्षेन्नृपोराष्ट्रं हन्याच्च परिपन्थिनः॥ ११०॥

यथेत्यादि। यथा क्षेत्रे धान्यतृणादिकयोः सहोत्पन्नयोरपि धान्यानि लवनकर्त्ता रक्षति तृणादिकञ्चोद्धरति। एवं नृपतिः राष्ट्रे दुष्टान् हन्यात् मलदुष्टान् तदीयसहजान् भ्रातॄनपि निर्द्दातृदृष्टान्तादवसीयते शिष्टसहितञ्च राष्ट्रं रक्षेत्॥११०॥

मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया। सोऽचि
राद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः॥ १११॥

मोहादित्यादि। योराजा अनवेक्षया दुष्टशिष्टाज्ञानेन सर्व्वानेव स्वराष्ट्रीयजनान् आत्मीयधनग्रहणमारणादिकष्टेन पीडयति स शीघ्रमेव जनपदवैराख्यप्रकृतिकोपाधर्म्मी राजा राज्याज्जीविताच्च पुत्रादिसहितोभ्रश्यते॥ १११॥

शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा। तथा
राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात्॥ ११२॥

शरीरकर्षणेति। यथा प्राणभृतामाहारनिरोधादिना शरीरशोषणात् प्राणाः क्षीयन्ते एवं राज्ञामपि राष्ट्रपीडनात् प्रकृतिकोपादिना प्राणाविनश्यन्ति तस्मात् स्वशरीरवद्राज्ञा राष्ट्रं रक्षणीयमित्युक्तम्॥ ११२॥

राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत्।
सुसंगृहीतराष्ट्रोहि पार्थिवः सुखमेधते॥ ११३॥

राष्ट्रस्येत्यादि। राष्ट्रस्य रक्षणे वक्ष्यमाणमिममुपायमनुतिष्ठेत् यस्मात् संरक्षितराष्ट्रोराजा अनायासेन वर्द्धते॥ ११३॥

द्वयोस्त्रयाणाम्पञ्चानां मध्ये गुल्ममधिष्ठितम्। तथाग्रामशतानाञ्च कुर्य्याद्राष्ट्रस्य संग्रहम्॥ ११४॥

द्वयोरिति। द्वयोर्ग्रामयोर्मध्ये त्रयाणां वा ग्रामाणाम्प ञ्चानां वा ग्रामशतानां गुल्मं रक्षितृपुरुषसमूहं सत्यप्रधानपुरु षाधिष्ठितं राष्ट्रस्य संग्रहं रक्षास्थानं कुर्य्यात् अस्य लाघवगौ रवापेक्षयोक्तविकल्पः॥ ११४॥

ग्रामस्याधिपतिं कुर्य्याद्दशग्रामपतिन्तथा। विंश तीशं शतेशञ्च सहस्रपतिमेव च॥ ११५॥

ग्रामस्येति। एकग्रामदशग्रामाद्यधिपतीन् कुर्य्यात्॥ ११५॥

ग्रामे दोषान्समुत्पन्नान् ग्रामिकः शनकैः स्वयम्। शंसेद्ग्रामदशेशाय दशेशो विंशतीशिनं॥ ११६॥

विंशतीशस्तु तत्सर्व्वं शतेशाय निवेदयेत्। शंसे द्ग्रामशतेशस्तु सहस्रपतये स्वयम्॥ ११७॥

ग्रामइति। विंशतीशइति। ग्रामाधिपतिश्चौरादिदोषान् ग्रामे संजातान् आत्मना प्रतिकर्त्तुमक्षमः स्वयन्दशग्रामाधि पतये कथयेत् एवन्दशग्रामपत्यादयो विंशतिग्रामस्वाम्या

दिभ्यः कथयेयुः, तथाच सति सम्यक् चोरादिकण्टकोद्धारो भवति ॥ ११६ ॥ ॥ ११७ ॥

यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः। अन्न पानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात् ॥ ११८ ॥

यानीति। एकग्रामाधिकृतस्य वृत्तिमाह। यान्यन्नपानेन्धनादीनि ग्रामवासिभिः प्रत्यहं राज्ञे देयानि मलञ्चकरन्धान्यानामष्टमोभाग इत्यादिकं तानि ग्रामाधिपतिर्वृत्त्यर्थं गृह्णीयात् ॥ ११८ ॥

दशी कुलन्तु भुञ्जीत विंशी पञ्च कुलानि च। ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः परम् ॥ ११९ ॥

दशी कुलमिति। अष्टागवन्धर्म्महलं षड्गवं जीवितार्थिनाम्। चतुर्गवं गृहस्थानां द्विगवं ब्रह्मघातिनामिति हारीतस्मरणात् षड्गवं मध्यमं हलमिति। तथाविधहलद्वयेन यावतीभूमिर्वाह्यते तत्कुलमिति वदति। तद्दशग्रामाधिपतिर्वृत्त्यर्थं भुञ्जीत एवं विंशत्यधिपतिः पञ्चकुलानि शताधिपतिर्मध्यमं ग्रामं सहस्राधिपतिर्मध्यमम्पुरम् ॥ ११९ ॥

तेषां ग्राम्याणि कार्य्याणि पृथक्कार्य्याणि चैव हि।
राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्येदतन्द्रितः॥१२०॥

तेषामित्यादि। तेषां ग्रामनिवासिप्रभृतीनाम्परस्पर विप्रतिपत्तौ यानि ग्रामभवानि कार्य्याणि कृताकृतानि च पृथ कार्य्याणि तान्यन्योराज्ञोहितकृत् तन्नियुक्तोऽनलसः कुर्वीत ॥१२०॥

नगरे नगरे चैकं कुर्य्यात्सर्व्वार्थचिन्तकम्। उच्चैः स्थानं घोररूपन्नक्षत्राणामिव ग्रहम्॥१२१॥

नगरइति। प्रतिनगरमेकैकमुच्चैः स्थानं कुलादिना महान्तं प्रधानभूतं घोररूपं हस्त्यश्वादिसामग्र्याभयजनकं नक्षत्रमध्ये भार्गवादिग्रहमिव तेजस्विनङ्कार्य्यद्रष्टारं नगराधिपतिं कुर्य्यात्॥१२१॥

स ताननुपरिक्रामेत्सर्व्वानेव सदा स्वयम्। तेषां वृत्तम्परिणयेत्सम्यग्राष्ट्रेषु तच्चरैः॥१२२॥

सइत्यादि। स नगराधिकृतस्तान्सर्व्वान् ग्रामाधिपत्यादीन् असति प्रयोजने सर्व्वदा स्वयं सबलेनानुगच्छेत्तेषाञ्च नगराधिकृतपर्य्यन्तानां सर्व्वेषामेव यद्राष्ट्रे स्वचेष्टितन्तत्तद्विषय नियुक्तैश्चरैः सम्यक् राजा परिणयेदवगच्छेत्॥१२२॥

राज्ञो हि रक्षाधिकृताः परस्वादायिनः शठाः।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥१२३॥

राज्ञो हीत्यादि। यस्मात् ये राज्ञो रक्षाधिकृतास्ते बाहुल्येन परस्वग्रहणशीला वञ्चकाश्च भवन्ति। तस्मात्तेभ्य इमाः स्वात्मीयाः प्रजा राजा रक्षेत् ॥ १२३ ॥

ये कार्य्यिकेभ्योऽर्थमेव गृह्णीयुः पापचेतसः। तेषां सर्व्वस्वमादाय राजा कुर्य्यात्प्रवासनम् ॥१२४॥

य इत्यादि। ये रक्षाधिकृताः कार्य्यार्थिभ्य एव वाक्छलादि कमुद्भाव्य लोभादशास्त्रीयधनग्रहणं पापबुद्धयः कुर्व्वन्ति तेषां सर्व्वस्वं राजा गृहीत्वा देशान्निःसारणं कुर्य्यात् ॥ १२४ ॥

राजकर्म्मसु युक्तानां स्त्रीणां प्रेष्यजनस्य च।
प्रत्यहं कल्पयेद्वृत्तिं स्थानकर्मानुरूपतः ॥१२५॥

राजकर्म्मेत्यादि। राजोपयुक्तकर्म्मनियुक्तानां स्त्रीणां दास्यादीनां कर्मकरजनस्य च उत्कृष्टमध्यमापकृष्टस्थानयोग्यानुरूपेण प्रत्यहं वृत्तिं कुर्य्यात् ॥ १२५ ॥

पणोदेयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम्। षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु मासिकः॥ १२६॥

तामेव दर्शयति पणइति॥ अवकृष्टस्य गृहादिसमार्जकोदकवाहादेः कर्मकरस्य वक्ष्यमाणलक्षणः पणोभृतिरूपम्प्रत्यहं दातव्यः षाण्मासिकश्चाच्छादोवस्त्रयुगं दातव्यम्। अष्टमुष्टिर्भवेत्कुञ्चिः कुञ्चयोष्टौ च पुष्कलम्। पुष्कलानि तु चत्वारि आढकः परिकीर्त्तितः। चतुराढकोभवेद्द्रोण इति गणनया धान्यद्रोणश्च प्रतिमासं देयः। उत्कृष्टस्य तु भृतिरूपास्सु षट्पणाः प्रत्यहं देयाः अनयैव कल्पनया षाण्मासिकानि षड्वस्त्रयुगानि देयानि प्रतिमासञ्च षड्धान्यद्रोणादेयाः अनयैवदिशा मध्यमस्य प्रत्यहं पणत्रयं भृतिरूपन्दातव्यं षाण्मासिकञ्च वस्त्रयुगत्रयं मासिकञ्च धान्यद्रोणत्रयन्देयम् ॥ १२६॥

क्रयविक्रयमध्वानम्भक्तञ्च सपरिव्ययम्। योगक्षेमञ्च सम्प्रेक्ष्य वणिजोदापयेत्करान्॥ १२७॥

क्रयविक्रयमित्यादि। कियता मूल्येन क्रीतमिदं वस्त्रलवणादिद्रव्यं विक्रीयमाणञ्चात्र कियल्लभ्यते कियद्दूरादानीतं किमस्य वणिजोभक्तव्ययेन शाकसूपादिना परिव्ययेन लग्नं किमस्यारण्यादौ चौरादिभ्योरक्षारूपेण क्षेमप्रतिविधानेन

गतं को ऽस्य इदानीं लाभयोग इत्येतदवेक्ष्य वणिजः करान् दापयेत् ॥ १२७ ॥

यथा फलेन युज्येत राजा कर्त्ता च कर्म्मणाम् ।
तथावेक्ष्य नृपो राष्ट्रे कल्पयेत् सततं करान् ॥ १२८ ॥

यथेति । यथा राजाऽवेक्षणादिकर्म्मणः फलेन यथा च कार्षिकवणिगादयः कृषिवाणिज्यादिकर्मणां फलेन सम्बध्यते । तथा निरूप्य राजा सर्व्वदा राष्ट्रकरान् गृह्णीयात् ॥ १२८ ॥

यथाल्पाल्पमदन्त्याद्यं वार्य्योकोवत्सषट्पदाः । तथाल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाब्दिकः करः ॥ १२९ ॥

अत्र दृष्टान्तमाह यथेत्यादि । यथा जलौकोवत्सभ्रमराः स्तोकस्तोकानि रक्तक्षीरमधूनि अदन्त्येवं राज्ञा मूलधनमनुच्छिन्दताऽल्पोऽल्पो राष्ट्रादाब्दिकः करो ग्राह्यः ॥ १२९ ॥

पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः ।
धान्यानामष्टमो भागः षष्ठो द्वादश एव वा ॥ १३० ॥

तमाह पञ्चाशद्भाग इत्यादि । मूलादधिकयोः पशुहिरण्ययोः पञ्चाशद्भागो राज्ञा ग्रहीतव्यः । एवन्धान्यानां षष्ठोऽष्टमो

द्वादशोवा भागोराज्ञा ग्राह्यः भूम्युत्कर्षापकर्षापेक्षया कर्ष णादिक्लेशलाघवगौरवापेक्षोऽयं वक्ष्यमाणग्रहणविकल्पः ॥ १३० ॥

आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम्।
गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च ॥ १३१ ॥

पत्रशाकतृणानाञ्च वैदलस्य च चर्म्मणां। मृण्मयानाञ्च भाण्डानां सर्व्वस्याश्ममयस्य च ॥ १३२ ॥

आददीतेत्यादि। पत्रशाकतृणानामित्यादि। द्रुशब्दोऽत्र वृक्षवाचकः वृक्षादीनां सप्तदशानां अश्ममयान्तानां षष्ठोभागोलाभाद्ग्रहीतव्यः ॥ १३१ ॥ ॥ १३२ ॥

म्रियमाणोप्याददीत न राजा श्रोत्रियात्करं।
न च क्षुधाऽस्य संसीदेच्छ्रोत्रियोविषयेवसन् ॥ १३३ ॥

म्रियमाण इति। क्षीणधनोपिराजा श्रोत्रियब्राह्मणात्करं न गृह्णीयात्। नच तदीयदेशे वसन् श्रोत्रियः बुभुक्षया अवसादङ्गच्छेत् ॥ १३३ ॥

यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ।
तस्यापि तत्क्षुधा राष्ट्रमचिरेणैव सीदति ॥ १३४ ॥

यस्मात् यस्येत्यादि । यस्य राज्ञो देशे श्रोत्रियः क्षुधावसन्नो भवति तस्य राष्ट्रमपि दुर्भिक्षादिभिः क्षुधा शीघ्रमवसाद ङ्गच्छति ॥ १३४ ॥

श्रुतवृत्ते विदित्वास्य वृत्तिन्धर्म्यां प्रकल्पयेत् ।
संरक्षेत्सर्वतश्चैनम्पिता पुत्रमिवौरसम् ॥ १३५ ॥

यतएवमतः श्रुतेति । शास्त्रज्ञानानुष्ठाने ज्ञात्वा अस्य तदनु रूपां धर्मादनपेतां जीविकामुपकल्पयेत् चौरादिभ्यश्चैनं औरसं पुत्रमिव पिता रक्षेत् ॥ १३५ ॥

संरक्ष्यमाणोराज्ञा यं कुरुते धर्ममन्वहम् ।
तेनायुर्वर्द्धते राज्ञोद्रविणं राष्ट्रमेव च ॥ १३६ ॥

यस्मात् संरक्ष्यमाणइत्यादि । स च श्रोत्रियोराज्ञा सम्यग्रक्ष्यमाणोयन्धर्मं प्रत्यहं करोति तेन राज्ञआयुर्द्धनरा ष्ट्राणि वर्द्धन्ते ॥ १३६ ॥

यत्किञ्चिदपि वर्षस्य दापयेत्करसंज्ञितम्।
व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम्॥ १३७॥

यदिति। राजा स्वदेशशाकपर्णादिस्वल्पमूल्यवस्तुक्रयविक्रयादिना जीवन्तं निकृष्टजनं स्वल्पमपिकराख्यं वर्षेण दापयेत्॥१३७॥

कारुकान् शिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः।
एकैकं कारयेत्कर्म्म मासि मासि महीपतिः॥१३८॥

कारुकानिति। कारुकान् सूपकारादीन् शिल्पिभ्यईषदुत्कृष्टान् शिल्पिनश्च लोहकारादीन् शूद्रांश्च देहक्लेशोपजीविनोभारिकादीन् मासि मास्येकन्दिनं कर्म्म कारयेत्॥१३८॥

नोच्छिन्द्यादात्मनोमूलं परेषां चातितृष्णया। उच्छिन्दन् ह्यात्मनोमूलमात्मानं तांश्च पीडयेत्॥ १३८॥

नोच्छिन्द्यादिति। प्रजास्नेहात् करशुल्कादेरग्रहणमात्मनोमूलोच्छेदः अतिलोभेन प्रचुरकरादिग्रहणम्परेषां मूलोच्छेदः एतदुभयं न कुर्य्यात् यस्मात् आत्मनोमूलमुच्छिद्य कोषक्षयादात्मानम्पीडयेत्। पूर्व्वार्द्धात्परेषाञ्चेत्यपि संबध्यते परेषां मूलमुच्छिद्यतांश्च पीडयेत्॥ १३९॥

तीक्ष्णश्चैव मृदुश्चस्यात्कार्य्यं वीक्ष्य महीपतिः।
तीक्ष्णश्चैव मृदुश्चैव राजा भवति सम्मतः॥ १४०॥

तीक्ष्णइति। कार्य्यविशेषमवगम्य क्वचित् कार्य्ये तीक्ष्णः क्वचिन्मृदुश्चभवेत् नत्वेकरूपमालम्बेत् यस्मादुक्तरूपो राजा सर्व्वेषामभिमतोभवति ॥ १४०॥

अमात्यमुख्यन्धर्म्मज्ञं प्राज्ञन्दान्तं कुलोद्गतं।
स्थापयेदासने तस्मिन् खिन्नःकार्य्येक्षणे नृणां॥१४१॥

अमात्येति। स्वयं कार्य्यदर्शने खिन्नः श्रेष्ठामात्यन्धर्म्मविदं प्राज्ञं जितेन्द्रियं कुलीनन्तस्मिन् कार्य्यदर्शनस्थाने नियुञ्जीत ॥ १४१॥

एवं सर्व्वं विधायेदमितिकर्त्तव्यमात्मनः। युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः॥ १४२॥

एवमित्यादि। एवमुक्तप्रकारेण सर्व्वमात्मनः कार्य्यजातं सम्पाद्योद्युक्तः प्रमादरहितश्चात्मीयाः प्रजारक्षेत्॥ १४२॥

विक्रोशन्त्योयस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः।
संपश्यतः सभृत्यस्य मृतः स नतु जीवति ॥ १४३ ॥

विक्रोशेति। यस्य राज्ञोऽमात्यादिसहितस्य पश्यत एवराष्ट्रादाक्रोशन्त्यः प्रजाः तस्करादिभिरपह्रियन्ते स मृत एव नतु जीवति जीवनकार्य्याभावात् जीवनमपि तस्य मरणमेवेत्यर्थः। तस्मादप्रमत्तः प्रजारक्षेदिति पूर्व्वोक्तशेषं ॥ १४३ ॥

क्षत्रियस्य परोधर्म्मः प्रजानामेव पालनम्।
निर्द्दिष्टफलभोक्ताहि राजा धर्म्मेण युज्यते ॥ १४४॥

तदेव दृढयति क्षत्रियेति। धर्म्मान्तरेभ्यः श्रेष्ठं क्षत्रियस्य प्रजारक्षणमेव प्रकृष्टोधर्म्मः यस्माद्यथोक्तलक्षणफलकरादिभोक्ता राजाधर्म्मेण सम्बध्यते ॥ १४४ ॥

उत्थाय पश्चिमे यामे कृतशौचः समाहितः। हुता
ग्निर्ब्राह्मणांश्चार्च्य प्रविशेत् स शुभां सभाम्॥ १४५ ॥

उत्थायेति। स भूपः रात्रेः पश्चिमयाममुत्थाय कृतमूत्रपरीषोत्सर्गादिशौचोऽनन्यमनाः कृताग्निहोत्रावश्यहोमो

ब्राह्मणान् पूजयित्वा वास्तुलक्षणाद्युपेतां सभाममात्यादिदर्शन गृहं प्रविशेत् ॥ १४५ ॥

तत्र स्थितः प्रजाः सर्व्वाः प्रतिनन्द्य विसर्जयेत्।
विसृज्य च प्रजाः सर्व्वा मन्त्रयेत्सह मन्त्रिभिः ॥१४६॥

तत्रेति। तस्यां सभायां स्थितो दर्शनार्थमागताः प्रजाः सर्व्वाः सम्भाषणदर्शनादिभिः प्रतिनन्द्य प्रस्थापयेत् तास्य प्रस्थाप्य मन्त्रिभिः सह सन्धिविग्रहादि चिन्तयेत् ॥ १४६ ॥

गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः। अरण्ये निःशलाके वा मन्त्रयेदविभावितः ॥ १४७ ॥

गिरिपृष्ठमिति। पर्व्वतपृष्ठमारुह्य निर्जनवनगृहस्थितो वा अरण्ये वा विविक्ते देशे मन्त्रभेदकारिभिरनुपलक्षितः कर्म्मणामारम्भोपायः पुरुषद्रव्यसम्पद्देशकालविभागो विनिपातः प्रतीकारः कार्य्यसिद्धिरित्येवम्पञ्चाङ्गमन्त्रं चिन्तयेत् ॥ १४७ ॥

यस्य मन्त्रं न जानन्ति समागम्य पृथग्जनाः। स कृत्स्नां पृथिवीं भुङ्क्ते कोषहीनोपि पार्थिवः ॥ १४८ ॥

यस्येति। यस्य राज्ञोमन्त्रिभ्यः पृथगन्ये जनामिलित्वास्य मन्त्रं न जानन्ति स क्षीणकोषोपि सर्व्वां पृथिवीं भनक्ति ॥१४८॥

जडमूकान्धबधिरांस्तिर्य्यग्योनान्वयोगतान्। स्त्री म्लेच्छव्याधितव्यङ्गान्मन्त्रकालेऽपसारयेत्॥१४९॥

जडान्धेति। बुद्धिवाक्चक्षुःश्रोत्रविकलान् तिर्य्यग्योनि भवांश्च शुकसारिकादीन् अतिवृद्धस्त्रीम्लेच्छरोगयुक्तहीनांश्च मन्त्रसमये अपसारयेत्॥ १४९ ॥

भिन्दन्त्यवमतामन्त्रं तैर्य्यग्योनास्तथैव च। स्त्रियश्चैव विशेषेण तस्मात्तत्रादृतोभवेत्॥ १५०॥

यस्मात् भिन्दन्तीत्यादि। एते जडादयोपि प्राचीनदुष्कृत वशेन प्राप्तजडादिभावा अधार्म्मिकतयैवावमानितामन्त्रभेदं कुर्व्वन्ति तथा शुकादयोऽतिवृद्धश्च स्त्रियश्च विशेषणास्थिर बुद्धितया मन्त्रभिन्दन्ति तस्मात्तदपसारणे यत्नवान् स्यात् ॥ १५० ॥

मध्यन्दिनेऽर्द्धरात्रे वा विश्रान्तोविगतक्लमः। चिन्तयेद्धर्म्मकामार्थान्सार्द्धन्तैरेकएव वा॥ १५१ ॥

मध्यन्दिनइति। दिनमध्ये रात्रिमध्ये वा विगतचित्तखेदः शरीरक्लेशरहितश्च मन्त्रिभिः सह एकाकी वा धर्मार्थकामान नुष्ठातुं चिन्तयेत्॥ १५१ ॥

परस्परविरुद्धानान्तेषाञ्च समुपार्ज्जनम्। कन्यानां सम्प्रदानञ्च कुमाराणाञ्च रक्षणम्॥ १५२॥

परस्परेति। तेषाञ्च धर्मार्थकामानां प्रायिकविरोधवतां विरोधपरिहारेणार्जनोपायं चिन्तयेत्। दुहितॄणाञ्च दानं स्वकार्य्यसिद्ध्यर्थं निरूपयेत्। कुमाराणाञ्च पुत्राणां विनयाधाननीतिशिक्षार्थं रक्षणं चिन्तयेत्॥ १५२ ॥

दूतसम्प्रेषणञ्चैव कार्य्यशेषन्तथैव च। अन्तःपुरप्रचारञ्च प्रणिधीनाञ्च चेष्टितम्॥ १५३॥

दूतेति। दूतानां संगुप्तार्थलेखहारित्वादिना परराष्ट्रप्रस्थापनं चिन्तयेत्। तथा प्रारब्धकार्य्यशेषं समापयितुञ्चिन्तयेत् स्त्रीणां चातिविषमचेष्टितत्वात् तथाहि शस्त्रेण वेणीविनिगूहितेन विदूरथं वै महिषी जघान। विषप्रदिग्धेन च नूपुरेण देवी विरक्ता किलकाशिराजमित्याद्यवगम्यात्मरक्षार्थञ्चान्तःपुरस्त्रीणाञ्चेष्टितं सखीदास्यादिना निरूपयेत्। चराणाञ्च प्रतिराजादिषु नियुक्तानां चरान्तरैश्चेष्टितमवधारयेत् ॥ १५३ ॥

कृत्स्नञ्चाष्टविधं कर्म्म पञ्चवर्गञ्च तत्त्वतः। अनुरागापरागौ च प्रचारं मण्डलस्य च ॥१५४॥

कृत्स्नमिति। अष्टविधं कर्म्म समग्रं चिन्तयेत् तच्चोशनसोक्तम्। आदानेच विसर्गे च तथा प्रैषनिषेधयोः। पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे। दण्डशुद्ध्योः सदा युक्तस्तेनाष्टगतिकोनृपः। अष्टकर्म्मा दिवं याति राजा शक्राभिपूजितः। तत्रादानङ्करादीनां विसर्गोभृत्यादिभ्योधनदानं प्रैषामात्यादीनां दृष्टादृष्टानुष्ठानेषु निषेधोदृष्टादृष्टविरुद्धक्रियासु अर्थवचनं कार्य्यसन्देहे राजाज्ञयैव तत्र नियमात्। व्यवहारेक्षणं प्रजानामृणादिविप्रतिपत्तौ दण्डः पराजितानां शास्त्रोक्तधनग्रहणं शुद्धिः पापे कर्म्मणि जाते तत्र प्रायश्चित्तसम्पादनं। मेधातिथिस्तु अकृतारम्भःकृतानुष्ठानमनुष्ठितविशेषणं कर्म्मफलसंग्रहः तथा सामदानभेददण्डाएतदष्टविधं कर्म्म अथवा वणिक्पथउदकसेतुबन्धनन्दुर्गकरणं कृतस्य संस्कारनिर्णयः हस्तिबन्धनं खनिखननं सैन्यनिवेशनन्दारुणवनच्छेदनञ्चेत्याह। तथा कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मकं पञ्चविधं चारवर्गं पञ्चवर्गशब्दवाच्यं तत्त्वतश्चिन्तयेत्। तत्र परमर्म्मज्ञः प्रगल्भछात्रः कपटव्यवहारित्वात्कापटिकस्तं वृत्त्यर्थिनमर्थमानाभ्यामुपगृह्य रहसि राजा ब्रूयात्। यस्य दुर्वृत्तम्पश्यसि तत्तदानीमेव मयि वक्तव्यमिति। प्रव्रज्यारूढपतितउदास्थितः

तं लोकेषु विदितदोषं प्रज्ञाशौचयुक्तं वृत्त्यर्थिनं ज्ञात्वा रहसि राजा पूर्व्ववद्ब्रूयात् बह्वुत्पत्तिकमठे स्थापयेतप्रचुरशस्योत्पत्तिकभूम्यन्तरञ्च तद्वृत्त्यर्थमुपकल्पयेत् सचान्येषामपि प्रव्रजितानां राजचारकर्मकारिणां ग्रासाच्छादनादिकं दद्यात्। कर्षकः चीणवृत्तिः प्रज्ञाशौचयुक्तो गृहपतिव्यञ्जनस्तमपि पूर्व्ववदुक्त्वा स्वभूमौ कृषिकर्म्म कारयेत्। वाणिजकः चीणवृत्तिः वैदेहिकव्यञ्जनस्तम्पूर्व्ववदुक्त्वा धनमानाभ्यामात्मीकृत्य वाणिज्यं कारयेत्। मुण्डोजटिलोवा वृत्तिकामस्तापसव्यञ्जनः सोपि कचिदाग्रामे वसन् बहुमुण्डजटिलाऽन्तरकपटशिष्यगणवृतोगूढैरराजोपकल्पितवृत्तिः तापस्यं कुर्य्यात् मासद्विमासान्तरितं प्रकाशं बदरादिमुष्टिमश्नीयात् रहसि च राजोपकल्पितं यथेष्टमाहारं कल्पयेत शिष्याश्चास्यातीतानागतज्ञानादिकं ख्यापयेयुः तेनवहुलोकवेष्टनमासाद्य सर्व्वेषां विश्वसनीयत्वात् सर्व्वं कार्य्यमकार्य्यञ्च पृच्छन्ति अन्यस्य च कुन्तिक्रियादिकं कथयएवं रूपं पञ्चवर्गं यथावच्चिन्तयेत्। एवम्पञ्चवर्गं प्रकल्प्य तेनैव पञ्चवर्गद्वारेण प्रतिराजस्यात्मीयानाञ्चामात्यादीनां अनुरागविरागौ ज्ञात्वातदनुरूपञ्चिन्तयेत्। वच्यमाणस्य च राजमण्डलस्य प्रचारं कः सन्ध्यर्थी कोवा विग्रहार्थीत्यादिकञ्चिन्तयेत् तच्च ज्ञात्वा तदनुगुणञ्चिन्तयेत् ॥१५४॥

मध्यमस्य प्रचारञ्च विजिगीषोश्च चेष्टितम्। उदासीनप्रचारञ्च शत्रोश्चैव प्रयत्नतः॥ १५५॥

मध्यमस्येति। अरिविजिगीष्वोर्योर्भूम्यनन्तरः संहतयोरनुग्रहे समर्थोनिग्रहे चासंहतयोः समर्थः समध्यमः तस्य प्रचारं चिन्तयेत्। तथा प्राज्ञोत्साहगुणप्रकृतिसम्पन्नोविजिगीषुस्तस्य चेष्टितञ्चिन्तयेत्। तथा अरिविजिगीषुमध्यमानां यः संहतानामनुग्रहे समर्थोनिग्रहे चासंहतानां समर्थः स उदासीनः तस्य प्रचारञ्चिन्तयेत्। शत्रोश्च त्रिविधस्यापि सहजस्य अकृत्रिमस्य भूम्यनन्तरस्य च पूर्व्वापेक्षया प्रयत्नतः प्रचारं चिन्तयेत्॥ १५५॥

एताः प्रकृतयोमूलम्मण्डलस्य समासतः। अष्टौ चान्याः समाख्याता द्वादशैव तु ताः स्मृताः॥१५६॥

एताइत्यादि। एतामध्यमाद्यास्तस्रः प्रकृतयः संक्षेपेण मण्डलस्यमूलं अपरासामभिधास्यमानप्रकृतीनाममात्यादीनां मूलमित्युच्यते अन्याश्चाष्टौ समाख्याताः तद्यथा अग्रतोऽरिभूमीनां मित्रमरिमित्रं मित्रमित्रं अरिमित्रमित्रं चेति। एवञ्चतस्रः प्रकृतयोभवन्ति पश्चाच्च पार्ष्णिग्राहआक्रन्दः पार्ष्णिग्राहासारः आक्रन्दासारइतिचतस्रः एवमष्टौ प्रकृतयोभवन्ति पूर्व्वोक्ताभिश्च मध्यमारिविजिगीषूदासीनशत्रुरूपाभिः मूलप्रकृतिभिः सह द्वादशैताः प्रकृतयः स्मृताः॥१५६॥

अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः ।
प्रत्येकं कथिताह्येताः संक्षेपेण द्विसप्ततिः ॥ १५७ ॥

अमात्येति। आसां मूलप्रकृतीनाञ्चतसृणां अष्टानां शाखाप्रकृतीनां उक्तानां एकैकस्याः प्रकृतेः अमात्यदेश दुर्गकोषदण्डाख्याः पञ्च द्रव्यप्रकृतयोभवन्ति एताश्च पञ्च द्वादशानाम्प्रत्येकम्भवन्त्योद्वादश गुणजाताः षष्टिरेव द्रव्यप्रकृतयोभवन्ति तथा मूलप्रकृतिभिश्चतसृभिः शाखाप्रकृतिभिश्चाष्टाभिः सह संक्षेपतोद्विसप्ततिप्रकृतयोमुनिभिः कथिताः ॥ १५७ ॥

अनन्तरमरिं विद्यादरिसेविनमेव च । अरेरनन्तरम्मित्रमुदासीनन्तयोः परम् ॥ १५८ ॥

अनन्तरमिति। विजिगीषोर्नृपस्यान्तरितञ्चतुर्दिशमध्यरिप्रकृतिं विजानीयात्। तथा तत्सेविनमपि अरिमेव विद्यात् अरेरनन्तरं विजिगीषोर्नृपस्यैकानन्तरं मित्रप्रकृतिं विद्यात्त योश्चारिमित्रयोः परं विजिगीषोरुदासीनप्रकृतिं विद्यात्। आसामेव प्रकृतीनामग्रपश्चाद्भावभेदेन व्यपदेशभेदः अग्राग्रवर्त्तिनोऽरिव्यपदेशएव पश्चाद्वर्त्तिनस्त्वरित्वेपि पार्ष्णिग्राह व्यपदेशः ॥ १५८ ॥

तान्सर्वानभिसन्दध्यात्सामादिभिरुपक्रमैः। व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च॥ १५९॥

तानिति। तान्सर्व्वान्नृपतीन्सामभेददानदण्डैरुपायैर्यथासम्भवं व्यस्तैः समस्तैर्व्वशीकुर्य्यात्। अथवा पौरुषेण दण्डेनैव केवलेन नयेन साम्नैव वा केवलेनात्मवशान्कुर्य्यात्तथाचोक्तं सामदण्डौ प्रशंसन्ति नित्यं राष्ट्राभिवृद्धये॥ १५९॥

सन्धिञ्च विग्रहञ्चैव यानमासनमेव च। द्वैधीभावं संश्रयञ्च षड्गुणांश्चिन्तयेत्सदा॥ १६०॥

सन्धिमिति। तत्राभयानुग्रहार्थं हस्त्यश्वरथहिरण्यादिनिबन्धनेनावाभ्यामन्योन्यस्योपकर्त्तव्यमिति नियमबन्धः सन्धिः वैरं विग्रहाचरणाद्याधिक्येन यानं शत्रुं प्रति गमनमुपेक्षणमासनं स्वार्थसिद्धये स्वबलस्य द्विधाकरणं द्वैधीभावः शत्रुपीडितस्य प्रबलतरराजान्तराश्रयणं संश्रयः एतान् गुणानुपकारकान्सर्व्वदा चिन्तयेत्यद्गुणाश्रयणे सत्यात्मन उपचयः परस्यापचयः तं गुणमाश्रयेत्॥ १६०॥

आसनञ्चैव यानञ्च सन्धिं विग्रहमेव च। कार्य्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च॥ १६१॥

आसनमिति। सन्ध्यादिगुणानामैरं पंक्त्येणानुष्ठानमनन्तरमक्तं तदुचितानुष्ठानार्थोयमारम्भः आत्मसमृद्धिपरहान्या

दिकं कार्य्यं वीच्य सन्धायासनं विगृह्य वा यानं द्वैधीभावसंश्रयौ च केनचित्सन्धिं केनचिद्विग्रहं इत्यादिकमनुतिष्ठेत् ॥ १६१ ॥

सन्धिन्तु द्विविधं विद्याद्राजाविग्रहमेव च । उभे यानासने चैव द्विविधः संश्रयः स्मृतः ॥ १६२ ॥

सन्धिन्त्विति । सन्ध्यादीन् षडेव गुणान् द्विप्रकारान् जानीयात् इत्युत्तरविवचार्थम् ॥ १६२ ॥

समानयानकर्मा च विपरीतस्तथैव च । तदात्वायतिसंयुक्तः सन्धिर्ज्ञेयोद्विलक्षणः ॥ १६३ ॥

समानेति । तात्कालिकफललाभार्थमुत्तरकालीनफललाभार्थं वा यत्र राजान्तरेण सहान्यं प्रति यानादिकर्म क्रियते स समानयानकर्मा सन्धिः यःपुनस्त्वमत्र याहि अहमत्र यास्यामीति साम्प्रतिकोत्तरकालीनफलार्थितयैव क्रियते सोऽसमानयानकर्मेत्येवं द्विःप्रकारः सन्धिर्ज्ञातव्यः ॥ १६३ ॥

स्वयंकृतश्च कार्य्यार्थमकाले कालएव वा । मित्रस्य चैवापकृते द्विविधोविग्रहः स्मृतः ॥ १६४ ॥

स्वयमित्यादि । शत्रुजयरूपप्रयोजनार्थं शत्रोर्व्यसनादिकं आकलय्य वच्यमाणमार्गशीर्षादिकालादन्यदा यथोक्तकाल

एव वा स्वयं कृतइति एकोविग्रहः अपकृतमपकारः मित्रस्या पकारे राजान्तरेण कृते मित्ररक्षार्थमपरोविग्रहइत्येवं द्विविधोविग्रहः। गोविन्दराजेन तु मित्रेण चैवापकृतइति पठितं व्याख्यातञ्च यः परस्य शत्रुः स विजिगीषोर्मित्रन्तेनाप कारे क्रियमाणे व्यसनिनि शत्राविति। तस्माल्लिखितपाठार्थौ दृष्टौ गोविन्दराजतः। मेधातिथिप्रभृतिभिर्लिखितौ स्वीकृतौ मया॥ १६४॥

एकाकिनश्चात्ययिके कार्य्ये प्राप्ते यदृच्छया। संहतस्य च मित्रेण द्विविधं यानमुच्यते॥ १६५॥

एकाकिनइत्यादि। आत्ययिकं कार्य्यं शत्रोर्व्यसनादिकं तस्मिन् अकस्माज्जाते शक्तस्यैकाकिनोयानमशक्तस्य मित्रस हितस्य इत्येवं यानं द्विविधमभिधीयते॥ १६५॥

क्षीणस्य चैव क्रमशोदैवात्पूर्वकृतेन वा। मित्रस्य चानुरोधेन द्विविधं स्मृतमासनम्॥ १६६॥

क्षीणस्येति। प्राग्जन्मार्जितेन दुष्कृतेन ऐहिकेन वा पूर्वकृतेन क्रमशः क्षीणहस्त्यश्वकोषादिकस्य समृद्धस्यापि वा मित्रानुरो धेन तत्कार्य्यरक्षार्थमित्येवं द्विविधमासनं मुनिभिः स्मृतम् ॥ १६६॥

बलस्य स्वामिनश्चैव स्थितिः कार्य्यार्थसिद्धये। द्विविधं कीर्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः॥ १६७॥

बलस्येति। साध्यस्वप्रयोजनसिद्ध्यर्थं बलस्य हस्त्यश्वादेः सेनाधिपत्याधिष्ठितस्य एकत्र शत्रुनृपोपद्रववारणार्थमवस्थानमन्यत्र दुर्गदेशे राज्ञः कतिचिद्बलाधिष्ठितस्यावस्थानमेवं सन्ध्यादिगुणषट्कोपकारज्ञैः द्विविधं द्वैधं कीर्त्यते॥ १६७॥

अर्थसम्पादनार्थञ्च पीड्यमानस्य शत्रुभिः। साधुषु व्यपदेशार्थं द्विविधः संश्रयः स्मृतः॥ १६८॥

अर्थेति। शत्रुभिः पीड्यमानस्य शत्रुपीडानिवृत्त्याख्यप्रयोजनसिद्ध्यर्थमसत्यामपि वा तत्काले पीडायामागामिशत्रुपीडनशङ्कया अमुकमयं महाबलं नृपतिमाश्रितइति सर्व्वत्र व्यपदेशोत्पादनार्थं बलवन्तमुपाश्रयणमेवं द्विविधः संश्रयः स्मृतः॥ १६८॥

यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः। तदात्वे चाल्पिकाम्पीडां तदा सन्धिं समाश्रयेत्॥ १६९॥

यदेत्यादि। यदा युद्धोत्तरकाले निश्चितमात्मनआधिक्यं जानीयात्तदात्वे तत्काले अल्पधनाद्युपचयः तदाल्पमङ्गीकृत्यापि सन्धिमाश्रयेत्॥ १६९॥

यदा प्रकृष्टामन्येत सर्व्वास्तु प्रकृतीर्भृशम्। अत्यु च्छ्रितन्तथात्मानं तदा कुर्व्वीत विग्रहम्॥ १७०॥

यदेति। यदाऽमात्यादिकाः सर्व्वाः प्रकृतीः दानसम्माना द्यैरतीव तुष्टामन्येत आत्मानञ्च हस्त्यश्वकोषाद्यैः शक्तित्रयेण उपचितं तदा विग्रहमाश्रयेत्॥ १७०॥

यदा मन्येत भावेन हृष्टम्पुष्टं बलं स्वकम्। परस्य विपरीतञ्च तदा यायाद्रिपुम्प्रति॥ १७१॥

यदेत्यादि। यदात्मीयममात्यादिसैन्यं हर्षयुक्तन्धनादिना पुष्टन्त्वतोजानीयात् शत्रोश्चामात्यादिबलं विपरीतन्तदा तं लक्षीकृत्य यायात्॥ १७१॥

यदा तु स्यात्परिक्षीणोवाहनेन बलेन च। तदा सीत प्रयत्नेन शनकैः सान्त्वयन्नरीन्॥ १७२॥

यदेत्यादि। यदा पुनर्वाहनेन हस्त्यश्वादिना बलेन चामा त्यादिना परिक्षीणोभवेत्तदाशनैः शनैः सामोपदानप्रदाना दिना शत्रून् प्रसान्त्वयन् प्रयत्नेनासनमाश्रयेत्॥ १७२॥

मन्येतारिं यदा राजा सर्व्वथा बलवत्तरम्।
तदा द्विधा बलं कृत्वा साधयेत्कार्य्यमात्मनः॥१७३॥

मन्येतेति। यदा राजा सर्व्वप्रकारेण बलीयांसमशक्य सन्धानञ्च शत्रुमुद्धोत तदा कतिचिद्दलसहितः स्वयं दुर्ग माश्रयेत् बलैकदेशेन च शत्रुविरोधमाचरेत्। एवं द्विधाबलं कृत्वा मित्रसंग्रहादिकं स्वकार्य्यं साधयेत् ॥ १७३ ॥

यदा परबलानान्तु गमनीयतमोभवेत्। तदा तु संश्रयेत्क्षिप्रन्धार्म्मिकं बलिनं नृपम् ॥ १७४ ॥

यदेति। यदा तु सैन्यानाममात्यादिप्रकृतिदोषादिनातिशयेन ग्राह्योभवति बलं द्वैधम्विधाय दुर्गाश्रयणेनापि नात्मरक्षाक्षमः तदा शीघ्रमेव धार्म्मिकम्बलवन्तञ्च राजानमाश्रयेत् ॥ १७४ ॥

निग्रहं प्रकृतीनाञ्च कुर्य्याद्योरिबलस्य च। उपसेवेत तन्नित्यं सर्व्वयत्नैर्गुरुं यथा ॥ १७५ ॥

कीदृशन्तं बलवन्तमित्याह निग्रहमिति। यासान्दोषेणासौ गमनीयतमोजातस्तासां प्रकृतीनां यस्माच्च शत्रुबलादस्य

भयमुत्पन्नं तयोर्द्वयोरपि यः संश्रितोऽस्ति यद्बलमस्तं नृपं सर्व्व यत्नैर्गुरुमिव नित्यं सेवेत ॥ १७५ ॥

यदि तत्रापि सम्पश्येद्दोषं संश्रयकारितम्।
सुयुद्धमेव तत्रापि निर्व्विशङ्कः समाचरेत् ॥ १७६ ॥

यदीति । अगतिका हि गतिः संश्रयो नाम तत्रापि यदि संश्रयकृतन्दोषम्पश्येत्तदा निःसंशयो भूत्वा शोभनमेव युद्धं तस्मिन् काले समाचरेत् दुर्व्वलेनापि बलवतो जयदर्शनात् निहतस्य च स्वर्गप्राप्तेः ॥ १७६ ॥

सर्व्वोपायैस्तथा कुर्य्यान्नीतिज्ञः पृथिवीपतिः।
यथास्याभ्यधिका न स्युर्मित्रोदासीनशत्रवः ॥ १७७ ॥

सर्व्वोपायैरिति । सर्व्वैः सामादिभिरुपायैः नीतिज्ञो राजा तथा यतेत यथास्य मित्रोदासीनशत्रवोऽभ्यधिका न भवन्ति आधिक्ये हि तेषामसौ ग्राह्यो भवति धनलोभेन मित्रस्यापि शात्रवापत्तेः ॥ १७७ ॥

आयतिं सर्व्वकार्य्याणान्तदात्वञ्च विचारयेत्।
अतीतानाञ्च सर्व्वेषां गुणदोषौ च तत्त्वतः ॥ १७८ ॥

आयतिरिति । सर्व्वेषां कार्य्याणामल्पानां बहूनामपि आयतिमुत्तरकालं गुणन्दोषं विचारयेत् । वर्त्तमानकालञ्च

शीघ्रसम्पादनाद्यर्थं विचारयेत्। अतीतानाञ्च सर्व्वकार्य्याणां गुणदोषौ किमेषां कृतं विघटितं किम्वावशिष्टमित्येवं यथावद्विचारयेत्॥ १७८॥

आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः। अतीते कार्य्यशेषज्ञः शत्रुभिर्न्नाभिभूयते ॥ १७९॥

यस्मात् आयेति। यः कार्य्याणां आगामिकालगुणदोषज्ञः स गुणवत्कार्य्यमारभते दोषवत्परित्यजति यश्च वर्त्तमान काले क्षिप्रमेवावधार्य्य कार्य्यं करोति अतीते च कार्य्ये यः कार्य्य शेषज्ञः स तत्कार्य्यसमाप्तौ तत्फलं लभते यस्मादेवम्विधकालत्रय सावधानत्वान्न कदाचित् शत्रुभिरभिभूयते॥ १७९॥

यथैनन्नाभिसन्दध्युर्मित्रोदासीनशत्रवः। तथा सर्व्वं संविदध्यादेषसामासिकोनयः॥ १८०॥

किं वहुना यथेत्यादि। यथैनं राजानं मित्रादयउक्ता न बाधेरन् तथा सर्व्वसम्बिधानं कुर्य्यात् इत्येषसांक्षेपिकोनयोनीतिः॥ १८०॥

यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति प्रभुः। तदानेन विधानेन यायादरिपुरं शनैः॥ १८१॥

यदेति। यदा पुनः शक्तः सन् शत्रुराष्ट्रं प्रति यात्रामारभेत्तदा अनेन वक्ष्यमाणप्रकारेण शत्रुदेशमत्वरमाणोगच्छेत् ॥ १८१॥

मार्गशीर्षे शुभे मासि यायाद्यात्रां महीपतिः।
फाल्गुनं वाथ चैत्रं वा मासौ प्रति यथाबलम्॥१८२॥

मार्गशीर्षइति। यस्तुरङ्गबलोपेतोराजा करिरथादि गमनविलम्बेन विलम्बितप्रयाणः तथा हैमन्तिकशस्यवहुलञ्च परराष्ट्रं जिगमिषुः स स्वगमनाय शोभने मार्गशीर्षे मासि यात्रां कुर्य्यात्। यः पुनरश्वबलप्रायोनृपतिः शीघ्रगतिर्व्वसन्तशस्यवहुलं परराष्ट्रं यियासुः स फाल्गुने चैत्रे वा मासे स्वबलयोग्यकालानतिक्रमेण यायात्। अतएव मन्वर्थव्याकारपरं रूपेण याज्ञवल्क्यवचनं। यदाशस्यगुणोपेतम्परराष्ट्रं तदा व्रजेत्॥ १८२ ॥

अन्येष्वपि तु कालेषु यदापश्येद्ध्रुवञ्जयम्। तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः॥ १८३॥

अन्येष्विति। उक्तकालव्यतिरिक्तेषु यदात्मनोनिश्चितं जयमवगच्छेत् तदा स्वबलयोग्यकाले ग्रीष्मादावपि हस्त्यश्वादि बलप्रायोविगृह्यैव यात्रां कुर्य्यात्। शत्रोस्वामात्यादिप्रकृतिगोचरदण्डपारुष्यादिव्यसने जातेऽरिपत्तभूतायां तत्प्रकृतावपि उक्तकालादन्यत्रापि यायात्॥ १८३॥

कृत्वा विधानम्मूले तु यात्रिकञ्च यथाविधि ।
उपगृह्यास्पदञ्चैव चारान्सम्यग्विधाय च ॥ १८४ ॥
संशोध्य त्रिविधं मार्गं षड्विधञ्च बलं स्वकम् ।
साम्परायिककल्पेन यायादरिपुरं शनैः ॥ १८५ ॥

कृत्वेत्यादि ।' संशोध्येति । मूले स्वीयदुर्गराष्ट्ररूपे पार्ष्णिग्राहसंविधानप्रधानपुरुषाधिष्ठितरक्षाक्षमसैन्यैकदेशस्थापनरूपम्प्रतिधानं कृत्वा यात्रोपयोगि च वाहनायुधवर्म्मयात्राविधानं यथाशास्त्रं कृत्वा परमण्डलगतस्य च येनास्यावस्थानम्भवति तदुपगृह्य तदीयान् भृत्यपक्षानात्मसात्कृत्वा चारांश्च कापटिकादीन् शत्रुदेशवार्त्ताज्ञापनार्थम्प्रस्थाप्य सम्यक्कृतया जाङ्गलानूपाटविकविषयभेदेन त्रिविधं पन्थानं मार्गं शोधिततरुगुल्मादिच्छेदनिम्नोन्नतादिसमीकरणादिना संशोध्य तथा हस्त्यश्वरथपदातिसेनाकर्म्मकरात्मकं षड्विधं बलं यथोपयोगमाहारौषधसत्कारादिना संशोध्य साम्परायिकं सम्परायः संग्रामः तदुचितविधिना शत्रुदेशमत्वरया गच्छेत् ॥ १८४ ॥ ॥ १८५ ॥

शत्रुसेविनि मित्रे च गूढे युक्ततरोभवेत् । गतप्रत्यागते चैव स हि कष्टतरोरिपुः ॥ १८६ ॥

शत्रुसेविनीति ।' यन्मित्रं गूढं कृत्वा शत्रुं सेवते यश्च भृत्यादिः

पूर्व्वं विरागाद्गतः पश्चादागतः तयोः सावधानोभवेत्। यस्मा त्तावतिशयेन दुर्न्निग्रहोरिपुः॥ १८६॥

**दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा। वराह मकराभ्यां वा सूच्या वां गरुडेन वा॥ १८७॥**

दण्डेति। दण्डाकृतिव्यूहरचनादिर्दण्डव्यूहः एवं शकटादिव्यूहाअपि तत्राग्रे बलाध्यक्षोमध्येराजा पश्चात्सेनापतिः पार्श्वयोर्हस्तिनस्तत्समीपे घोटकाः ततःपदातयः इत्येवं कृत रचनोदीर्घः सर्व्वतः समविन्यासोदण्डव्यूहस्तेन तद्यातव्यं मार्गं सर्व्वतोभये सति यायात्। सूच्याकाराग्रः पश्चात्पृथुलः शकटव्यूहस्तेन पृष्ठतोभये सति गच्छेत्। सूक्ष्ममुखपश्चाद्भागः पृथुमध्यावराहव्यूहः एषएवपृथुतरमध्योगरुडव्यूहः ताभ्याम्पार्श्वयोर्भये सति व्रजेत्। वराहविपर्य्ययेन मकरव्यूहः तेनाग्रे पश्चाच्च उभयत्र भये सति गच्छेत् पिपीलिकापङ्क्तिरिव अग्रपश्चाद्भावेन संहतरूपतया यत्रयत्र सैनिकावस्थानं स शीघ्रप्रवीरपुरुषमुखः सूचीव्यूहः तेनाग्रतोभये सति यायात्॥ १८७॥

**यतश्च भयमाशङ्केत्ततोविस्तारयेद्दलम्। पद्मेन चैव व्यूहेन निविशेत सदा स्वयम्॥ १८८॥**

यतइत्यादि। यस्यादिशः शत्रुभयमाशङ्केत तस्यामेवात्म

बलं विस्तारयेत् समविस्तृतपरिमण्डलोमध्योपविष्टजिगीषुः पद्मं व्यूहः तेन पुरान्निर्गत्य सर्व्वदा कपटनिवेशनं कुर्य्यात् ॥ १८८ ॥

सेनापतिबलाध्यक्षौ सर्व्वदिक्षु निवेशयेत्।
यतश्च भयमाशङ्केत्प्राचीन्तां कल्पयेद्दिशम् ॥ १८९ ॥

सेनापतीति। हस्त्यश्वरथपदात्यात्मकस्याङ्गदशकस्यैकः पतिः कार्य्यः सच पत्तिकउच्यते पत्तिकदशकस्यैकः पतिः सेनापतिरुच्यते तद्दशकस्यैकः सेनानायकः स एवच बलाध्यक्षः तौसेनापतिबलाध्यक्षौ समस्तासु दिक्षु संघर्षयुद्धार्थं नियोजयेत्। यस्याश्च दिशोयदा भयमाशङ्केत्तदा तामग्रे दिशं कुर्य्यात् ॥ १८९ ॥

गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान्समन्ततः।
स्थाने युद्धे च कुशलानभीरूनविकारिणः ॥ १९० ॥

गुल्मानित्यादि। गुल्मान्सैन्यकदेशान् आप्तपुरुषाधिष्ठितान् स्थानापसरणयुद्धार्थं कृतभेरीपटहशंखादिसङ्केतान् अवस्थानयुद्धयोः प्रवीणान्निर्भयान् अव्यभिचारिणः सेनापतिबलाध्यक्षान् दूरतः सर्व्वदिक्षु पारक्यप्रवेशवारणाय शत्रुचेष्टापरिज्ञानाय च नियोजयेत् ॥ १९० ॥

संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून्।
सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत्॥१९१॥

संहतेति। अल्पान् योधान्संहतान् कृत्वा बहून्पुनर्यथेष्टं विस्तारयेत्। सूच्या पूर्वोक्तया वज्राख्येन व्यूहेन त्रिधाव्यव स्थितबलेन रचयित्वा योधान् योधयेत्॥ १९१॥

स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा। वृक्षगुल्मावृते चापैरसिचर्म्मायुधैः स्थले॥ १९२॥

स्यन्दनाश्वैरित्यादि। समभूभागे रथाश्वेन युद्ध्येत तत्र तेन युद्धसामर्थ्यात् तथानुगतोदके नौकाहस्तिभिः तरुगुल्मावृते धन्विभिर्गर्त्तकण्टकपाषाणादिरहितस्थले खड्गफलककुन्ताद्यैरायुधैर्युध्येत॥ १९२॥

कुरुक्षेत्रांश्च मत्स्यांश्च पञ्चालान् शूरसेनजान्।
दीर्घांल्लघूंश्चैव नरानग्रानीकेषु योधयेत् ॥ १९३॥

कुरुक्षेत्रानिति। कुरुक्षेत्रभवान्मात्स्यान् विराटदेशनिवासिनः पञ्चालान् कान्यकुब्जाहिच्छत्रोद्भवान् शूरसेनजान् माथुरान प्रयेण पृथुशरीरशौर्य्याहंकारयोगात् सेनाग्रे योध

येत् तथान्यदेशोद्भवानपि दीर्घलघुदेहान् मनुष्यान् युद्धाभि मानिनः सेनाग्र एव योजयेत् ॥ १९३ ॥

प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत्। चेष्टाश्चैव विजानीयादरीन् योधयतामपि ॥ १९४ ॥

प्रहर्षयेदित्यादि। बलं रचयित्वा जये धर्मलाभः अभिमुखहतस्य स्वर्गप्राप्तिः पलायने तु प्रभुदुरितग्रहणं नरकगमनञ्च इत्याद्यर्थवादैः युद्धार्थमोत्साहयेत् तांश्च योधान् केनाभिप्रायेण हृष्यन्ति कुप्यन्ति वेति परीक्षयेत् तथा योधानामरिभिः सह युध्यमानानामपि सोपध्यनुपधिचेष्टा बुध्येत ॥ १९४ ॥

उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत्। दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥ १९५ ॥

उपेत्यादि। दुर्गाश्रयमदुर्गाश्रयं वा रिपुमयुध्यमानमप्यावेष्ट्यासीत अस्य च देशमुत्सादयेत् तथा घासान्नोदकेन्धनानि सर्व्वदाऽस्यापद्रव्यसम्मिश्रणादिना दूषयेत् ॥ १९५ ॥

भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा। समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा ॥ १९६ ॥

भिन्द्यादित्यादि। शत्रोरुपजीव्यानि तडागादीनि नाशयेत् तथादुर्गप्राकारादीन भिन्द्यात् तत्परिखाश्च भेदनपूरणा

दिना निरुदकाः कुर्य्यात् एवञ्च शत्रूनशङ्कितमेव सम्यगव स्कन्दयेत् तथा शक्तिं गृह्णीयात् रात्रौ च ढक्काकाहलिकादि शब्देन वित्रासयेत् ॥ १९६ ॥

उपजप्यानुपजपेद्बुध्येतैव च तत्कृतम्। युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः ॥ १९७ ॥

तदानीञ्च उपेत्यादि। उपजापार्हान् रिपुवंश्यान् राज्यार्थिनः क्षुब्धानमात्यादींश्च भेदयेत् उपजपेनात्मीय हृतानाञ्च तेषाञ्चेष्टां जानीयात् शुभग्रहदशादिना शुभ फलयुक्ते दैवेऽवगते निर्भयो जयेप्सुर्य्युध्येत् ॥ १९७ ॥

साम्ना दानेन भेदेन समस्तैरथ वा पृथक्। विजेतुं प्रयतेतारीन्न युद्धेन कदाचन ॥ १९८ ॥

साम्नेत्यादि। प्रीत्यादरदर्शनहितकथनाद्यात्मकेन साम्ना हस्त्यश्वरथहिरण्यादीनाञ्च दानेन तत्प्रकृतीनान्तदनुयायि नाञ्च राज्यार्थिनाम्भेदेन एतैः समस्तैर्व्यस्तैर्व्वा यथासामर्थ्यम रीन् जेतुं यत्नं कुर्य्यात् न पुनः कदाचिद्युद्धेन ॥ १९८ ॥

अनित्योविजयोयस्माद्दृश्यते युध्यमानयोः। पराजयश्च संग्रामे तस्माद्युद्धं विवर्ज्जयेत्॥ १९९ ॥

अनित्येति। यस्माद्युद्ध्यमानयोर्बहुलबलत्वादल्पबलत्वादनपेचमेवानियमेन जयपराजयौ दृश्येते तस्मात्सत्युपायान्तरे युद्धम्परिहरेत्॥ १९९ ॥

त्रयाणामप्युपायानां पूर्व्वोक्तानामसम्भवे। तथा युध्येत संयत्तोविजयेत रिपून् यथा॥ २०० ॥

त्रयाणामित्यादि। पूर्व्वोक्तानान्त्रयाणामपि सामादीनामुपायानामसाधकत्वे सति जयपराजयसन्देहेपि तथाप्रयत्नवान् सम्यग्युध्येत यथा शत्रून् जयेत् यतोजयेऽर्थलाभोऽभिमुखमरणं च स्वर्गप्राप्तिः। निःसन्दिग्धे तु पराजये युद्धादपसरणं साधीयो यथा वक्ष्यति आत्मा तु सर्व्वदा रक्ष्यइति मेधातिथिगोविन्दराजौ ॥ २०० ॥

जित्वा सम्पूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान्। प्रदद्यात्परिहारांश्च ख्यापयेदभयानि च॥ २०१ ॥

जित्वेति। परराष्ट्रञ्जित्वा तत्र ये देवाः तान् धर्म्मप्रधानांश्च ब्राह्मणान् भूमिसुवर्णादिदानसम्मानादिभिः पूजयेत् जितद्रव्यैकदेशदानादिनैव चेदम्पूजनं तदाह याज्ञवल्क्यः। नातः

परतरोधर्म्मोनृपाणां यद्रणार्जितं। विप्रेभ्योदीयते द्रव्यम्प्रजाभ्यश्चाभयं सदा। तथा देवब्राह्मणार्थं मयैतद्दत्तमिति तद्देशवासिनाम्परिहारान् दद्यात्। तथा स्वामिभक्त्या यैरस्माकमपकृतन्तेषां मयाक्षान्तमिदानीन्निर्भयाः सन्तः सुखं स्वव्यापारमनुतिष्ठन्त्विति अभयाणि ख्यापयेत्॥ २०१॥

सर्व्वेषान्तु विदित्वैषां समासेन चिकीर्षितम्।
स्थापयेत्तत्र तद्वंश्यं कुर्य्याच्च समयक्रियाम्॥ २०२॥

सर्व्वेषामिति। एषां शत्रुनृपामात्यानां सर्व्वेषामेव संक्षेपतोऽभिप्रायं ज्ञात्वा तस्मिन् राष्ट्रे बलनिहतराजवंश्यमेव राज्येऽभिषेचयेत् इदं कार्य्यन्त्वया इदन्नेति तस्य तदमात्यानाञ्च नियमं कुर्य्यात्॥ २०२॥

प्रमाणानि च कुर्व्वीत तेषां धर्म्मान् यथोदितान्।
रत्नैश्च पूजयेदेनम्प्रधानपुरुषैः सह॥ २०३॥

प्रमाणानीति। तेषाञ्च परकीयानान्धर्म्मादनपेतानाचारान् देशधर्म्मतया शास्त्रेणाभ्युपेतान् प्रमाणीकुर्य्यात्। एनञ्चाभिषिक्तममात्यादिभिः सह रत्नादिदानेन पूजयेत्॥ २०३॥

आदानमप्रियकरन्दानञ्च प्रियकारकम्।
अभीप्सितानामर्थानां काले युक्तं प्रशस्यते ॥ २०४ ॥

यस्मात् आदानमिति। यद्यप्यभिलषितानान्द्रव्याणां ग्रहणं अप्रियकरं दानञ्च प्रियकारकमित्युत्सर्गः तथापि समयविशेषे दानमादानञ्च प्रशस्यते तस्मात्तस्मिन् कालएवं पूजयेत् ॥ २०४ ॥

सर्व्वं कर्म्मेदमायत्तं विधाने दैवमानुषे। तयो
र्दैवमचिन्त्यन्तु मानुषे विद्यते क्रिया ॥ २०५ ॥

सर्व्वमित्यादि। यत्किञ्चित्सम्पाद्यन्तत् प्राग्जन्मार्जित सुकृतदुष्कृतरूपे कर्म्मणी दैवशब्दाभिधेये तथेह लोकार्ज्जित मानुषशब्दवाच्ये व्यापारआयत्तं तयोर्मध्ये दैवं चिन्तयितुमशक्यं मानुषे तु पर्य्यालोचनमस्ति अतोमानुषद्वारेणैव कार्य्य सिद्धये यतितव्यम् ॥ २०५ ॥

सह वापि व्रजेद्युक्तः सन्धिं कृत्वा प्रयत्नतः। मित्रं
हिरण्यम्भूमिं वा सम्पश्यं स्त्रिविधं फलम् ॥ २०६ ॥

सहेत्यादि। एवमुपक्रमणीयेन प्रभुणा युद्धं कार्य्यं यदि वा सएव मित्रं तेन च दत्तं हिरण्यभूम्येकदेशोवार्पितं एतत्त्रयं यात्राफलम् मत्वा तेन सह सन्धिं कृत्वा यत्नवान् व्रजेत् ॥ २०६ ॥

पार्ष्णिग्राहञ्च संप्रेक्ष्य तथाक्रन्दञ्च मण्डले।
मित्रादथाप्यमित्राद्वा यात्राफलमवाप्नुयात्॥२०७॥

पार्ष्णिग्राहमित्यादि। विजिगीषोररिम्प्रति निर्यातस्य यः पृष्ठवर्त्ती नृपतिः देशाक्रमणाद्याचरति स पार्ष्णिग्राहः तस्य तथाकुर्वतो योनियामकः तस्यानन्तरोनृपतिः स आक्रन्दः। तावपेक्ष्य यातव्यं। मित्रीभूतादमित्राद्वा यात्राफलं गृह्णीयात्तावनपेक्ष्य गृह्णन् कदाचित्तत्कृतेन दोषेण गृह्यते॥२०७॥

हिरण्यभूमिसंप्राप्त्या पार्थिवो न तथैधते। यथा मित्रं ध्रुवं लब्ध्वा कृशमप्यायतिक्षमम्॥ २०८॥

हिरण्यभूमीति। सुवर्णभूमिलाभेन तथा राजा न वृद्धिमेति यथेदानीं कृशमप्यागामिकाले वृद्धियुतं स्थिरं मित्रं लब्ध्वा वर्द्धते॥२०८॥

धर्म्मज्ञञ्च कृतज्ञञ्च तुष्टप्रकृतिमेव च। अनुरक्तं स्थिरारम्भं लघुमित्रम्प्रशस्यते॥ २०९॥

धर्म्मज्ञमिति। धर्म्मज्ञं कृतोपकारस्य स्मर्त्तारमनुरागमनुरक्तं स्थिरकार्य्यारम्भं प्रीतिमत्प्रकृतिकं यत्तन्मित्रमतिशयेन प्रशस्यते॥२०९॥

प्राज्ञं कुलीनं शूरञ्च दक्षं दातारमेव च। कृतज्ञन्धृतिमन्तञ्च कष्टमाहुररिं बुधाः॥ २१०॥

प्राज्ञमित्यादि। विद्वांसं महाकुलं विक्रान्तं चतुरं दातारं उपकारस्मर्त्तारं सुखदुःखयोरेकरूपं शत्रुं दुरुच्छेदम्पण्डिता वदन्ति तेनैवंविधशत्रुणा सह सन्धातव्यम्॥ २१०॥

आर्य्यता पुरुषज्ञानं शौर्य्यं करुणवेदिता। स्थौललक्ष्यञ्च सततमुदासीनगुणोदयः॥ २११॥

आर्य्यतेत्यादि। साधुत्वम्पुरुषविशेषज्ञता विक्रान्तत्वं कृपालुत्वं सर्वदा च स्थौललक्ष्यम्बहुप्रदत्वं अतएव स्युर्वदान्यः स्थूललक्षदानशौण्डावहुप्रदे इत्याभिधानिकाः। स्थौललक्ष्यमर्थं अस्तत्त्वदर्शितत्वमितितु मेधातिथिगोविन्दराजयोः पदार्थकथनमनागमं। एतदुदासीनगुणसामर्थ्यं तस्मादेवं विधमुदासीनमाश्रित्य उक्तलक्षणेनाप्यरिणा सह योद्धव्यम्॥ २११॥

क्षेम्यां शस्यप्रदां नित्यं पशुवृद्धिकरीमपि। परित्यजेत् नृपोभूमिमात्मार्थमविचारयन्॥ २१२॥

क्षेम्यामिति। अनामयादिकल्याणक्षमामपि नदीमातृकतया सर्व्वदा सर्व्वशस्यप्रदामपि प्रचुरतृणादियोगात्पशुवृद्धि

करीमपि भूमिमात्मरक्षार्थं अविलम्बमानोराजा निजरक्षा प्रकारान्तराभावात्परित्यजेत् ॥ २१२ ॥

आपदर्थं धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ २१३ ॥

यस्मात्सर्व्वविषयोयन्धर्म्मः स्मर्य्यते आपदर्थमित्यादि। आपन्निवारणार्थन्धनं रक्षणीयं धनपरित्यागेनापि दारान् रक्षेत् आत्मानं पुनः सर्व्वदा दारधनपरित्यागेनापि रक्षेत्सर्न्तएवात्मानङ्गोपायीत इतिश्रुत्या शास्त्रीयमरणव्यतिरेकेणात्मरक्षा इत्युपदेशात् ॥ २१२ ॥

सहसर्व्वाः समुत्पन्नाः प्रसमीक्ष्यापदोभृशम्।
संयुक्तांश्च वियुक्तांश्च सर्व्वोपायान् सृजेद्बुधः ॥२१४॥

सहेत्यादि। कोषक्षयप्रकृतिकोपमित्रव्यसनादिकाः सर्व्वाआपदोयुगपदतिशयेन उत्पन्नाज्ञात्वा न मोहमुपेयात् अपितु व्यस्तान्समस्तान्वा सामादीनुपायान् शास्त्रज्ञः संप्रयुञ्जीत ॥ २१४ ॥

उपेतारमुपेयञ्च सर्व्वोपायांश्च कृत्स्नशः। एत त्त्रयं समाश्रित्य प्रयतेतार्थसिद्धये ॥ २१५ ॥

उपेतारमिति। उपेतारं आत्मानं उपेयं प्राप्तव्यं उपायाः सामादयः सर्व्वे ते च परिपूर्णा एतत्त्रयमवलम्ब्य यथासामर्थ्यं प्रयोजनसिद्धये यत्नं कुर्य्यात् ॥ २१५ ॥

एवं सर्व्वमिदं राजा सह सन्मन्त्र्य मन्त्रिभिः। व्यायाम्याप्लुत्य मध्याह्ने भोक्तुमन्तः पुरं विशेत् ॥ २१६ ॥

एवमिति। एवमुक्तप्रकारेण सर्व्वराजवृत्तं मन्त्रिभिः सह विचार्य्य अनन्तरमायुधाभ्यासादिना व्यायामं कृत्वा मध्याह्ने स्नानादिकमाध्याह्निकं कृत्यं निर्व्वाह्य भोक्तुमन्तःपुरं विशेत् ॥ २१६ ॥

तत्रात्मभूतैः कालज्ञैरहार्य्यैः परिचारकैः। सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः ॥ २१७ ॥

तत्रेति। तत्रान्तःपुरे आत्मतुल्यैर्भोजनकालवेदिभिरभेद्यैः सूपकारादिभिः कृतं सुष्ठु च परीक्षितञ्चकोरादिदर्शनेन सविषमन्नं दृष्ट्वा चकोराक्षिणी रक्ते भवत इति विषापहैर्मन्त्रै र्जपितमन्नमद्यात् ॥ २१७ ॥

विषघ्नैरगदैश्चास्य सर्व्वद्रव्याणि योजयेत्।
विषघ्नानि च रत्नानि नियतोधारयेत्सदा ॥२१८॥

विषघ्नैरिति। विषनाशिभिरौषधैः सर्व्वाणि भोज्यद्रव्याणि योजयेत् विषहरणानिच रत्नानि यत्नवान्सर्व्वदा धारयेत् ॥ २१८ ॥

परीक्षिताः स्त्रियश्चैनं व्यजनोदकधूपनैः। वेषाभरणसंशुद्धाः स्पृशेयुः सुसमाहिताः ॥ २१९ ॥

परीक्षिताइति। स्त्रियश्च गूढचारद्वारेण कृतपरीक्षा गुप्तायुधग्रहणविषलिप्ताभरणधारणाशङ्कया निरूपितवेषाभरणाश्चानन्यमनसः चामरस्नानपानाद्युदकधूपनैः एनं राजानम्परिचरेयुः ॥ २१९ ॥

एवम्प्रयत्नं कुर्वीत यानशय्यासनाशने। स्नाने प्रसाधने चैव सर्व्वालङ्कारकेषु च ॥ २२० ॥

एवमिति। एवंविधपरीक्षादिप्रयत्नं वाहनशय्यासनाशनस्नानानुलेपनेषु सर्व्वेषु चालङ्करणार्थेषु कुर्य्यात् ॥ २२० ॥

भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे सह। विहृत्य तु यथाकालम्पुनः कार्य्याणि चिन्तयेत् ॥ २२१ ॥

भुक्तवानिति। कृतभोजनश्च तत्रैवान्तःपुरे भार्य्याभिः

सह क्रीडेत् कालानतिक्रमेण च सप्तमे दिवसस्य भागे तच्च विहृत्याष्टमं भागं पुनः कार्य्याणि चिन्तयेत् ॥ २२१ ॥

अलङ्कृतश्च सम्पश्येदायुधीयम्पुनर्जनम्। वाहनानि च सर्व्वाणि शस्त्राण्याभरणानि च ॥ २२२ ॥

अलङ्कृत इति। कृतालङ्कारः सन्नायुधजीविनं वाहनानि हस्त्यश्वादीनि सर्व्वाणि च शस्त्राणि खड्गादीनि अलङ्काररचनादीनि पश्येत् ॥ २२२ ॥

सन्ध्याञ्चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत्। रहस्याख्यायिनाञ्चैव प्रणिधीनाञ्च चेष्टितं ॥२२३॥

गत्वा कक्षान्तरन्त्वन्यत्समनुज्ञाप्य तज्जनम्। प्रविशेद्भोजनार्थञ्च स्त्रीवृतोऽन्तःपुरम्पुनः ॥ २२४ ॥

सन्ध्यामिति। गत्वेति। ततः सन्ध्योपासनं कृत्वा तस्मात्प्रदेशात्कक्षान्तरं विविक्तप्रकोष्ठावकाशमन्यद्गत्वा गृहाभ्यन्तरे धृतशस्त्रो रहस्याभिधायिनां, चराणां स्वव्यापारं शृणुयात्ततस्तञ्चरं सम्प्रेष्य परिचारिकस्त्रीवृतः पुनर्भोक्तुमन्तःपुरं विशेत् ॥ २२३ ॥ ॥ २२४ ॥

तत्र भुक्त्वा पुनःकिञ्चित्तूर्य्यघोषैः प्रहर्षितः।
संविशेत्तु यथाकालमुत्तिष्ठेच्च गतक्लमः॥ २२५ ॥

तत्रेत्यादि। तत्रान्तःपुरे वादित्रशब्दैः श्रुतिसुखैः प्रहर्षितः पुनः किञ्चिद्भुक्त्वा नातिदृप्तः कालानतिक्रमेण गतसार्द्धप्रहरायां रात्रौ स्वप्यात्। ततोरात्रेः पश्चिमयामे च विश्रान्तः सन्नुत्तिष्ठेत्॥ २२५ ॥

एतद्विधानमातिष्ठेदरोगः पृथिवीपतिः।
अस्वस्थः सर्व्वमेतत्तु भृत्येषु विनियोजयेत्॥ २२६ ॥

इतिमानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां राजधर्म्मोनाम सप्तमोऽध्यायः॥

एतदिति। एतद्यथोक्तप्रजारक्षणादिकं नीरोगोराजा स्वयमनुतिष्ठेत्। अस्वस्थः पुनः सर्व्वमेतद्योग्यश्रेष्ठामात्येषु समर्पयेत॥ २२६ ॥

इतिश्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां सप्तमोऽध्यायः॥